श्रीदण्डिकविविरचितं

# दशकुमारचरितम् ।

मूल्यं ४ रूप्यकम् ।

Nigam Sharma

# THE DAŚAKUMĀRACHARITA

OF

# DAṆḌIN

WITH

Four Commentaries—the Padadīpikā, the Padachandrikā, the Bhūṣaṇā and the Laghudīpikā.



Edited with various readings

BY

NĀRĀYAṆA BĀLKṚIṢṆA GODBOLE, B. A.

Fourteenth Edition.

REVISED BY

NĀRĀYAṆ RĀM ĀCHĀRYA "KĀVYATĪRTH"

WITH CO-OPERATION OF THE S'ĀSTRIMAṆḌALA.

PUBLISHED BY

PĀṆḌURANG JĀWAJĪ,

PROPRIETOR OF THE 'NIRṆAYA-SĀGAR' PRESS,

BOMBAY.

1940.



Price 1½ Rupees.



श्रीदण्डिकविविरचितं

# दशकुमारचरितम् ।

[ पूर्वोत्तरपीठिकासहितम् । ]

पददीपिका—पदचन्द्रिका—भूषणा—लघुदीपिकाख्य-
व्याख्याचतुष्कसमेतम् ।



नारायण बाळकृष्ण गोडबोले बी. ए.
इत्यनेन पूर्वसंस्कृतस्यास्य
चतुर्दशं संस्करणम्
नारायण राम आचार्य 'काव्यतीर्थ' इत्यनेन
शास्त्रिमण्डलसाहाय्येन संशोधितम् ।



तच्च
मुम्बय्यां
पाण्डुरङ्ग जावजी इत्येतैः,
स्वीये निर्णयसागरमुद्रणयन्त्रालयेऽङ्कयित्वा
प्राकाश्यं नीतम् ।



शाके १८६२, सन १९४०.

मूल्यं १॥ पादोनरूप्यकद्वयम् ।



श्रीः ।

## १८८९ तमे ख्रिस्ताब्दे मुद्रितद्वितीयावृत्तेः

# प्रस्तावना ।

न हि न विदितं गैर्वाणीविज्ञैः 'कविर्दण्डिः कविर्दण्डिः कविर्दण्डिर्न संशयः ।' इति वाग्देवीप्रसादितकवित्वपदवीमधिष्ठितेन महाकविना दण्डिनाम्ना निर्मितदशकुमारचरितमनुदिनं वाग्विलासरसिकैः पठ्यते पाठ्यते चेति । तच्चेदं चरितं बहुशो मुद्रणमधिकृत्य प्रकाशितमासीत् । अस्य चाङ्ग्लेयटिप्पणीभिः सह प्रथममुद्रणप्रकाशने १८४६ तमे ख्रिस्ताब्दे लण्डन्नगर्यां **प्रोफेसर् होरेस् हेमन् उइल्सन्**महाशयै राजाश्रयेण बभूवतुः । पश्चात्कलिकातानगर्यां **बाबू भवनचन्द्र वैसाक**महाशयैः १८६८,१८७० तमे च ख्रिस्ताब्दे केवलं मूलमेवाङ्कितम् । तदनु प्रायशो १८७३ तमे ख्रिस्ताब्दे **प्रोफेसर् तारानाथ तर्कवाचस्पति**महाभिज्ञैः काभिश्चित्संस्कृतटिप्पणीभिः सह कलिकातानगर्यामभिनवावृत्त्यङ्कितम् । पूर्वोक्तेषु सर्वेष्वपि संस्करणेषु पूर्वपीठिकायाः पञ्चोच्छ्वासा दशकुमारचरितस्याष्टोच्छ्वासाश्चेत्येतावन्मात्रग्रन्थो वरीवर्ति । मुम्बय्यां १८७२ तमे ख्रिस्ताब्दे डॉ. **बुह्लर**महाशयै राजकीयाश्रयेणाङ्ग्लेयटिप्पणीभिः सहाङ्कितमासीत् । अस्मिंश्च पूर्वपीठिकायाः पञ्चोच्छ्वासा दशकुमारचरितस्य प्रथमत्र्युच्छ्वासाश्चोपलभ्यन्ते, चरमभागस्त्वधुनाप्यप्रकाशित एवास्ति । परं चैतच्चरितमधिकृत्य प्रवृत्तासु **पदचन्द्रिका–भूषणा–सारांशटीका** चेति तिसृषु टीकास्वधिगतास्वपि कश्चिदेवांशो बुह्लरमहाशयैष्टिप्पण्यां प्रदर्शितः । लब्धास्वपि समग्रटीकासु महाशयैः किमिति ता न मुद्रिता इति न ज्ञायते ।

अस्माभिस्तु प्रकाशितावृत्तावुपलब्धानि साधनानि—

**पूर्वपीठिका**—पूर्वोक्तसर्वाण्यप्यङ्कितानि पुस्तकानि, कै. वे. रा. रा. निरन्तरोपाह्वगोविन्दशास्त्रिणां मूलपुस्तकप्रतिकृतिरूपं कै. वे. रा.

रा. खाडिलकरोपाह्व-आपाशास्त्रिभिर्दत्तं पुस्तकं च । गोविन्दशास्त्रिणां मूलपुस्तकं तु बुल्लरमहाशयैर्नीतमिति तैरेवोक्तम् ।

**दशकुमारचरितम्**—पूर्वोक्तसर्वाण्यपि मुद्रितपुस्तकानि, वे. रा. रा. निरन्तरोपाह्वगोविन्दशास्त्रिभिर्दत्तमेकं लिखितपुस्तकं, "बाँबे ब्रँच् ऑफ् धी रॉयल् सोसायटी" इत्यस्याः पुस्तकालये निहितं डॉ. भाऊ दाजीत्येतेषां पुस्तकालयीयं पुस्तकद्वयं च । अनयोर्द्वयोरेकं समग्रमन्यच्चतुर्थोच्छ्वासप्रारम्भावधि च विद्यते ।

**उत्तरपीठिका**—रा. रा. निरन्तरोपाह्वगोविन्दशास्त्रिणां लिखितपुस्तकप्रतिकृतिरूपं रा. रा. खाडिलकरोपाह्व-आपाशास्त्रिभिर्दत्तमेकं लिखितपुस्तकम् । गोविन्दशास्त्रिणां मूलपुस्तकं तु बुल्लरमहाशयैर्नीतमिति तदुक्त्यैवावगम्यते । इदं च प्रकरणमद्यावधि कुत्रापि न मुद्रितमासीत् । अद्यावध्यपूर्णा दशकुमारकथाऽस्मिन्समग्रोपलभ्यते । उपलब्धानां पुस्तकानामशुद्धिभूयिष्ठतया शुद्धान्यपुस्तकलब्धये बहुशः कृतप्रयत्नेऽपि नैवोपलब्धम् । उत्तरपीठिकायाः शुद्धमन्यत्पुस्तकं यद्युपलब्धमभविष्यत्तदेदं परिशुद्धमभविष्यत् । येषां च विदुषां सविधेऽन्यल्लिखितपुस्तकमास्ते ते कृपयाऽस्माकं प्रेषयेयुश्चेदग्रिमावृत्तिसंस्करणे साहाय्यं भवेदित्यलम् । एतत्सर्वं मूलमधिकृत्य निवेदितमिदानीं टीकामधिकृत्योपलब्धान्युपकरणानि प्रदर्श्यन्ते—

**पददीपिका**—इयं च टीका केवलं मूलपीठिकायाः सती पदचन्द्रिकायाः शैल्या केनचिदर्वाचीनेन निर्मितेति प्रतिभाति । इयं त्वस्माभिः पूर्वपीठिकाया अधो निवेशिता ।

**पदचन्द्रिका**—अस्याः पुस्तकमेकं रा. निरन्तरोपाह्वगोविन्दशास्त्रिणां संग्रह उपलब्धम् । अन्यच्च गोविन्दशास्त्रिणः पुस्तकप्रतिकृतिरूपं रा. खाडिलकरोपाह्व-आपाशास्त्रिभिर्दत्तम् । तृतीयं तावत् एल्फिन्स्टन्विश्वविद्यालयस्य पुस्तकालयादस्मन्मित्रैः रा. श्रीधरभाण्डारकरविपश्चिद्भिः प्रेषितम् । इयं च टीकास्माभिर्दशकुमारचरितस्याधो निवेशिता ।

**भूषणा**—अस्याः पुस्तकमेकं रा. निरन्तरोपाह्वगोविन्दशास्त्रिणां संग्रह उपलब्धम्। अन्यच्चैतत्पुस्तकप्रतिकृतिरूपं स्वसंग्रहस्थं रा. खाडिलकरोपाह्व-आपाशास्त्रिभिर्दत्तम् । तृतीयं तावत् एल्फिन्स्टन्विश्वविद्यालयस्य कोशभाण्डागारादस्मन्मित्रवर्यैः रा. श्रीधरभाण्डारकरसुज्ञैः प्रेषितं च । इदमपि गोविन्दशास्त्रिणां पुस्तकप्रतिकृतिरूपमेव । टीकेयमस्माभिः प्रथमपरिशिष्टे विनिहिता ।

**लघुदीपिका**—अस्याः पुस्तकमेकं जयपुरीस्थमित्रवर्यैः कै. पण्डितदुर्गाप्रसादमहाशयैस्तत्रत्यपण्डितसरयूप्रसादमहाशयानां संग्रहात्प्रेषितम्। अस्मिन्नेव पञ्चमोच्छ्वासस्यान्तिमो भागष्षष्ठोच्छ्वासस्यारम्भश्च त्रुटितोऽन्यत्सर्वं समग्रं चास्ति। परंतु मूलं चानेकस्थलेष्वशुद्धमुपलभ्यते । विनान्यपुस्तकप्राप्त्येदं शुद्धं न भवेदेव । टीकैषास्माभिर्द्वितीयपरिशिष्टे दत्ता ।

एवमेव ये सहृदयसद्गृहस्था अस्माकं ग्रन्थादिदानेनान्यविधया चोपाकुर्वन् तेषां च कृतज्ञा भूत्वैवमेव सहृदयसुहृदोऽस्माकं प्रतिवारमुपकृत्यास्मत्सकाशात्काव्यनाटकग्रन्थप्रकाशनात्मकसेवामङ्गीकुर्युरिति सविनयमभ्यर्थयामहे ।



श्रीः ।

श्रीमहाकविदण्डिविरचितं

# दशकुमारचरितम् ।

## पूर्वोत्तरपीठिकासहितम् ।

## पूर्वपीठिकायां प्रथमोच्छ्वासः ।

ब्रह्माण्डच्छत्रदण्डः शतधृतिभवनाम्भोरुहो नालदण्डः
क्षोणीनौकूपदण्डः क्षरदमरसरित्पट्टिकाकेतुदण्डः ।
ज्योतिश्चक्राक्षदण्डस्त्रिभुवनविजयस्तम्भदण्डोऽङ्घ्रिदण्डः
श्रेयस्त्रैविक्रमस्ते[1] वितरतु विबुधद्वेषिणां कालदण्डः ॥

अस्ति समस्तनगरीनिकषायमाणा शश्वदगण्यपण्यविस्तारितमणि-

---

पददीपिका ।

**ब्रह्माण्डेति** । ब्रह्माण्डमेव छत्रं तस्य दण्ड आधारयष्टिः । ब्रह्माण्डं भुवनम् । शतं धृतयो यस्य स शतधृतिर्ब्रह्मा 'शंभुः शतधृतिः स्रष्टा' इति हैमः । तस्य भवनमुत्पत्तिस्थानं वासस्थानं वा तद्भूतस्याम्भोरुहोऽम्भसि रोहतीति व्युत्पत्त्या कमलस्य । हान्तोऽयं शब्दः । क्षोणी पृथ्वी तद्रूपा या नौस्तरिस्तस्याः कूपदण्डो गुणवृक्षकः । 'डोलकाठी' इति भाषायाम् । 'क्षोणी ज्या काश्यपी क्षितिः', 'स्त्रियां नौस्तरणिस्तरिः', 'कूपको गुणवृक्षकः' इति च सर्वत्रामरः । क्षरन्ती प्रस्रवन्ती या अमरसरिद्वियद्गङ्गा सैव पट्टिका तस्याः केतुदण्डः । ज्योतिश्चक्रं ज्योतिःसमूहस्तस्याक्षदण्डो नाभिक्षेप्यं काष्ठम् । 'आंस' इति भाषायाम् । त्रयाणां भुवनानां समाहारस्त्रिभुवनं तस्य विजयस्तद्दर्शकः स्तम्भदण्डः । अङ्घ्रिश्चरणो दण्ड इवेत्युपमितसमासः । श्रेयो निःश्रेयसं सुकृतं पुण्यं वा । 'श्रेयो निःश्रेयसामृतम्', 'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः' इत्युभयत्राप्यमरः । अतिशयेन प्रशस्यम् । ईयसुनि 'प्रशस्यस्य–' (५।३।६०) इति श्रादेशः । त्रैविक्रमस्त्रिविक्रमस्यायम् । 'अङ्घ्रिदण्डः' इत्यस्य विशेषणम् । वितरतु ददातु । विबुधद्वेषिणां दनुजानाम् । कालदण्डः कृतान्तः । मृत्युरिति यावत् । 'कृतान्तानेहसोः कालः' इत्यमरः । 'कालो मृत्यौ महाकाले समये यमकृष्णयोः' इति मेदिनी च ॥

**अस्तीति** । निकषः कषपाषाणः, तद्वदाचरति निकषायते । निकषायतेऽसौ निकषायमाणा । 'शाणस्तु निकषः कषः' इत्यमरः । पण्यानि विक्रेयवस्तूनि ।

---

**पाठा०–१** 'श्रेयस्त्रैविक्रमो वः'.

गणादिवस्तुजातव्याख्यातरत्नाकरमाहात्म्या मगधदेशशेखरीभूता पुष्पपुरी नाम नगरी । तत्र वीरभटपटलोत्तरङ्गतुरङ्गकुञ्जरमकरभीषणसकलरिपुगणकटकजलनिधिमथनमन्दरायमाणसमुद्दण्डभुजदण्डः[1], पुरंदरपुराङ्गणवनविहरणपरायणगीर्वाणतरुणगणिकागणजेगीयमानयातिमानया[2] शरदिन्दुकुन्दघनसारनीहारहारमृणालमरालसुरगजनीरक्षीरगिरिशाट्टहासकैलासकाशनीकाशमूर्त्या रचित-[3]दिगन्तरालपूर्त्या कीर्त्याऽभितःसुरभितः, स्वर्लोकशिखरोरुरुचिररत्नरत्नाकरवेलामेखलायित[4]धरणीरमणीसौभाग्यभोगभाग्यवान्, अनवरतयागदक्षिणारक्षितशिष्टविशिष्टविद्यासंभारभासुरभूसुरनिकरः,

---

'विक्रेयं पणितव्यं च पण्यम्' इत्यमरः । रत्नाकर उदधिः । शेखरीभूता भूषणभूता । **वीरेति ।** वीराश्च ते भटाश्च तेषां पटलानि तैरुद्गताः तरङ्गाः वीचयो यस्य स उत्तरङ्गः । तुरङ्गाश्च कुञ्जराश्च त एव मकरास्तैर्भीषण एतादृशः । सकलाश्च ते रिपवश्च तेषां गणस्तस्य कटकं स एव जलनिधिस्तस्य मथने मन्दर इवाचरन् समुद्दण्डो भुजदण्डो यस्य सः । भटा योद्धारः । पटलं समूहः । उत्तरङ्ग उद्गतवीचिः । कटकं सेना । पुरंदर इन्द्रः । अङ्गणं चत्वरं तत्संबन्धीनि वनानि तेषु विहरणपरायणो यो गीर्वाणतरुणगणिकानामप्सरसां गणस्तेन । 'वारस्त्री गणिका वेश्या' इत्यमरः । जेगीयमानया पुनः पुनः कीर्त्यमानया । अतिमानया अतिप्रमाणया । विस्तृतयेति यावत् । कुन्दं पुष्पविशेषः । 'माघ्यं कुन्दम्' इति । घनसारः कर्पूरः । 'कर्पूरो हिमवालुका । घनसारः' इति हैमः । नीहारो हिमम् । मृणालं बिसम् । मरालो हंसः । सुरगज ऐरावतः । गिरिशस्य शिवस्याट्टहासो महान्हासः । 'किंचिच्छ्रुते विहसितमट्टहासो महीयसि' इति हैमः । काशस्तृणभेदः । **शरदिन्द्विति ।** शरदिन्दुश्च कुन्दं चेत्यादिः काशान्तो द्वन्द्वः । तैर्नीकाशा निभा । सदृशेति यावत् । मूर्तिर्यस्यास्तया । 'निभसंकाशनीकाशप्रतीकाशोपमादयः' इत्यमरः । दिशामन्तरालं दिगन्तरालं तस्य पूर्तिः । रचिता कृता दिगन्तरालपूर्तिर्यया । सुरभितो मनोज्ञः । **स्वर्लोकेति ।** स्वर्लोकः सुरालयो मेरुस्तस्य शिखरं तद्वत्तत्संबन्धीनि वा उरूणि स्थूलानि रुचिराणि सुन्दराणि च यानि रत्नानि तेषां तद्युक्तो वा यो रत्नाकरस्तस्य वेला जलवृद्धेर्मर्यादा सैव मेखला काञ्ची तया वलयिता या धरणी सैव रमणी । 'स्त्रीकट्यां मेखला. काञ्ची सप्तकी रशना तथा' इत्यमरः । अनवरता नित्याः । यागा यज्ञाः । विद्यायाः संभारस्तेन भासुरा देदीप्यमानाः । भूसुरा ब्राह्मणाः । भुवि सुरा भूसुराः, तेषां निकरो वृन्दम् ।

---

**पाठा०–१ 'भुजदण्डमण्डनः'. 'भुजदण्डमण्डलः'. २ 'गणिकाजनगीयमानया'. ३ 'परिचित'. ४ 'मेखलायित'; 'मेखलाचलायित'.**

विरचितारातिसंतापेन प्रतापेन सततुलितवियन्मध्यहंसः, राजहंसो नाम घनदर्पकंदर्पसौन्दर्यसोदर्यहृद्यनिरवद्यरूपो भूपो बभूव । तस्य वसुमती नाम सुमती लीलावतीकुलशेखरमणी रमणी बभूव । रोषेणेक्षणेन[1] निटिलेक्षणेन भस्मीकृतचेतने मकरकेतने तदा भयेनानवद्या वनितेति मत्वा, तस्य[2] रोलम्बावली केशजालम्, प्रेमाकरो रजनीकरो विजितारविन्दं वदनम्, जयध्वजायमानो मीनो जायायुतोऽक्षियुगलम्, सकलसैनिकाङ्गवीरो मलयसमीरो निःश्वासः, पथिकहृद्दलनकरवालः[3] प्रवालश्चाधरबिम्बम्, जयशङ्खो बन्धुरा लावण्यधरा कंधरा, पूर्णकुम्भौ चक्रवाकानुकारौ पयोधरौ, ज्यायमाने मार्दवासमाने बिसलते च बाहू, ईषत्फुल्ललीलावतंसकह्लारकोरको गङ्गावर्तसनाभिर्नाभिः, दूरीकृतयोगिमनोरथो जैत्ररथोऽतिघनं जघनम्, जयस्तम्भभूते सौन्दर्यभूते विघ्नितयतिजनारम्भे रम्भे चोरुयुगम्,

---

विरचितोऽरातिसंतापो येन । रिपुदत्तसंताप इत्यर्थः । 'अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः' इत्यमरः । वियत आकाशस्य मध्ये हंसः सूर्यः । दर्पोऽवलेपः । कंदर्पो मन्मथः । सोदर्यो बन्धुः समानोदर्यः । अत्र तु सोदर्यं सदृशम् । हृद्यं मनोहरम् । निरवद्यं निर्दोषम् । लीलावत्यो योषितस्तासां कुलं तस्य शेखरमणिभूषणमवतंसः । **रोषणेति ।** क्रोधताम्रदृशेत्यर्थः । निटिलेक्षणः शिवः । निटिले भालस्थले ईक्षणं नयनं यस्येति विग्रहः । मकरकेतनो मन्मथः । अनवद्या निर्दोषा । **रोलम्बेति ।** रोलम्बावली भ्रमरपङ्क्तिः । अर्थात्कामस्य मौर्वीस्थिता । 'इन्दिन्दिरोऽली रोलम्बो द्विरेफः' इति हैमः । प्रेम्ण आकरः खनिः । 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः । विजितारविन्दं विजितं कान्त्या तिरस्कृतमरविन्दं कमलं येन तत् । जयध्वज इवाचरति जयध्वजायते । जयध्वजे तिष्ठति वा । जायायुतः पत्नीसहितः । अक्षियुगलमक्ष्णोर्द्वयम् । अङ्गवीरः प्रधानयोधः । मलयसमीरो दक्षिणानिलः । पथिकाः प्रोषिताः पान्थाः । 'पान्थः पथिक इत्यपि' इत्यमरः । तेषां हृदयस्य यद्दलनं पाटनं तस्मिन्करवालः कृपाणः । 'कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्' इत्यमरः । प्रवालः किसलयः । बन्धुरोन्नतानता । 'बन्धुरं तून्नतानतम्' इत्यमरः । कंधरा ग्रीवा । ज्यायमाने ज्येवाचरन्त्यौ । मार्दवे मृदुत्वेऽसमाने । कह्लारं कमलं तस्य कोरकः कुड्मलः । **गङ्गेति ।** आवर्तोऽम्भसां भ्रमः । 'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः । तत्सनाभिः सदृशः । **दूरीकृतेति ।** दूरीकृत अपनीता योगिजनानां मनोरथा येनेति । जैत्रो जयनशीलः । **जय-**

---

**पाठा०**—१ 'रोषरूक्षेण निटिलाक्षेण'. २ 'तस्याः'. ३ 'पथिकहृद्दलनः करवालप्रवालः'.

आतपत्रसहस्रपत्रं पादद्वयम्, अस्त्रभूतानि प्रसूनानि तानीतराण्यङ्गानि च समभूवन्निव। विजितामरपुरे पुष्पपुरे निवसता सानन्तभोगलालिता वसुमती वसुमतीव मगधराजेन यथासुखमन्वभावि ।

तस्य राज्ञः परमविधेया धर्मपालपद्मोद्भवसितवर्मनामधेया धीरधिषणावधीरितविबुधाचार्यविचार्यकार्यसाहित्याः कुलामात्यास्त्रयोऽभूवन्। तेषां सितवर्मणः सुमतिसत्यवर्माणौ, धर्मपालस्य सुमन्त्रसुमित्रकामपालाः, पद्मोद्भवस्य सुश्रुतरत्नोद्भवाविति तनयाः समभूवन्। तेषु धर्मशीलः सत्यवर्मा संसारासारतां बुद्ध्वा तीर्थयात्राभिलाषी देशान्तरमगमत्। विटनटवारनारीपरायणो दुर्विनीतः कामपालो जनकाग्रजन्मनोः शासनमतिक्रम्य भुवं बभ्राम। रत्नोद्भवोऽपि वाणिज्यनिपुणतया पारावारतरणमकरोत्। इतरे मन्त्रिसूनवः पुरंदरपुरातिथिषु पितृषु यथापूर्वमन्वतिष्ठन्।

---

**स्तम्भेति** । आरम्भाः कर्माणि । आरभ्यन्त इत्यारम्भाः । रम्भे कदली । ऊर्वोर्युगमूरुयुगम् । **आतपत्रेति** । आतपात्त्रायते तदातपत्रं छत्रं तद्रूपं यत्सहस्रपत्रं कमलं तत् । प्रसूनानि पुष्पाणि । 'प्रसूनं कुसुमं सुमम्' इत्यमरः । समभूवन् । 'भू सत्तायाम्' इति धातोर्लुङि रूपम् । **विजितेति** । विजितं स्ववैभवेन तिरस्कृतममरपुरमिन्द्रनगरी येन तस्मिन् । अन्वभावि । अन्वित्युपसर्गपूर्वकस्य 'भू सत्तायाम्' इति धातोः कर्मणि लुङ् ॥

**तस्येति** । विधेया विनयग्राहिणः । 'विधेयो विनयग्राही' इत्यमरः । धिषणा बुद्धिः । 'बुद्धिर्मनीषा धिषणा' इत्यमरः । विबुधाचार्यः सुरगुरुस्तेनापि विचार्यं विचारार्हं यत् कार्यं तस्मिन्नपि साहाय्यकारिणः । अतीव पटुबुद्धय इति भावः । कुलामात्या वंशक्रमागताः । धर्मशीलो धार्मिकः । असारतां फल्गुताम् । अध्रुवत्वमित्यर्थः । अन्यो देशो देशान्तरम् । अगमदिति । 'गम्लृ गतौ' इत्यस्य लुङि रूपम् । विटाः षिङ्गाः । 'विटोऽद्रौ लवणे षिङ्गे मूषिके खदिरेऽपि च' इति मेदिनी । नटाः शैलूषाः । 'भरता इत्यपि नटाः' इत्यमरः । वारनार्यो गणिकाः । परायणस्तत्परः । दुर्विनीतोऽविनीतः । जनकश्चाग्रजन्मा च जनकाग्रजन्मानौ तयोः । पितुर्ज्येष्ठभ्रातुश्चेत्यर्थः । शासनं निदेशम् । बभ्रामेति 'भ्रमु अनवस्थाने' इत्यस्य लिटि रूपम् । वाणिज्यं वणिक्कर्म । भाण्डस्य द्वीपान्तरे नयनं द्वीपान्तरादानयनमित्यादि च । पारावारः समुद्रः । 'पारावारः सरित्पतिः' इत्यमरः । पुरंदर इन्द्रस्तस्य पुरं नगरं तदतिथयो गृहागताः । 'दूराच्चोपनतं श्रान्तं वैश्वदेव उपस्थितम् । अतिथिं तं विजानीयात्' इति व्यासः । प्रेत्य महेन्द्रनगरं गतेषु । मृतेष्विति तात्पर्यार्थः । पूर्वमनतिक्रम्य वर्तत इति यथापूर्वम् । अनुपूर्वः ष्ठाधातुः करणार्थे वर्तते । 'ष्ठा गतिनिवृत्तौ' इत्यस्य लङि रूपम् । अकुर्वन्नित्यर्थः ॥

ततः कदाचिन्नानाविधमहदायुधनैपुण्यरचितागण्यजन्यराजन्यमौलिपालिनिहितनिशितसायको मगधनायको मालवेश्वरं प्रत्यग्रसङ्ग्रामघस्मरं समुत्कटमानसारं मानसारं प्रति सहेलं न्यक्कृतजलधिनिर्घोषाहङ्कारेण भेरीझाङ्कारेण हठिकाकर्णनाक्रान्तभयचण्डिमानं दिग्दन्तावलवलयं विघूर्णयन्निजभरनमन्मेदिनीभरेणायस्तभुजगराजमस्तकबलेन चतुरङ्गबलेन संयुतः सङ्ग्रामाभिलाषेण रोषेण महताविष्टो निर्ययौ । मालवनाथोऽप्यनेकानेकपयूथसनाथो विग्रहः सविग्रह इव साग्रहोऽभिमुखीभूय भूयो निर्जगाम । तयोरथ रथतुरगखुरक्षुण्णक्षोणीसमुद्भूते करिघटाकटस्रवन्मदधाराधौतमूले

**तत इति ।** नानाविधान्यनेकप्रकाराणि । महान्त्यायुधानि तेषु निपुणता तया रचितानि कृतानि यान्यगण्यान्यसंख्यानि जन्यानि युद्धानि तेषु राजन्यानां क्षत्रियाणां मौलीनां किरीटानां पालिषु प्रान्तप्रदेशेषु निहिता अध्यारोपिताः स्थापिता वा निशितास्तीक्ष्णाः सायका बाणा येनैतादृशः । 'युद्धमायोधनं जन्यम्' इति, 'मूर्धाभिषिक्तो राजन्यः' इति चामरः । 'मौलिः किरीटे धम्मिल्ले चूडायामनपुंसकम्' इति मेदिनी । 'पालिः कर्णलतायां स्यात्प्रदेशे पङ्क्तिचिह्नयोः' इत्यजयः । '–निशितक्ष्णुतशातानि तेजिते' इत्यमरः । प्रत्यग्रो नवीनो यः सङ्ग्रामो युद्धं तस्य तस्मिन्वा घस्मरो भक्षकः । शत्रुनाशक इत्यर्थः । 'सृघस्यदः क्मरच्' (३।२।१६०) इति क्मरच् । समुत्कटोऽतिरिक्तो मान एव सारो यस्य तम् । मानसार इति नृपनाम । सहेलं लीलया न्यक्कृतोऽवधूतस्तिरस्कृतो जलधेः सागरस्य निर्घोषविषयेऽहङ्कारोऽभिमानो येन । भेरीझाङ्कारेणेत्यस्य विशेषणम् । भेर्या दुन्दुभेर्झाङ्कारो महाशब्दः । हठिकाकर्णनान्महतो ध्वनेर्बलादाकर्णनाच्छ्रवणादाक्रान्तं महाभयं यं तम् । दिशां दन्तावला हस्तिनस्तेषां वलयं चक्रं समूहः । 'दन्ती दन्तावलो हस्ती' इत्यमरः । विघूर्णयंश्चालयन् । निजभरेण स्वभारेण नमन्त्यधोगच्छन्ती या मेदिनी पृथ्वी तस्या भरेण भारेणायस्तं पीडितं भुजगानां राजा शेषस्तस्य मस्तकबलं येन । तस्य मेदिन्या आधारभूतत्वात् । चतुरङ्गबलेन हस्त्यश्वरथपादातेन सेनाङ्गेन । आविष्टो व्याप्ताकारः । अनेके येऽनेकपा द्विपाः । हस्तिन इति यावत् । तेषां यूथं वृन्दं तेन सनाथो युक्तः । विग्रहः सङ्ग्रामः । सविग्रहो मूर्तिमान् । 'युद्धे देहे च विग्रहः' इति कोशः । साग्रह आग्रहेण सहितः । 'तयोः अथ' इति छेदः । रथैरथाद्रथचक्रनेमिभिः तुरगाणामश्वानां खुरैः शफैः क्षुण्णायाश्चूर्णितायाः क्षोण्याः पृथ्व्याः समुद्भूते उत्पन्ने । करिणां हस्तिनां घटाः । 'बहूनां घटना घटा' इति हलायुधः । तासां कटा गण्डाः । 'करटः स्यात्कटो गण्डः' इति हलायुधः । तेभ्यः स्रवन्त्यो या मदधारा दानसलिलासारास्ताभिर्धौतं निर्मलीकृतं मूलं

पाठा०–१ 'सहेलन्यक्कृत'. २ 'भरणायस्त'.

नव्यवल्लभवरणागतदिव्यकन्याजनजवनिकापटमण्डप[1] इव वियत्तलव्याकुले धूलीपटले दिविषदध्वनि धिकृतान्यध्वनिपटहध्वानबधि[2]रिताशेषदिगन्तरालं शस्त्राशस्त्रि हस्ताहस्ति परस्पराभिहतसैन्यं जन्यमजनि । तत्र मगधराजः प्रक्षीणसकलसैन्यमण्डलं मालवराजं जीवग्राहमभिगृह्य कृपालुतया पुनरपि स्वराज्ये प्रतिष्ठापयामास ।

ततः स रत्नाकरमेखलामिलामनन्यशासनां शासदनपत्यतया नारायणं सकललोकैककारणं निरन्तरमर्चयामास । अथ कदाचित्तदग्रमहिषी देवी 'देवेन कल्पवल्लीफलमाप्नुहि'[3] इति प्रभातसमये सुस्वप्नमवलोकितवती । सा तदा दयितमनोरथपुष्पभूतं गर्भमधत्त । राजापि संपन्न्यकृताखण्डलः सुहृन्नृपमण्डलं समाहूय निजसंपन्मनोरथानुरूपं देव्याः सीमन्तोत्सवं व्यधत्त ।

---

यस्य । नव्या नवीना ये वल्लभा रमणास्तेषां वरणं पतित्वेन स्वीकरणं तदर्थमागतो यो दिव्यकन्याजनोऽप्सरःसमुदायस्तस्य जवनिका तिरस्करिणी तया युक्तः पटमण्डपः । 'प्रत्यग्रोऽभिनवो नव्यः' इत्यमरः । 'वल्लभो दयितेऽध्यक्षे सलक्षणतुरङ्गमे' इति कोशः । 'प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा' इत्यमरः । वियत आकाशस्य तले व्याकुलं संभृतं तस्मिन् । धूल्याः पांसोः पटलं चयस्तस्मिन् । दिविषदां सुराणाम् । अध्वनि मार्गे । दिवि सीदन्ति ते दिविषदः । देवा इत्यर्थः । धिकृता अन्यध्वनयो येनैतादृशो यः पटहध्वानो ढक्काध्वनिस्तेन बधिरितमशेषदिगन्तरालं यस्मिन् । 'स्याद्यशःपटहो ढक्का' इत्यमरः । शस्त्राशस्त्रि । शस्त्रैः शस्त्रैश्च प्रहृत्येदं युद्धं प्रवृत्तमिति । 'तत्र तेनेदम्–' (२।२।२७) इति बहुव्रीहिः । 'इच्कर्मव्यतिहारे' (५।४।१२७) इतीच्समासान्तः । परस्परस्याभिहतं सैन्यं यस्मिन् । जन्यं युद्धम् । अजनीति 'जनी प्रादुर्भावे' इत्यस्य लुङि रूपम् । 'जनिवध्योश्च' (७।३।३५) इति न वृद्धिः । 'दीपजनबुध–' (३।१।६१) इति वा चिण् । प्रक्षीणं हतविध्वस्तम् । 'निष्ठायामण्यदर्थे' (६।४।६०) इति दीर्घः । 'क्षियो दीर्घात्' (८।२।४६) इति नः । जीवग्राहम् । जीवन्तमित्यर्थः । 'समूलाकृतजीवेषु–' (३।४।३६) इति णमुल् ॥

**तत इति ।** रत्नाकरः सागरो मेखला कटिसूत्रं यस्याः । इलां पृथ्वीम् । 'गौरिला कुम्भिनी क्षमा' इत्यमरः । नास्त्यन्यशासनं यस्याम् । शासत् । अभ्यस्तत्वान्नुमभावः । सकललोकस्यैककारणमादिहेतुः । प्रभातसमये प्रातःकाले । दयितमनोरथफलस्य पुष्पमिव भूतम् । अधत्तेति 'डुधाञ् धारणपोषणयोः' इत्यस्य लङि आत्मनेपदरूपम् । संपदा न्यकृत आखण्डल इन्द्रो येन । 'आखण्डलस्तुराषाट्' इति हलायुधः । सुहृदश्च ये नृपास्तेषां मण्डलम् । सुहृदश्च नृपाश्चेति वा ।

---

पाठा०–१ 'मण्डले'. २. 'अवधीरित'. ३ 'आदेहि'; 'आधेहि'.

एकदा हितैः सुहृन्मन्त्रिपुरोहितैः सभायां सिंहासनासीनो गुणैरहीनो ललाटतटन्यस्ताञ्जलिना द्वारपालेन व्यज्ञापि—'देव, देवसंदर्शनलालसमानसः कोऽपि देवेन विरच्यार्चनार्हो यतिर्द्वारदेशमध्यास्ते' इति । तदनुज्ञातेन तेन स संयमी नृपसमीपमनायि । भूपतिरायान्तं तं विलोक्य सम्यग्ज्ञाततदीयगूढचारभावो निखिलमनुचरनिकरं विसृज्य मन्त्रिजनसमेतः प्रणतमेनं मन्दहासमभाषत—'ननु तापस, देशं सापदेशं भ्रमन्भवांस्तत्र तत्र भवदभिज्ञातं कथयतु' इति । तेनाभाषि भूभ्रमणबलिना प्राञ्जलिना—'देव, शिरसि देवस्याज्ञामादायैनं निर्दोषं वेषं स्वीकृत्य मालवेन्द्रनगरं प्रविश्य तत्र गूढतरं वर्तमानस्तस्य राज्ञः समस्तमुदन्तजातं विदित्वा

---

**समाहूयेति** । 'सम्-आ' इत्येतत्पूर्वस्य ह्वेधातोर्ल्यपि रूपम् । 'ह्वः संप्रसारणम्' । निजसंपन्मनोरथयोरनुरूपं सदृशम् । सीमन्तोत्सवं सीमन्तोन्नयनसंज्ञः संस्कारस्तदानुषङ्गिकमुत्सवम् । तथा चाश्वलायनः—'चतुर्थे गर्भमासे सीमन्तोन्नयनम्' इति । सीमन्तः केशवेशो यस्मिन्कर्मण्युन्नीयते तत् सीमन्तोन्नयनम् ॥

**एकदेति** । हितैः पथ्यैः । सिंहासनं भद्रासनं तत्र समासीनः । 'ईदासः' (७।२।८३) इति आनस्य ईत् । अहीनोऽन्यूनः । ललाटतटेत्युपचार एतत् । ललाटतटे न्यस्तोऽञ्जलिर्येन । व्यज्ञापीति 'ज्ञा अवबोधने' इत्यस्य णिजन्तात्कर्मणि लुङ् । लालसमभिलाषयुक्तम् । विरच्या कर्तव्या यार्चना तामर्हतीति । यतिर्भिक्षुः । **द्वारदेशमिति** । 'अधिशीङ्स्थासाम्–' (१।४।४६) इति कर्मत्वम् । द्वारि तिष्ठतीत्यर्थः । तेनानुज्ञातस्तदनुज्ञातः तेन । संयमी यतिः । अनायीति 'णीञ् प्रापणे' इत्यस्य कर्मणि लुङो रूपम् । आयान्तमागच्छन्तम् । विलोक्य । 'लोकृ दर्शने' । सम्यक्सुष्ठु ज्ञातोऽवगतः । तस्यायं तदीयः । 'प्रत्ययोत्तरपदयोश्च' (७।२।९८) इत्यनेन त्यादेशः । गूढः प्रच्छन्नश्चारभावो येन सः । निखिलं सर्वम् । अनुचरनिकरमनुयायिवर्गम् । विसृज्य । 'सृज विसर्गे' । **मन्त्रिजनेति** । सचिवयुक्तः । प्रणतं प्रह्वम् । मन्दहासमिति क्रियाविशेषणम् । सापदेशं सव्याजम् । तत्र तत्र तेषु तेषु स्थानेषु । भवताभिज्ञातं भवदभिज्ञातम् । कथयत्वित्यत्र भवच्छब्दस्य कर्तृत्वेन प्रयोगात्प्रथमपुरुषः । अभाषि । 'भाष व्यक्तायां वाचि' । कर्मणि लुङ् । भूभ्रमणे भ्रमणविषये बली समर्थस्तेन । प्रबद्धोऽञ्जलिर्येन स प्राञ्जलिस्तेन । देव राजन् । **शिरसीति** । अङ्गीकृत्येत्यर्थः । आदायेति आङ्पूर्वकस्य 'डुदाञ् दाने' इत्यस्य रूपम् । निर्दोषं दोषविवर्जितम् । मालवेन्द्रो मानसारः । गूढतरम् । अतिशयेन गूढमित्यर्थः । 'द्विवचन–' (५।३।५७) इति तरप् । वर्तमानः । 'वृतु वर्तने' । कर्तरि शानच् । उदन्तो वार्ता । 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्' इत्यमरः ।

प्रत्यागमम् । मानी मानसारः स्वसैनिकायुष्मत्तान्तराये संपराये भवतः पराजयमनुभूय वैलक्ष्यलक्ष्यहृदयो वीतदयो महाकालनिवासिनं कालीविलासिनमनश्वरं महेश्वरं समाराध्य तपःप्रभावसंतुष्टादस्मादेकवीराराति[1]घ्नीं भयदां गदां लब्ध्वात्मानमप्रतिभटं मन्यमानो महाभिमानो भवन्तमभियोक्तुमुद्युङ्क्ते । ततः परं दैव एव प्रमाणम्' इति । तदालोच्य निश्चिततत्कृत्यैरमात्यै राजा विज्ञापितोऽभूत्—'देव, निरुपायेन देव[2]सहायेन योद्धुमरातिरायाति । तस्मादस्माकं युद्धं सांप्रतमसांप्रतम् । सहसा दुर्गसंश्रयः कार्यः' इति । तैर्बहुधा विज्ञापितोऽप्यखर्वेण गर्वेण विराजमानो राजा तद्वाक्यमकृत्यमित्यनादृत्य प्रतियोद्धुमना बभूव । शितिकण्ठदत्तशक्तिसारो मानसारो योद्धुमनसामग्रीभूय सामग्रीसमेतोऽक्लेशं मगधदेशं प्रविवेश । तदा तदाकर्ण्य मन्त्रिणो भूमहेन्द्रं मगधेन्द्रं

---

उदन्तजातमखिलां प्रवृत्तिम् । विदित्वा ज्ञात्वा । **मानीति** । ताच्छील्ये णिनिः । स्वसैनिका निजभटास्तेषामायुष्मत्ता जीवितमर्यादा तस्या अन्तरायो विघ्नस्तस्मिन् । संपराये युद्धे । 'संपरायः समीकं सांपरायिकम्' इति हैमः । भवतो देवात् । वैलक्ष्येण दैन्येन लक्ष्यमाक्रान्तं हृदयं यस्य सः । वीता नष्टा दया यस्य । महाकाले निवासोऽस्त्यस्य तस्य । कालीविलासिनं कालीपतिम् । अनश्वरं नाशरहितम् । महांश्चासावीश्वरश्च महेश्वरस्तम् । समाराध्य सम्यगाराध्य । तपसस्तदाचरितस्य प्रभावः सामर्थ्यं तेन संतुष्टात्प्रीतात् । अस्मान्महेश्वरात् । एकवीरश्चासावरातिश्च तं हन्तीति । भयदां भयदात्रीम् । गदामायुधविशेषम् । अप्रतिभटं न विद्यते प्रतिभटो यस्य तम् । महानभिमानो यस्येति बहुव्रीहिः । अभियोक्तुमभिषेणयितुम् । उद्युङ्क्ते उद्युक्तो भवति । 'युजिर् योगे' । देव एव प्रमाणम् । किंकर्तव्यतानिर्णेतेत्यर्थः । निश्चितं निर्णीतं तत्कृत्यमरातिकृत्यं, तत्कालोचितं कृत्यं, राजकृत्यं वा यैस्तैः । अमात्यैर्मन्त्रिभिः । निरुपायेन नास्त्युपायः प्रतीकारो यस्य तेन । देवसहायेन । दैवसामग्र्येति यावत् । अरातिः परः । 'परारातिप्रत्यर्थि–' इत्यमरः । सांप्रतमधुना । असांप्रतमयुक्तम् । 'युक्ते द्वे सांप्रतं स्थाने' इत्यमरः । अखर्वो बहुः । न खर्वोऽखर्वः । 'खर्वो ह्रस्वश्च वामनः', 'न्यङ्नीचखर्वह्रस्वाः स्युः' इति चामरः । विराजमानः शोभमानः । 'राजृ दीप्तौ' । अकृत्यं कर्तुमनुचितमिति । अनादृत्यानादरं कृत्वा । शितिकण्ठः शिवस्तेन दत्ता या शक्तिः प्रहरणविशेषः स एव सारो बलं यस्य सः । योद्धुमनसां युद्धकामानामग्रीभूय पुरो भूत्वा । 'तुं काममनसोरपि' इत्यनुस्वारलोपः । सामग्र्या समेतो युक्तः । अक्लेशमिति क्रियाविशेषणम्' । 'तद् आकर्ण्य' इति च्छेदः । भुवि पृथिव्यां महेन्द्रस्तम् । कथं-

---

प्राठा०–१ 'एव वीराराति[घ्नीम्'. २ 'दैवसहायेन'.

कथंचिदनुनीय रिपुभिरसाध्ये[1] विन्ध्याटवीमध्येऽवरोधान्मूलबलरक्षितान्निवेशयामासुः । राजहंसस्तु प्रशस्तवीतदैन्यसैन्यसमेतस्तीव्रगत्या निर्गत्याधिकरुषं द्विषं रुरोध । परस्परबद्धवैरयोरेतयोः शूरयोस्तदा तदालोकनकुतूहलागतगगनचराश्चर्यकारणे रणे वर्तमाने जयाकाङ्क्षी मालवदेशरक्षी विविधायुधस्थैर्यचर्याञ्चितसमरतुलितामरेश्वरस्य मगधेश्वरस्य तस्योपरि पुरा पुरारातिदत्तां गदां प्राहिणोत् । निशितशर[2]निकरशकलीकृतापि सा पशुपतिशासनस्यावन्ध्यतया सूतं निहत्य रथस्थं राजानं मूर्च्छितमकार्षीत् । ततो वीतप्रग्रहा अक्षतविग्रहा वाहा रथमादाय दैवगत्यान्तःपुरशरण्यं महारण्यं प्राविशन् । मालवनाथो जयलक्ष्मीसनाथो मगधराज्यं प्राज्यं समाक्रम्य पुष्पपुरमध्यतिष्ठत् ।

---

चिद्यत्नेन । अनुनीय प्रार्थ्य । असाध्ये दुरवगाहनीये । अवरोधान् राजस्त्रियः । मूलबलेन प्रधानसैन्येन रक्षितान् । निवेशयामासुः स्थापितवन्तः । **प्रशस्तेति ।** वीतं गतं दैन्यं यस्मात्तद्वीतदैन्यम् । प्रशस्तं च तद्वीतदैन्यं च तादृशं सैन्यं तेन समेतः । तीव्रा चासौ गतिश्च तया । **निर्गत्येति ।** 'गम्लृ गतौ' । अधिकारुट् यस्य तम् । द्विषमरिम् । रुरोध । 'रुधिर् आवरणे' । लिट् । **परस्परेति ।** परस्परेण बद्धं वैरं याभ्यां तयोः । **तदालोकनेति ।** तस्यालोकने यत्कुतूहलं तदर्थमागता ये गगनचरास्तेषामाश्चर्यस्य कारणं तस्मिन् । आलोकनं दर्शनम् । कुतूहलं कौतुकम् । गगनचरा देवाः । वर्तमाने प्रवृत्ते । जयमाकाङ्क्षते सः । मालवदेशश्च रक्षी रक्षिता । **विविधेति ।** विविधानि यान्यायुधानि तेषां स्थैर्येण या चर्या तयाञ्चितो यः समरस्तस्मिंस्तुलितोऽमरेश्वरो येन तस्य । विविधानि नैकप्रकाराणि । आयुधानि प्रहरणानि । चर्या चालनमुपयोगः प्रयोगो वा । अञ्चितं युक्तम् । समरं युद्धम् । अमरेश्वर इन्द्रः । **पुरारातीति ।** पुरारातिः शंकरस्तेन दत्तां गदां प्राहिणोत् । 'हि गतौ' इति धातुः । लुङ् । निशितास्तीक्ष्णाश्च ते शराश्चेषवस्तेषां निकरः समुदायस्तेन शकलीकृता खण्डशः कृता । 'चित्रपुङ्खः सरः शरः' इति त्रिकाण्डशेषः । **पशुपतीति ।** पशुपतिः शिवस्तस्य शासनस्याज्ञाया अवन्ध्यतया सफलतया । सूतं सारथिम् । 'सूतः क्षत्ता च सारथिः' इत्यमरः । निहत्य । 'हन हिंसागत्योः' । रथस्थं रथे तिष्ठतीति । अकार्षीत् । 'डुकृञ् करणे' लुङ् । वीतप्रग्रहा मुक्तरश्मयः । अक्षतो विग्रहः शरीरं येषाम् । वाहा अश्वाः । 'वाजिवाहार्वगन्धर्व–' इत्यमरः । दैवगत्या यदृच्छया । अन्तःपुरस्य राजस्त्रीणां शरणे साधु । महच्च तदरण्यं च महारण्यम् । **जयलक्ष्मीति ।** जयलक्ष्म्या सनाथो युक्तः । प्राज्यं पुष्कलम् । समाक्रम्य पुष्पपुरमिति । 'अधिशीङ्–' ( १।४।४६ ) इति कर्मत्वम् ॥

---

**पाठा०–१ 'अबाध्ये'. २ 'शरशतेन शकलीकृता'.**

तत्र हेतिततिहतिश्रान्ता अमात्या दैवगत्यानुत्क्रान्तजीविता[1] निशान्तवातलब्धसंज्ञाः कथंचिदाश्वस्य राजानं समन्तादन्वीक्ष्यानवलोकितवन्तो दैन्यवन्तो देवीमवापुः । वसुमती तु तेभ्यो निखिलसैन्यक्षतिं राज्ञोऽदृश्यत्वं चाकर्ण्योद्विग्ना शोकसागरमग्ना रमणानुगमने मतिं व्यधत्त । 'कल्याणि, भूरमणमरणमनिश्चितम् । किंच दैवज्ञकथितो मथितोद्धताराति: सार्वभौमोऽभिरामो भविता सुकुमारः कुमारस्त्वदुदरे वसति । तस्मादद्य तव मरणमनुचितम्' इति भूषितभाषितैरमात्यपुरोहितैरनुनीयमानया तया क्षणं क्षणहीनया तूष्णीमस्थायि । अथार्धरात्रे निद्रानिलीढनेत्रे

---

**तत्रेति** । हेतीनामायुधानां ततयः समुदायास्तैर्हतिस्ताडनं प्रहारस्तेन श्रान्ताः । 'रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः' इत्यमरः । **अनुत्क्रान्तेति** । नोत्क्रान्तं जीवितं प्राणा येषां ते । निशाया अन्तोऽवसानं तत्संबन्धिवातेनार्थाच्छीतलेन लब्धा प्राप्ता संज्ञा यैस्ते । कथंचिन्महतायासेन । आश्वस्य धैर्यावष्टम्भं कृत्वा । समन्तादितस्ततः । अन्वीक्ष्य । 'ईक्ष दर्शने' । दैन्यवन्तो दैन्यं खेदस्तद्वन्तः । अवापुः । 'आप्लृ व्याप्तौ' । लिट् । **निखिलेति** । निखिलस्य सर्वस्य सैन्यस्य क्षतिर्नाशस्तम् । 'क्षणु हिंसायाम्' उद्विग्ना दैन्यपरीता । 'ओविजी भयचलनयोः' । **शोकेति** । शोक एव सागरस्तस्मिन्मग्ना । 'टुमस्जो शुद्धौ' । रमणानुगमने पतिमनु मरणे । मतिं व्यधत्त निश्चयं चकार । **कल्याणीति** । हे कल्याणि । कल्याणलक्षणोपेते इति यावत् । **भूरमणेति** । भुवो रमणो वल्लभः । पतिरित्यर्थः । देवस्येति तात्पर्यम् । अनिश्चितं न निर्णीतम् । **किं चेति** । किं चापि चान्यच्च । दैवज्ञेन कार्तान्तिकेन । ज्यौतिषिकेणेत्यर्थः । 'सांवत्सरो ज्यौतिषिको दैवज्ञगणकावपि' । तेन कथितः । **मथितेति** । मथिता मथिष्यमाणा उद्धता धृष्टा अरातयो येन सः । सार्वभौमश्चक्रवर्ती । अभिरामो मनोज्ञः । भविता भावी । सुकुमारः पेशलः । **त्वदिति** । तवोदर इत्यर्थः । अनुचितमयुक्तम् । **भूषितेति** । भूषितं भूषणैराढ्यं भाषितं भाषणं येषां तैः । भावे क्तः । 'तारकादिभ्यः–' ( ५।२।३६ ) इतीतच् । **अमात्येति** । अमात्याश्च पुरोहिताश्च तैः । पुरोहिताः पुरोधसः । 'पुरोधास्तु पुरोहितः' इत्यमरः । अनुनीयत इत्यनुनीयमाना तया । क्षणं क्षणपर्यन्तम् । 'कालाध्वनोः–' (२।३।५) इति द्वितीया । क्षण उत्सवस्तेन हीना । 'क्षण उद्धर्षो मह उद्धव उत्सवः' इत्यमरः । तूष्णीं जोषम् । 'मौने तु तूष्णीम्' इत्यमरः । **अस्थायीति** । 'ष्ठा गतिनिवृत्तौ' इत्यस्य कर्मणि लुङो रूपम् । अथानन्तरम् । 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः । अर्धरात्रे निशीथे । 'अर्धरात्रनिशीथौ द्वौ'

---

**पाठा०–१ 'अप्रत्युत्क्रान्त'.**

परिजने विजने शोकपारावारमपारमुत्तर्तुमशक्नुवती सेनानिवेशदेशं निःशब्दलेशं शनैरतिक्रम्य यस्मिन्रथस्य संसक्ततया तदानयनपलायनश्रान्ता गन्तुमक्षमाः क्षमापतिरथ्याः पथ्याकुलाः पूर्वमतिष्ठंस्तस्य निकटवटतरोः शाखायां मृतिरेखायामिव कचिदुत्तरीयार्धेन बन्धनं मृतिसाधनं विरच्य मर्तुकामाभिरामा वाङ्माधुरीविरसीकृतकलकण्ठा[1] साश्रुकण्ठा व्यलपत्—'लावण्योपमितपुष्पसायक, भूनायक, भवानेव[2] भाविन्यपि जन्मनि वल्लभो भवतु' इति । तदाकर्ण्य नीहारकरकिरणनिकरसंपर्कलब्धावबोधो मागधोऽगाधरुधिरविक्षरणनष्टचेष्टो[3] देवीर्वाक्यमेव[4] निश्चिन्वानस्तन्वानः प्रियवचनानि शनैस्तामाह्वयत् । सा ससंभ्रममागत्यामन्दहृदयानन्दसंफुल्लवदनारविन्दा तमुपोषिताभ्यामिवानिमिषिताभ्यां लोचनाभ्यां पिबन्ती

---

इत्यमरः । निद्रया निलीढे व्याप्ते नेत्रे यस्य स तस्मिन् परिजनेऽनुचरवर्गे । विजने विविक्ते । शोकपारावारं शोकसमुद्रम् । 'समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः' इत्यमरः । अपारं पारयितुमशक्यम् । सेनाया निवेशः शिबिरम् । एवमेवामरः । वासस्थानमिति यावत् । तस्य देशः प्रदेशः । निर्गतः शब्दलेशो यस्मात्तत् । संसक्तस्य भावस्तया । तस्यानयनं तदानयनं यस्मिन्यत्पलायनं तेन श्रान्ताः । अक्षमा असमर्थाः । क्षमायाः पृथ्व्याः । 'गौरिला कुम्भिनी क्षमा' इत्यमरः । पतिः स्वामी भर्ता वा तस्य रथ्या वाहाः । 'तद्वहति रथयुग-' (४।४।७६) इति यः । 'पथि आकुला' इति च्छेदः । मृतेर्मरणस्य रेखा तस्याम् । उत्तरीयस्य संव्यानस्य । 'संव्यानमुत्तरीयं च' इत्यमरः । विरच्य कृत्वा मर्तुं कामो यस्याः सा । तुं काममनसोरपि' इत्यनुस्वारलोपः । वाचो माधुरी माधुर्यं तया विरसीकृतोऽधरीकृतः कलकण्ठः कोकिलो यया सा । व्यलपत् । रुरोदेत्यर्थः । लावण्येनोपमितः पुष्पसायको मदनो येन तत्संबुद्धौ । भूनायक धराङ्गनाभर्तः । भाविन्यागामिनि । वल्लभो रमणः । नीहारकरश्चन्द्रस्तस्य किरणानां मयूखानां निकरस्य समुदायस्य संपर्केण लब्धः प्राप्तोऽवबोधो येन सः । प्रकृतिमापन्न इत्यर्थः । मागधो मागधाधिपो राजहंसः । अगाधस्यादभ्रस्य रुधिरस्यासृजो विक्षरणं विशेषेण संचलनं तेन नष्टा चेष्टा यस्य सः निश्चिन्वानो निश्चयं कुर्वन् । ससंभ्रमं सादरम् । न मन्दोऽमन्दः । हृदयस्यानन्दो हृदयानन्दः । अमन्दश्चासौ हृदयानन्दश्चामन्दहृदयानन्दः तेन संफुल्लं सम्यग्विकसितं प्रसन्नं वदनारविन्दं मुखकमलं यस्याः सा । उपोषिताभ्याम् । जातोत्कण्ठाभ्यामित्यर्थः । अनिमिषिताभ्यां निमेषरहिताभ्याम् । विकस्वरेण[5] समु-

---

पाठा०—१ 'दूरीकृतकलकण्ठकण्ठा'. २ 'भवानेकः'. ३ 'चिरक्षरण'. ४ 'देवीवाक्यमिव' ५ 'पिकस्वरेण'.

विकस्वरेण स्वरेण पुरोहितामात्यजनमुच्चैराहूय तेभ्यस्तमदर्शयत्। राजा निटिलतटचुम्बितनिजचरणाम्बुजैः प्रशंसितदैवमाहात्म्यैरमात्यैरभाणि—'देव, रथ्यचयः सारथ्यपगमे रथं रभसादरण्यमनयत्' इति। 'तत्र निहतसैनिकग्रामे संग्रामे मालवपतिनाराधितपुरारातिना प्रहितया गदया दयाहीनेन ताडितो मूर्च्छामागत्यात्र वने निशान्तपवनेन बोधितोऽभवम्' इति महीपतिरकथयत्। ततो विरचितमहेन मन्त्रिनिवहेन विरचितदैवानुकूल्येन कालेन शिबिरमानीयापनीताशेषशल्यो विकसितनिजाननारविन्दो राजा सहसा विरोपितव्रणोऽकारि। विरोधिदैवधिक्कृतपुरुषकारो दैन्यव्याप्ताकारो मगधाधिपतिरधिकाधिकाधिरमात्यसंमत्या मृदुभाषितया तया वसुमत्या मत्या कलितया च समबोधि—'देव, सकलस्य भूपालकुलस्य मध्ये तेजोवरिष्ठो गरिष्ठो भवानद्य विन्ध्यवनमध्यं

---

न्मीलितेन। 'पिकस्वरेण' इति पाठे पिकस्य कोकिलस्य स्वर इव स्वरो यस्य तेन। उच्चैरिति क्रियाविशेषणम्। निटिलतटेन भालस्थलेन चुम्बितं निजचरणाम्बुजं यैस्तैः। गोधिर्ल्ललाटमलिकं निटिलं भालमर्धकम्' इति पञ्चतत्त्वप्रकाशः। प्रशंसितं दैवमाहात्म्यं दैवमहिमा यैस्तैः। अभाणि। 'भण शब्दार्थः' इति धातोः कर्मणि लुङ्। रथ्यचयोऽश्वसमुदायः। सारथेरपगमो नाशस्तस्मिन्। रभसाद्वेगेन। निहतो निःशेषं हतः सैनिकग्रामो योधसमूहो यस्मिंस्तथाभूते सङ्ग्रामे युद्धे। आराधितः संतोषितः पुरारातिः शिवो येन तेन प्रहितया प्रेरितया दयया हीनस्तेन निशान्तः प्रभातं तत्संबन्धिना पवनेन वायुना। 'निशीत–' इति पाठे नितरां शीत इति पवनविशेषणम्। 'निशीथ–' इति पाठेऽपि निशीथोऽर्धरात्रस्तत्संबन्धिनेति। विरचितो महः पूजासत्कारो येनेति तथा। मन्त्रिणां निवहो वृन्दं तेन। विरचितं कृतं दैवानुकूल्यं तेन येन शिबिरं सेनाया वासस्थानम्। 'तळ' इति भाषायाम्। अपनीतान्युद्धृतान्यशेषाणि शल्यानि सर्वाणि बाणाग्राणि शङ्कवो वा यस्य सः। शलति गच्छतीति शल्यम्। 'वा पुंसि शल्यं शङ्कुर्ना' इत्यमरः। विरोपिताश्चिकित्सिता व्रणा यस्य सः। अकारि। 'डुकृञ् करणे' इत्यस्य कर्मणि लुङ्। विरोधिनाननुकूलेन दैवेन भागधेयेन धिक्कृतः पुरुषकारो विक्रमः। पौरुषमिति यावत्। यस्य सः। दैन्येन खेदेन व्याप्त आकारो यस्य सः। अतिशयेनाधिक आधिर्मनोव्यथा यस्य तथा। 'पुंस्याधिर्मानसी व्यथा' इत्यमरः। अमात्यानां संमतिस्तया। मृदु भाषितं यस्यास्तया। कलितया युक्तया। समबोधि। कर्मणि लुङ्। तेजसा वरिष्ठः। अतिशयेन गुरुर्गरिष्ठः। 'प्रियस्थिर–' (६।४।१५७) इत्यादिना 'वर्

---

पाठा०–१ 'निशीत'; 'निशीथ'.

निवसतीति जलबुद्बुदसमाना विराजमाना संपत्तडिल्लतेव सहसैवोदेति नश्यति च । तन्निखिलं दैवायत्तमेवावधार्य कार्यम् । किं च पुरा हरिश्चन्द्ररामचन्द्रमुख्या असंख्या महीन्द्रा ऐश्वर्योपमितमहेन्द्रा दैवतन्त्रं दुःखयन्त्रं सम्यगनुभूय पश्चादनेककालं निजराज्यमकुर्वन् । तद्वदेव भवान्भविष्यति । कंचन कालं विरचितदैवसमाधिर्गताधिस्तिष्ठतु तावत्' इति ।

ततः सकलसैन्यसमन्वितो राजहंसस्तपोविभ्राजमानं वामदेवनामानं तपोधनं निजाभिलाषावाप्तिसाधनं जगाम । तं प्रणम्य तेन कृतातिथ्यस्तस्मै कथितकथ्यस्तदाश्रमे दूरीकृतश्रमे कंचन कालमुषित्वा निजराज्याभिलाषी मितभाषी सोमकुलावतंसो राजहंसो मुनिमभाषत—'भगवन्, मानसारः प्रबलेन दैवबलेन मां निर्जित्य मद्भोग्यं राज्यमनुभवति । तद्वदहमप्युग्रं तपो विरच्य तमरातिमुन्मूलयिष्यामि लोकशरण्येन भवत्कारुण्येनेति नियमवन्तं भवन्तं प्राप्नवम्' इति । ततस्त्रिकालज्ञस्तपोधनो राजानमवोचत्—

---

गर्' इत्यादेशाः । जलस्य बुद्बुदो विकारस्तत्समाना तत्सदृशी । तडिल्लता विद्युत् । सहसा अकस्मात् । उदेत्युद्गच्छति दृक्पथमायाति । नश्यत्यदर्शनतामेति । निखिलं सर्वम् । दैवायत्तं दैवाधीनम् । अवधार्य निर्णेतव्यम् । हरिश्चन्द्र, रामचन्द्र इति प्रसिद्धराजनामनी, एतौ मुख्यौ येषां ते । ऐश्वर्येण विभवेनोपमितस्तुल्यीकृतो महेन्द्रो देवराजो यैस्ते । दैवतन्त्रं दैवचालितम् । दुःखयन्त्रं दुःखमेव यन्त्रं तत् । विरचिता दैवसमाधिर्येन तथा । गत आधिर्यस्य सः ।

**तत इति ।** समन्वितो युक्तः । तपसा विशेषेण भ्राजतेऽसौ तम् । तप एव धनं यस्य तम् । निजोऽभिलाषस्तस्यावाप्तिः प्राप्तिस्तस्य साधनं साधनभूतम् । जगाम । 'गम्लृ गतौ' इत्यस्य लिटि रूपम् । कृतमातिथ्यं यस्य सः । कथितं निवेदितं कथ्यं कथयितुं योग्यं सर्वं येनैतादृशः । **तदाश्रम इति ।** दूरीकृतः श्रमो यत्रैतादृशे । उषित्वा । 'वस निवासे' । क्त्वो रूपम् । 'ग्रहिज्या–' ( ६।१।१६ ) इति संप्रसारणम् । 'वसतिक्षुधोरिट्' ( ७।२।५२ ) इतीडागमः । 'शासिवसिघसीनां च' ( ८।३।६० ) इति षत्वम् । सोमकुलस्य चन्द्रवंशस्यावतंसो भूषणं ललामभूतः । मानसार इति राजनाम । मया भोग्यं भोक्तव्यम् । 'भोज्यं भक्ष्ये' ( भोग्यमन्यत् ) इति जकारस्य गकारः । अरातिं शत्रुम् । 'अभिघातिपरारातिं–' इत्यमरः । उन्मूलयिष्याम्युन्मूलयितुमुद्यतोऽस्मि । लोकानां शरणे रक्षणे साधुः

---

पाठा०–१ 'निजकार्यम्'.

२ द० कु०

'सखे, शरीरकार्श्यकारिणा तपसालम् । वसुमतीगर्भस्थः सकलरिपुकुलमर्दनो राजनन्दनो नूनं संभविष्यति, कंचन कालं तूष्णीमास्स्व' इति । गगनचारिण्यापि वाण्या 'सत्यमेतत्' इति तदैवावोचि[1] । राजापि मुनिवाक्यमङ्गीकृत्यातिष्ठत् ।

ततः संपूर्णगर्भदिवसा वसुमती सुमुहूर्ते सकललक्षणलक्षितं सुतमसूत । ब्रह्मवर्चसेन तुलितवेधसं पुरोधसं पुरस्कृत्य कृत्यविन्महीपतिः कुमारं सुकुमारं जातसंस्कारेण बालालंकारेण च विराजमानं राजवाहननामानं व्यधत्त । तस्मिन्नेव काले सुमतिसुमन्त्रसुमित्रसुश्रुतानां मन्त्रिणां प्रमतिमित्रगुप्तमन्त्रगुप्तविश्रुताख्या महदभिख्याः[2] सूनवो नवोद्यदिन्दुरुचश्चिरायुषः समजायन्त । राजवाहनो मन्त्रिपुत्रैरात्ममित्रैः सह बालकेलीरनुभवन्नवर्धत ।

अथ कदाचिदेकेन तापसेन रसेन राजलक्षणविराजितं कंचिन्नयनानन्दकरं सुकुमारं कुमारं राज्ञे समर्प्यावोचि[3]—'भूवल्लभ, कुशसमिदानयनाय वनं गतेन मया काचिदशरण्या व्यक्तकार्प-

तेन । नियमवन्तं व्रतिनम् । त्रिकालज्ञो भूतभविष्यद्वर्तमानकालगतं जानातीति तथा । सखे इति कोमलामन्त्रणम् । शरीरस्य देहस्य कार्श्यं कृशस्य भावस्तत्करोतीति तेन तपसालम् । तपो मानुतिष्ठेति भावः । नूनं निश्चितम् । तूष्णीं जोषम् । आस्स्व तिष्ठेत्यर्थः । गगनचारिण्याऽशरीरिण्या ।

**तत इति ।** संपूर्णा गर्भदिवसा नव मासा नव दिवसाश्च यस्याः सा । सुमुहूर्ते उत्तममुहूर्ते काले । सकललक्षणैर्लक्षितं युक्तम् । ब्रह्मणो वर्चो ब्रह्मवर्चसम् । 'ब्रह्महस्तिभ्यां वर्चसः' (५।४।७८) । इत्यच् । तुलितो वेधा ब्रह्मा येन तम् । 'स्रष्टा प्रजापतिर्वेधा' इत्यमरः । पुरोधसमुपाध्यायम् । पुरस्कृत्याग्रे कृत्वा । कृत्यं वेत्तीति तथा । जातसंस्कारेण जननकालेऽनुष्ठितसंस्कारेण बालहैरलंकारैश्च । विराजमानं विशेषेण शोभमानम् । व्यधत्त कृतवान् । सुमतीति मन्त्रिनामानि । प्रमतीति सुतनामानि । महत्यभिख्या शोभा येषां ते । 'महदभिख्याः' इति प्रयोगश्चिन्त्यः । नवः प्रातिपदिकः उद्यन्नुद्गच्छन् इन्दुश्चन्द्रः । 'उन्दी क्लेदने' इति धातुः । तस्य रुक् कान्तिर्येषां ते । चिरायुषश्चिरंजीविनः ॥

**अथेति ।** तापसेन मुनिना । रसेन रागेण । 'रसो गन्धरसे जले । शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः' इति मेदिनी । अवोचि । कर्मणि लुङ् । कुशाश्च समिधश्च तेषामानयनं तस्मै । नास्ति शरण्यं रक्षिता यस्याः सा । 'शरणं गृहर-

**पाठा०**—१ 'अवाचि'. २ 'महाभिख्याः'. ३ 'अवाचि'.

ण्याश्रु मुञ्चन्ती वनिता विलोकिता । 'निर्जने वने किंनिमित्तं रुद्यते त्वया ?' इति पृष्टा सा करसरोरुहैरश्रु प्रमृज्य सगद्गदं माम-वोचत्—'मुने, लावण्यजितपुष्पसायके मिथिलानायके कीर्ति-[1]व्यापृतसुधर्मणि निजसुहृदो मगधराजस्य सीमन्तिनीसीमन्तम-होत्सवाय पुत्रदारसमन्विते पुष्पपुरमुपेत्य कंचन कालमधिवसति समाराधितगिरीशो मालवाधीशो मगधराजं योद्धुमभ्यगात् । तत्र प्रख्यातयोरेतयोरसंख्ये संख्ये वर्तमाने सुहृत्साहाय्यकं कुर्वाणो निजबले [2]सति विदेहे विदेहेश्वरः प्रहारवर्मा जयवता रिपुणाभि-गृह्य कारुण्येन पुण्येन विसृष्टो हतावशेषेण शून्येन सैन्येन सह स्वपुरगमनमकरोत् । ततो वनमार्गेण दुर्गेण गच्छन्नधिकबलेन शबरबलेन रभसादभिहन्यमानो मूलबलाभिरक्षितावरोधः स महा-निरोधः पलायिष्ट । तदीयार्भकयोर्यमयोर्धात्रीभावेन परिकल्पि-

क्षित्रोः' इत्यमरः । व्यक्तं कार्पण्यं दैन्यं यस्याः सा । मुञ्चन्तीत्यत्र तुदादित्वाद्वैक-ल्पिको नुम् । निर्जने जनसंचाररहिते । करावेव सरोरुहाणि तैः । करसरोरुहाभ्या-मिति वक्तव्यम् । प्रमृज्य । 'मृजू शुद्धौ' इति धातुः । ल्यबन्तम् । सगद्गदं सगद्गद-स्वरेण । लावण्येन सौन्दर्येण जितः पुष्पसायको मदनो येन तस्मिन् । कीर्त्या व्यापृता सुधर्मा देवसभा येन तथा । 'धर्मादनिच्केवलात्' ( ५।४।१२४ ) इति धर्मशब्दस्य धर्मन् । निजसुहृदः स्वमित्रस्य सीमन्तिनी वधूस्तस्याः सीमन्तमहो-त्सवो गर्भिण्यवस्थायामनुष्ठातव्यस्य सीमन्तोन्नयनाख्यसंस्कारस्योत्सवस्तदर्थे । 'चतुर्थे गर्भमासे सीमन्तोन्नयनम्' इति सूत्रम् । सीमन्तो यस्मिन्कर्मण्युन्नीयते तत् सीम-न्तोन्नयनम् । पुत्राश्च दाराश्च पुत्रदारास्तैः समन्विते युक्ते । 'उपान्वध्याङ्वसः' ( १।४।४८ ) इत्यनेन कालस्य कर्मत्वम् । समाराधितः सम्यक्पूजितः संतोषितो वा गिरीशः शिवो येन सः । अभ्यगात् । 'इण् गतौ' इति धातुः । संख्ये युद्धे । 'मृधमास्कन्दनं संख्यम्' इत्यमरः । सुहृदः साहाय्यकम् । साहाय्यमेव साहा-य्यकम् । स्वार्थे कप् । निजबले आत्मसैन्ये । विदेहे । मृत इत्यर्थः । 'असति विधेये' इति पाठे 'विधेयो विनयग्राही' इति कोशाद्विनयातिक्रमणशील इति भावः । विदेहानामीश्वरः प्रभुः । शून्येन रिक्तेन । 'शुनः संप्रसारणं वा च दीर्घत्वम्' ( ग. ९६ ) इति यत् । दुःखेन गन्तुं शक्यो दुर्गस्तेन । अधिकं बलं यस्य तेन । शबराणां बलं सैन्यं तेन । रभसाद्वेगेन । अभिहन्यमानः । कर्मणि शानच् । मूलबलं प्रधानसैन्यं तेनाभिरक्षितोऽवरोधः शुद्धान्तो येन सः । महान्निरोधो यस्य तथा । पलायिष्ट । 'अय गतौ' इति धातुः । परेत्युपसर्गस्थरस्य स्थाने 'उपसर्गस्या-

पाठा०—१ 'व्यास'. २ 'असति विधेये'.

ताहं मद्दुहितापि तीव्रगतिं भूपतिमनुगन्तुमक्षमे अभूव । तत्र विवृतवदनः कोऽपि रूपी कोप इव व्याघ्रः शीघ्रं मामाघ्रातुमागतवान् । भीताहमुदग्रग्राविणि स्खलन्ती पर्यपतम् । मदीयपाणिभ्रष्टो बालकः कस्यापि कपिलाशवस्य क्रोडमभ्यलीयत । तच्छवाकर्षिणोऽमर्षिणो व्याघ्रस्य प्राणान्बाणो बाणासनयन्त्रमुक्तोऽपाहरत् । विलोलालको बालकोऽपि शबरैरादाय कुत्रचिदुपानीयत । कुमारमपरमुद्वहन्ती मद्दुहिता कुत्र गता न जाने । साहं मोहं गता केनापि कृपालुना वृष्णिपालेन स्वकुटीरमावेश्य विरोपितव्रणाभवम् । ततः स्वस्थीभूय भूयः क्ष्माभर्तुरन्तिकमुपतिष्ठासुरसहायतया दुहितुरनभिज्ञाततया च व्याकुलीभवामि' इत्यभिदधाना 'एकाकिन्यपि स्वामिनं गमिष्यामि' इति सा तदैव निरगात् । अहमपि भवन्मित्रस्य विदेहनाथस्य विपन्निमित्तं विषादमनुभवंस्तदन्वयाङ्कुरं कुमारमन्विष्यंस्तदैकं चण्डिकामन्दिरं सुन्दरं प्रागाम् । तत्र संततमेवंविधविजयसिद्धये कुमारं देवतोपहारं करिष्यन्तः किराताः 'महीरुहशाखावलम्बितमेनमसिलतया वा,

---

यतौ' ( ८।२।१९ ) इति लादेशः । लुङ् । तस्येमौ तदीयौ च तावर्भकौ तयोः । यमयोः सहजातयोः । धात्र्या उपमातुर्भावस्तेन । तीव्रा गतिर्यस्य तम् । अक्षमे अभूव । प्रगृह्यत्वान्न संधिः । विवृतं व्यात्तं वदनं येन सः । रूपी मूर्तः । आघ्रातुं नाशयितुम् । उद्गतान्यग्राणि यस्यैतादृशो यो ग्रावा तस्मिन् । 'उदग्रपाणिः' इति पाठ उदग्रः पाणिर्यस्याः सा इत्यहमित्यस्य विशेषणं द्रष्टव्यम् । भ्रष्टश्च्युतः । कपिलाया गोः शवः कुणपस्तस्य क्रोडमङ्कदेशम् । अभ्यलीयत प्रच्छन्नोऽभूत् । बाणासनं धनुस्तदेव यन्त्रं तस्मान्मुक्तः । अपाहरज्जहार । विलोलाश्चञ्चला अलकाश्चूर्णकुन्तला यस्य सः । शबरैर्वनवासिभिः । आदाय गृहीत्वा । कुत्रचिदनिर्दिष्टे । अज्ञात इति यावत् । उद्वहन्ती धारयन्ती । सेति पूर्वनिर्दिष्टा मोहं गता विगतसंज्ञा । वृष्णिपालेन मेषपालेन । स्वकुटीरं स्ववासगृहम् । आवेश्य । णिजन्ताल्ल्यप् । भूयः पुनः । क्ष्माभर्तुर्नरेन्द्रस्य । उपतिष्ठासुरुपस्थातुमिच्छुः । असहायतया सहायाभावेन । अभिदधानाभिधत्तेऽसौ । एकाकिन्यसहाया । तदैव तस्मिन्नेव क्षणे । विषादं खेदम् । तस्यान्वयो वंशस्तस्याङ्कुरः प्ररोहः । चण्डिकाया मन्दिरमायतनम् । एवं विधा प्रकारो यस्य तादृशो यो विजयस्तस्य सिद्धिस्तस्यै देवताया उपाहारस्तम् । महीरुहो वृक्षस्तस्य शाखायामवलम्बितम् । असिलता खड्गः । इदं केचित्किराता आहुः ।

---

पाठा०-१ 'उदग्रपाणिः'.

सैकततले खननिक्षिप्तचरणं लक्षीकृत्य शितशरनिकरेण वा, अनेकचरणैः पलायमानं कुक्कुरबालकैर्वा दंशयित्वा[1] संहनिष्यामः' इति भाषमाणा मया समभ्यभाष्यन्त—'ननु किरातोत्तमाः[2], घोरप्रचारे कान्तारे स्खलितपथः स्थविरभूसुरोऽहं मम पुत्रकं कचिच्छायायां निक्षिप्य मार्गान्वेषणाय किंचिदन्तरमगच्छम् । स कुत्र गतः ?, केन वा गृहीतः ?, परीक्ष्यापि न वीक्ष्यते । तन्मुखालोकनेन विनानेकान्यहान्यतीतानि । किं करोमि, क यामि, भवद्भिर्न किमदर्शि ?' इति । 'द्विजोत्तम, कश्चिदत्र तिष्ठति । किमेष तव नन्दनः सत्यमेव ? तदेनं गृहाण' इत्युक्त्वा दैवानुकूल्येन मह्यं तं व्यतरन् । तेभ्यो दत्ताशीरहं बालकमङ्गीकृत्य शिशिरोदकादिनोपचारेणाश्वास्य निःशङ्कं भवदङ्कं समानीतवानस्मि । एनमायुष्मन्तं पितृरूपो भवानभिरक्षतात्' इति । राजा सुहृदापन्निमित्तं शोकं तन्नन्दनविलोकनसुखेन किंचिदधरीकृत्य[3] तमुपहारवर्मनाम्नाहूय राजवाहनमिव पुपोष ।

जनपतिरेकस्मिन्पुण्यदिवसे तीर्थस्नानाय पक्कणनिकटमार्गेण

---

सिकताप्रचुरं सैकतम् । सैकतं च तत्तलं च । खननेन निक्षिप्तौ भूमौ कीलितौ चरणौ यस्य तम् । शितास्तीक्ष्णाश्च ते शराश्च तेषां निकरेण । इदमन्ये अनेकचरणैरिति कुक्कुरबालकैरित्यस्य विशेषणम् । पलायमानमेनं बालकम् । दंशयित्वा दंशं कारयित्वा । 'ददंशयित्वा' इति पाठे यङन्तप्रयोगः । इदमप्यपरे किरातोत्तमाः । प्रार्थनानुकूलमेतत्संबोधनम् । घोरः प्रचारः संचारो यस्मिंस्तथा । कान्तारे दुर्गमे वर्त्मनि स्खलितः पन्था यस्य सः । 'ऋक्पूरब्धूःपथामानक्षे' ( ५।४।७४ ) । पथिन् इत्यस्य पथः । स्थविरो वृद्धः । भूसुरो भुवि पृथ्व्यां सुरो द्विजः । निक्षिप्य संस्थाप्य । मार्गस्यान्वेषणं गवेषणम् । मुखालोकनेन विना । 'पृथग्विना–' ( २।३।३२ ) इति तृतीया । अतीतानि गतानि । अदर्शि । 'दृशिर् प्रेक्षणे' । कर्मणि लुङ् । गृहाण । 'ग्रह उपादाने' । लोटो रूपम् । दैवस्यानुकूल्यं तेन । व्यतरन्नददुः । दत्ताशीर्येन सः शिशिरं शीतम् । निःशङ्कमिति क्रियाविशेषणम् । भवदङ्कं भवन्निकटम् । अभिरक्षतात् । 'तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्' (७।१।३५) इति तातङ् । अधरीकृत्य दूरीकृत्य तनूकृत्य वा । पुपोष वृद्धिं नीतवान् ॥

**जनपतिरिति** । पुण्यदिवसे पर्वणि । तीर्थे स्नानं तीर्थस्नानं तस्मै । पक्कणः

---

**पाठा०–१ 'ददंशयित्वा'. २ 'किरातास्तमोघोरप्रचारे'; 'किराताः सुघोरप्रचारे'. ३ 'संकुचीकृत्य'.**

गच्छन्नबलया कयाचिदुपलालितमनुपमशरीरं कुमारं कंचिदवलोक्य कुतूहलाकुलस्तामपृच्छत्—'भामिनि, रुचिरमूर्तिः सराजगुणसंपूर्तिरसावर्भको भवदन्वयसंभवो न भवति । कस्य नयनानन्दनः, निमित्तेन केन भवदधीनो जातः, कथ्यतां याथातथ्येन त्वया' इति । प्रणतया तया शबर्या सलीलमलापि—'राजन्, आत्मपल्लीसमीपे पदव्यां वर्तमानस्य शक्रसमानस्य मिथिलेश्वरस्य सर्वस्वमपहरति शबरसैन्ये मद्दयितेनापहृत्य कुमार एष मह्यमर्पितो व्यवर्धत' । तदवधार्य कार्यज्ञो राजा मुनिकथितं द्वितीयं राजकुमारमेव निश्चित्य सामदानाभ्यां तामनुनीयापहारवर्मेत्याख्याय देव्यै 'वर्धय' इति समर्पितवान् ।

कदाचिद्वामदेवशिष्यः सोमदेवशर्मा नाम कंचिदेकं बालकं राज्ञः पुरो निक्षिप्याभाषत—'देव, रामतीर्थे स्नात्वा प्रत्यागच्छता मया काननावनौ वनितया कयापि धार्यमाणमेनमुज्ज्वलाकारं कुमारं विलोक्य सादरमभाणि—'स्थविरे, का त्वम् ? एतस्मिन्नटवीमध्ये बालकमुद्वहन्ती किमर्थमायासेन भ्रमसि ?' इति । वृद्धयाप्यभाषि—'मुनिवर, कालयवननाम्नि द्वीपे कालगुप्तो नाम

---

शबरालयः । एवमेव कोशः । अबलया स्त्रिया । उपलालितं प्रेमविधृतमनुपमं शरीरं यस्य तथा । कुतूहलेन कौतुकेनाकुलो व्याप्तः । भामिनि कोपने । 'कोपना सैव भामिनी' इत्यमरः । अत्र तु केवलस्त्रीवाचकोऽयं शब्दः कोपकारणाभावात् । रुचिरा सुन्दरा मूर्तौ रूपं यस्येति तथा । राज्ञो ये गुणास्तेषां संपूर्तिस्तत्सहितः । अन्वयो वंशः । नयने आनन्दयति तथा । कस्य सूनुरित्यर्थः । निमित्तेन कारणेन । भवदधीनस्त्वदायत्तः । याथातथ्येन तत्त्वतः । प्रकर्षेण नता तया । अलापि । 'लप व्यक्तायां वाचि' कर्मणि लुङ् । पल्ली घोषः । पदव्यां मार्गे । 'पन्थानः पदवी सृतिः' इत्यमरः । शक्र इन्द्रः । मिथिलेश्वरस्य मिथिलाधिपस्य प्रहारवर्मणः । सर्वस्वं सर्वद्रव्यम् । 'स्वोऽस्त्रियां धने' इत्यमरः । अपहरति । शत्रन्तस्य सप्तमी । दयितेन वल्लभेन । भर्त्रैत्यर्थः । व्यवर्धत वृद्धिं प्राप्तः । अवधार्य । विमृश्येत्यर्थः । कार्यं जानातीति तथा । साम च दानं च ताभ्याम् । अनुनीय संतोष्य । आख्याय नाम कृत्वा ॥

**कदाचिदिति ।** रामतीर्थ एतन्नाम्नि क्षेत्रे । प्रत्यागच्छता प्रतिनिवर्तमानेन । काननावनावरण्यभुवि । वनितया योषिता । 'वनिता महिला तथा' इत्यमरः । उज्ज्वलो दीप्तिमान् । स्थविरे वृद्धे इति संबुद्धिः । 'प्रवयाः स्थविरो वृद्धः' इति

धनाढ्यो वैश्यवरः कश्चिदस्ति । तन्नन्दिनीं नयनानन्दकारिणीं सुवृत्तां नामैतस्माद्वीपादागतो मगधनाथमन्त्रिसंभवो रत्नोद्भवो नाम रमणीयगुणालयो भ्रान्तभूवलयो मनोहारी व्यवहार्युपयम्य सुवस्तुसंपदा श्वशुरेण संमानितोऽभूत् । कालक्रमेण नताङ्गी गर्भिणी जाता । ततः सोदरविलोकनकुतूहलेन रत्नोद्भवः कथंचिच्छ्वशुरमनुनीय चपललोचनयानया सह प्रवहणमारुह्य पुष्पपुरमभिप्रतस्थे । कल्लोलमालिकाभिहतः पोतः समुद्राम्भस्यमज्जत् । [1]गर्भभरालसां तां ललनां धात्रीभावेन कल्पिताहं कराभ्यामुद्वहन्ती फलकमेकमधिरुह्य दैवगत्या तीरभूमिमगमम् । सुहृज्जनपरिवृतो रत्नोद्भवस्तत्र निमग्नो वा केनोपायेन तीरमगमद्वा न जानामि । क्लेशस्य परां काष्ठामधिगता सुवृत्तास्मिन्नटवीमध्येऽद्य सुतमसूत । प्रसववेदनया विचेतना सा प्रच्छायशीतले तरुतले निवसति । विजने वने स्थातुमशक्यतया जनपदगामिनं मार्गमन्वेष्टुमुद्युक्तया मया विवशायास्तस्याः समीपे बालकं निक्षिप्य गन्तुमनुचितमिति कुमारोऽप्यानायि' इति । तस्मिन्नेव क्षणे वन्यो वारणः कश्चिद-

कोशः । अटव्यरण्यम् । आयासेन कष्टेन । मुनिवर ऋषिश्रेष्ठ । धनाढ्यो धनसमृद्धः । वैश्यवरो वणिक्श्रेष्ठः । नन्दिनीं कन्याम् । नयनयोरानन्दं करोति तथा । मन्त्रिसंभवो मन्त्रिणः पुत्रः । रमणीयगुणानामालयो वसतिस्थानम् । भ्रान्तं भुवो वलयं चक्रं येनेति तथा । मनोहारी मनोज्ञः । अभिराम इत्यर्थः । व्यवहारी वाणिज्यकर्ता । उपयम्य विवाहं कृत्वा । सुवस्तुसंपदा शोभनवस्तुसमृद्ध्या । संमानितः पूजितः । सत्कृत इति यावत् । नतान्यवनम्राण्यङ्गानि यस्यास्तया । सोदरः समानोदर्यः । 'समानोदर्यसोदर्य–' इति कोशः । चपले लोचने यस्याः सा तथोक्ता । प्रवहणं नावम् । अभिप्रतस्थे । 'समवप्रविभ्यः स्थः' ( १।३।२२ ) इत्यात्मनेपदम् । कल्लोला महातरङ्गाः । 'महत्सूल्लोलकल्लोलौ' इत्यमरः । तेषां मालिकाः परम्परास्ताभिरभिहतस्ताडितः । पोतो नौः । अमज्जत् । 'टुमस्जो शुद्धौ' इति धातोर्लङ् । गर्भस्य भरो भारस्तेनालसां जडाम् । ललनां स्त्रियं । धात्रीभावेनोपमातृत्वेन । परां काष्ठामतिशयम् । असूत । 'षूङ् प्राणिगर्भविमोचने' लङ् । प्रसवकाले या वेदना तया । विचेतना निःसंज्ञा । नष्टचेष्टेत्यर्थः । प्रच्छायेन शीतले । 'गोस्त्रियोरुपसर्जनस्य' ( १।२।४८ ) इति ह्रस्वः । विजने निर्जने । जनपदो नीवृत् । देश इति यावत् । विवशा विह्वला । विकलेत्यर्थः । आनायि । 'णीञ् प्रापणे' इत्यस्य आङ्पूर्वस्य कर्मणि लुङ् । 'चिण् भावकर्मणोः' ( ३।१।६६ ) इति चिण् । वने

पाठा०-१ 'गर्भभरात्ताम्'; 'गर्भविलासालसाम्'.

दृश्यत । तं विलोक्य भीता सा बालकं निपात्य प्राद्रवत् । अहं समीपलतागुल्मके प्रविश्य परीक्षमाणोऽतिष्ठम् । निपतितं बालकं पल्लवकवलमिवाददति गजपतौ कण्ठीरवो भीमरवो महाग्रहेण न्यपतत् । भयाकुलेन दन्तावलेन झटिति वियति समुत्पात्यमानो बालको न्यपतत् । चिरायुष्मत्तया स चोन्नततरुशाखासमासीनेन वानरेण केनचित्पक्वफलबुद्ध्या परिगृह्य फलेतरतया विततस्कन्धमूले निक्षिप्तोऽभूत् । सोऽपि मर्कटः क्वचिदगात् । बालकेन सत्त्वसंपन्नतया सकलक्लेशसहेनाभावि । केसरिणा करिणं निहत्य कुत्रचिदगामि । लतागृहान्निर्गतोऽहमपि तेजःपुञ्जं बालकं शनैरवनीरुहादवतार्य वनान्तरे वनितामन्विष्याविलोक्यैनमानीय गुरवे निवेद्य तन्निदेशेन भवन्निकटमानीतवानस्मि' इति । सर्वेषां सुहृदामेकदैवानुकूलदैवाभावेन महदाश्चर्यं बिभ्राणो राजा 'रत्नोद्भवः कथमभवत्' इति चिन्तयंस्तन्नन्दनं पुष्पोद्भवनामधेयं विधाय तदुदन्तं व्याख्याय सुश्रुताय विषादसंतोषावनुभवंस्तदनुजतनयं समर्पितवान् ।

---

भवो वन्यः । वारणो गजः । 'कुञ्जरो वारणः करी' इत्यमरः । अदृश्यत । कर्मणि लङ् । 'दृशिर् प्रेक्षणे' इति धातुः । निपात्य प्रच्याव्य । प्राद्रवदधावत् । द्रुतगत्यापासरदित्यर्थः । लता व्रततिः । गुल्मकेऽप्रकाण्डे । स्वार्थेऽल्पार्थे वा कः । परीक्षमाणः परित ईक्षमाणः । कवलं ग्रासम् । 'ग्रासस्तु कवलः पुमान्' इत्यमरः । कण्ठीरवः सिंहः । 'कण्ठीरवो मृगरिपुः' इत्यमरः । भीमो भयंकरो रवो यस्य स तथा । महाग्रहेण महतावेशेन । चिरायुष्मत्तया दीर्घायुषो भावस्तया । उन्नतस्योच्छ्रितस्य । 'आसन्नोन्नत–' इति पाठे आसन्नः समीपवर्ती । पक्वफलबुद्ध्या पक्वं फलं किमप्येतदिति भ्रान्त्या । फलादितरदिति दृष्ट्वा । वितते विस्तृते स्कन्धस्य प्रकाण्डस्य मूले । मर्कटो वानरः । सत्त्वेन संपन्नस्तस्य भावस्तया । सकलक्लेशसहेन अखिलक्लेशसहिष्णुना । अभावि । 'भू सत्तायाम्' कर्मणि लुङ् । केसरी मृगेन्द्रः । कुत्रचिदनिर्दिष्टे स्थले । लतागृहात् कुञ्जात् । तेजसः पुञ्जं राशिम् । अवन्यां रोहतीत्यवनीरुहो वृक्षस्तस्मात् । अवतार्य । 'तॄ प्लवनतरणयोः' । णिजन्ताल्ल्यप् । अन्यद्वनं वनान्तरं तस्मिन् । एनम् । अन्वादेश इदं रूपम् । निदेशेनाज्ञया । एकदैवैकस्मिन्नेव काले । सममित्यर्थः । **अनुकूलेति** । दैवस्य प्रातिकूल्येनेत्यर्थः । 'महत् आश्चर्यम्' इति भिन्ने पदे । बिभ्राणः । 'डुभृञ् धारणपोषणयोः' । कर्तरि शानच् । **रत्नोद्भव इति** । रत्नोद्भवस्य का गतिः ? । किमभवदित्यर्थः । नामधेयं

---

पाठा०–१ 'आसन्नोन्नत'.

अन्येद्युः कंचन बालकमुरसि दधती वसुमती वल्लभमभिगता। तेन 'कुत्रत्योऽयम्' इति पृष्टा समभाषत—'राजन्, अतीतायां रात्रौ काचन दिव्यवनिता मत्पुरतः कुमारमेकं संस्थाप्य निद्रामुद्रितां मां विबोध्य विनीताब्रवीत्—'देवि, त्वन्मन्त्रिणो धर्मपालनन्दनस्य कामपालस्य वल्लभा [1]यक्षकान्ताहं तारावली नाम, नन्दिनी मणिभद्रस्य। यक्षेश्वरानुमत्या मदात्मजमेतं भवत्तनूजस्याम्भोनिधिवलयवेष्टितक्षोणीमण्डलेश्वरस्य भाविनो विशुद्धयशोनिधे राजवाहनस्य परिचर्याकरणायानीतवत्यस्मि। त्वमेनं मनोजसंनिभमभिवर्धय' इति। विस्मयविकसितनयनया मया [2]सविनयं सत्कृता स्वक्षी यक्षी साप्यदृश्यतामयासीत्' इति। कामपालस्य यक्षकन्यासंगमे विस्मयमानमानसो राजहंसो रञ्जितमित्रं सुमित्रं मन्त्रिणमाहूय तदीयभ्रातृपुत्रमर्थपालं विधाय तस्मै सर्वं वार्तादिकं व्याख्यायादात्।

---

नाम। 'भागरूपनामभ्यो धेयः' (वा० ३३३०) इति धेयप्रत्ययः। विधाय कृत्वा। उदन्तं वार्ताम्। 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्' इत्यमरः। व्याख्याय कथयित्वा। रत्नोद्भवस्य नाशाद्विषादः तन्नन्दनस्य च लाभात्संतोषः। अनु पश्चाज्जातोऽनुजः॥

**अन्येद्युरिति।** अन्येद्युरपरेद्युः। 'सद्यःपरुत्परार्यैषमः–' (५।३।२२) इति निपातः। उरसि दधती लालयन्ती। अभ्यस्तत्वान्नुमभावः। कुत्र भवः कुत्रत्यः। 'अव्ययात्त्यप्' (४।२।१०४) इति त्यप्। अतीतायां गतायाम्। दिवि भवा दिव्या सा चासौ वनिता। निद्रया मुद्रितां निमीलितनेत्राम्। विबोध्य प्रबोधं कृत्वा। विनीता नम्रा। यक्षेश्वरः कुबेरः। तनूजस्य सूनोः। 'तनुजस्तनूजः' इति द्विरूपकोशः। अम्भोनिधिः समुद्रः। स एव वलयः कटकस्तेन वेष्टितं क्षोणीमण्डलं धरामण्डलं तस्येश्वर ईशिता तस्य। भाविनो नाद्यापि भूतस्य। विशेषेण शुद्धो यशसो निधिर्यस्य तस्य। परिचर्या शुश्रूषा। मनोजः कामः। संनिभः सदृशः। विस्मयेनाश्चर्येण विकसिते नयने नेत्रे यस्यास्तया। सविनयमिति क्रियाविशेषणम्। 'सविनया' इति पाठे यक्षीविशेषणम्। सत्कृता संमानिता। स्वक्षी शोभननयना। अदृश्यतामयासीत्। गताभूदित्यर्थः। यक्षकन्यायाः संगमस्तस्मिन्। विस्मयमानं मानसं यस्य तथा। रञ्जितानि मित्राणि येन तम्। आहूय। ह्वेञः संप्रसारणम्। आकार्य। आनाय्येत्यर्थः।

---

पाठा०—१ 'यक्षकन्या'. २ 'सविनया'.

कुलविमलशीतलसलिलललितानि सरांसि दर्शंदर्शममन्दलीलया ललनासमीपमवाप । बालचन्द्रिकया 'निःशङ्कमित आगम्यताम्' इति हस्तसंज्ञया समाहूतो निजतेजोनिर्जितपुरुहूतो राजवाहनः कृशोदर्या अवन्तिसुन्दर्या अन्तिकं समाजगाम । या वसन्तसहायेन समुत्सुकतया रतेः केलीशालभञ्जिकाविधित्सया कंचन नारीविशेषं विरच्यात्मनः क्रीडाकासारशारदारविन्दसौन्दर्येण पादद्वयम्, उद्यानवनदीर्घिकामत्तमरालिकागमनरीत्या लीलालसगतिविलासम्, तूणीरलावण्येन जङ्घे, लीलामन्दिरद्वारकदलीलालित्येन मनोज्ञमूरुयुगम्, जैत्ररथचातुर्येण घनं जघनम्, किंचिद्विकसल्लीलावतंसकह्लारकोरककोटरानुवृत्त्या गङ्गावर्तसनाभिं नाभिम्, सौधारोहणपरिपाट्या वलित्रयम्, मौर्वीमधुकरपङ्क्तिनीलिमलीलया रोमावलिम्, पूर्णसुवर्णकलशशोभया कुचद्वन्द्वम्, लतामण्डपसौकुमार्येण बाहू, जयशङ्खाभिख्यया कण्ठम्, [2]कमनीयकर्णपूरसहकारपल्लवरागेण प्रतिबिम्बीकृतबिम्बं रदनच्छदम्, बाणायमानपुष्पलावण्येन शुचिस्मितम्, अग्रदूतिकाकलकण्ठिकाकलालापमाधुर्येण वचनजातम्,

व्याकुलानि व्याप्तानि । विमलान्यकलुषाणि । ललितानि सुन्दराणि । दर्शंदर्शम् । वारंवारं दृष्ट्वेत्यर्थः । णमुल् । निजतेजसा स्वानुभावेन निःशेषं जितः पुरुहूत इन्द्रो येन । कृशमुदरं यस्याः । अवन्तिसुन्दरीति राजनन्दिनीनाम । **येति ।** प्रथमोच्छ्वासे व्याख्यातत्वादत्र व्याख्यानाद्विरम्यते । विशेषस्तु वक्ष्यते । वसन्तसहायेन कामेन । रतेः कामपत्न्याः केलीशालभञ्जिका क्रीडार्थं निर्मिता पुत्रिका । विधातुं कर्तुमिच्छा विधित्सा तया । 'सनि मीमाघुरभलभ–' ( ७।४।५४ ) इत्यच इत्वभ्यासलोपश्च । कासारः सरः । शारदं शरत्संबन्धि । दीर्घिका वापी । मरालिका हंसी । तूणीरो निषङ्गः । लालित्येन सौन्दर्येण । जयनशीलो जैत्रः । किंचिद्विकसन् यो लीलावतंसभूतः कह्लारकोरकस्तस्य कोटरं निष्कुहः । मध्य इति यावत् । अनुवृत्तिः सादृश्यम् । सौधः सुधानिर्मितं शिरोगृहं प्रासादतलं वा । परिपाट्यनुक्रमः । सोपानपङ्क्तिरित्यर्थः । वलीनामुदरस्थानां त्रयम् । मौर्वी ज्या । नीलिमा नीलत्वम् । रोमावलिं रोमपङ्क्तिम् । पूर्णाः । जलेनेति शेषः । सुवर्णकलशा अनङ्गद्वारदेशस्था मङ्गलसूचकाः । अभिख्या शोभा । कमनीयः सुन्दरः । कर्णपूरः कर्णभूषणम् । प्रतिबिम्बीकृतं बिम्बं येनैतादृशः । बिम्बफलमधरनिर्माणात्प्राग्बिम्बमासीत् । अधुना तु तत्प्रतिबिम्बं जातम् । बिम्बफलादप्यस्या अधरोष्ठेऽधिको राग इति तात्पर्यम् । रदनच्छदमोष्ठम् । बाणवदाचरति तत् । शुचि शुद्धं शुभ्रं वा । अग्रदूतिका प्रथमदूती

पाठा०–१ '°साराविन्द'. २. 'कामि°'.

सकलसैनिकनायकमलयमारुतसौरभ्येण निःश्वासपवनम्, जयध्वजमीनदर्पेण लोचनयुगलम्, चापयष्टिश्रिया भ्रूलते, प्रथमसुहृदः सुधाकरस्यापनीतकलङ्कया कान्त्या वदनम्, लीलामयूरबर्हभङ्ग्या केशपाशं च विधाय समस्तमकरन्दकस्तूरिकासंमितेन मलयजरसेन प्रक्षाल्य कर्पूरपरागेण संमृज्य निर्मितेव रराज । [1]सा मूर्तिमतीव लक्ष्मीर्मालवेशकन्यका स्वेनैवाराध्यमानं संकल्पितवरप्रदानायाविर्भूतं मूर्तिमन्तं मन्मथमिव तमालोक्य मन्दमारुतान्दोलिता लतेव मदनावेशवती चकम्पे । तदनु क्रीडाविश्रम्भान्निवृत्ता लज्जया कानि कान्यपि भावान्तराणि व्यधत्त । 'ललनाजनं सृजता विधात्रा नूनमेषा घुणाक्षरन्यायेन निर्मिता । नो चेदब्जभूरेवंविधनिर्माणनिपुणो यदि स्यात्तर्हि तत्समानलावण्यामन्यां तरुणीं किं न करोति' इति सविस्मयानुरागं विलोकयतस्तस्य समक्षं स्थातुं लज्जिता सती किंचित्सखीजनान्तरितगात्रा तन्नयनाभिमुखैः किंचिदाकुञ्चितै [2]रेचितभ्रूलतैरपाङ्गवीक्षितैरात्मनः कुरङ्गस्यानायमानलावण्यं राजवाहनं विलोकयन्त्यतिष्ठत् । सोऽपि तस्यास्तदोत्पादितभावरसानां सामग्र्या लब्धबलस्येव विषमशरस्य शरव्यायमाणमानसो बभूव ।

---

या कलकण्ठिका कोकिला तस्या यः कल आलापस्तस्य माधुर्येण । वचनं घचः । जातं समूहः । नायको नेता । सुरभेर्भावः सौरभ्यम् । दर्पेणाहंकारेण । सुधाकरश्चन्द्रः । अपनीतः कलङ्कोऽङ्को यस्यास्तया । बर्हं पिच्छम् । भङ्गी रचना । पाशं कलापम् । 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' इत्यमरः । समस्तः सर्व एकीकृतो वा । संमितेन युक्तेन । मलये जातं मलयजं चन्दनम् । परागो धूलिः । रराज । 'राजृ दीप्तौ' लिट् । मूर्तिमती साक्षात् । संकल्पितस्य मनसि चिन्तितस्य वरस्य प्रदानाय । आविर्भूतमागतम् । मन्मथः कामः । विश्रम्भो विश्वासः । यथा घुणसंज्ञः कीटः काष्ठं विध्यन्नक्षराकृतिं निर्मातुं यदृच्छया कदापि प्रभवति तथा । काकतालीयन्यायेनेत्यर्थः । नो चेद्यद्येवं न स्यात्तर्हि । अब्जभूर्ब्रह्मा । अन्तरितान्यावृतानि । रेचिता तिर्यक् विवर्तिता । कुरङ्गो मृगः । आनायो जालम् । समग्रस्य भावस्तया लब्धं बलं येनेति तथा । विषमाः पञ्च कठिनास्तीव्रा वा शरा यस्य । कामस्येत्यर्थः । शरव्यं लक्ष्यम् ॥

---

पाठा०—१ 'मूर्तिमतीव लक्ष्मीर्मालवेशकन्यकास्ते । सैवाराध्यमानं'. २ 'अञ्चित'.

सा मनसीत्थमचिन्तयत्—'अनन्यसाधारणसौन्दर्येणानेन कस्यां पुरि भाग्यवतीनां तरुणीनां लोचनोत्सवः क्रियते ? पुत्ररत्नेनामुना पुरन्ध्रीणां पुत्रवतीनां सीमन्तिनीनां का नाम सीमन्तमौक्तिकीक्रियते ? कास्य देवि ? किमत्रागमनकारणमस्य ? मन्मथो मामपहसितनिजलावण्यमेनं विलोकयन्तीमसूययेवातिमात्रं मभ्रन्निजनाम सान्वयं करोति । किं करोमि । कथमयं ज्ञातव्यः ?' इति । ततो बालचन्द्रिका तयोरन्तरङ्गवृत्तिं भावविवेकैर्ज्ञात्वा कान्तासमाजसंनिधौ राजनन्दनोदन्तस्य सम्यगाख्यानमनुचितमिति लोकसाधारणैर्वाक्यैरभाषत—'भर्तृदारिके, अयं सकलकलाप्रवीणो देवतासांनिध्यकरण आहवनिपुणो भूसुरकुमारो मणिमन्त्रौषधिज्ञः परिचर्यार्हो भवत्या पूज्यताम्' इति । तदाकर्ण्य निजमनोरथमनुवदन्त्या बालचन्द्रिकया संतुष्टान्तरङ्गा तरङ्गावली मन्दानिलेनेव संकल्पजेनाकुलीकृता राजकन्या जितमारं कुमारं समुचितासनासीनं विधाय सखीहस्तेन शस्तेन गन्धकुसुमाक्षतघनसारताम्बूलादिनानाजातिवस्तुनिचयेन पूजां तस्मै कारयामास ।

राजवाहनोऽप्येवमचिन्तयत्—'नूनमेषा पूर्वजन्मनि मे जाया यज्ञवती । नो चेदेतस्यामेवंविधोऽनुरागो मन्मनसि न जायेत । शापावसानसमये तपोनिधिदत्तं जातिस्मरत्वमावयोः समानमेव । तथापि कालजनितविशेषसूचकवाक्यैरस्या ज्ञानमुत्पादयिष्यामि । तस्मिन्नेव समये कोऽपि मनोरमो राजहंसः केलीविधित्सया तदुपकण्ठमगमत् । समुत्सुकया राजकन्यया मरालग्रहणे नियुक्तां बालचन्द्रिकामवलोक्य 'समुचितो वाक्यावसरः' इति संभाषण-

**सेति** । पुरन्ध्रीणां पतिपुत्रवतीनाम् । 'कुटुम्बिनी । पुरन्ध्री' इत्यमरः । **सीमन्तेति** । सीमन्तः सीमन्तिनी नारी । 'नारी सीमन्तिनी वधूः' इत्यमरः । केशवेशः । का पुत्रवतीनां धुरि तिष्ठतीति तात्पर्यार्थः । असूयया अक्षमया । **निजनामेति** । सान्वयमन्वर्थम् । मामप्यनङ्गं करोति किमिति शङ्कते । अन्तरङ्गवृत्तिं मनोवृत्तिम् । भावो मानसो विकारः । 'विकारो मनसो भावः' इत्यमरः । उदन्तो वृत्तान्तः । सांनिध्यकरणो देवतासाक्षात्कारवान् । आहवो युद्धम् । परिचर्या पूजासत्कारः । अनुवदन्त्या सदृशं वदन्त्या । जितो मारः कन्दर्पो येन ।

पाठा०—१ 'इतरेतररागवृत्तिम्'.

निपुणो राजवाहनः सलीलमलपत्—'सखि, पुरा शाम्बो नाम कश्चिन्महीवल्लभो मनोवल्लभया सह विहारवाञ्छया कमलाकरमवाप्य तत्र कोकनदकदम्बसमीपे निद्राधीनमानसं राजहंसं शनैर्गृहीत्वा बिसगुणेन तस्य चरणयुगलं निगडयित्वा कान्तामुखं सानुरागं विलोकयन्मन्दस्मितविकसितैककपोलमण्डलस्तामभाषत—'इन्दुमुखि, मया बद्धो मरालः शान्तो मुनिवदास्ते । स्वेच्छयानेन गम्यताम्' इति । सोऽपि राजहंसः शाम्बमशपत्—'महीपाल, यदस्मिन्नम्बुजखण्डेऽनुष्ठानपरायणतया परमानन्देन तिष्ठन्तं नैष्ठिकं मामकारणं राज्यगर्वेणावमानितवानसि तदेतत्पाप्मना रमणीविरहसंतापमनुभव' इति । विषण्णवदनः शाम्बो जीवितेश्वरीविरहमसहिष्णुर्भूमौ दण्डवत्प्रणम्य सविनयमभाषत—'महाभाग, यदज्ञानेनाकरवं तत्क्षमस्व' इति । स तापसः करुणाकृष्टचेतास्तमवदत्—'राजन्, इह जन्मनि भवतः शापफलाभावो भवतु । मद्वचनस्यामोघतया भाविनि जनने शरीरान्तरं गताया अस्याः सरसिजाक्ष्या रसेन रमणो भूत्वा मुहूर्तद्वयं मच्चरणयुगलबन्धकारितया मासद्वयं शृङ्खलानिगडितचरणो रमणीवियोगविषादमनुभूय पश्चादनेककालं वल्लभया सह राज्यसुखं लभस्व' इति । तदनु जातिस्मरत्वमपि तयोरन्वगृह्णात् । 'तस्मान्मरालबन्धनं न करणीयं त्वया' इति । सापि भर्तृदारिका तद्वचनाकर्णनाभिज्ञातस्वपुरातनजननवृत्तान्ता 'नूनमयं मत्प्राणवल्लभः' इति मनसि जानती रागपल्लवितमानसा समन्दहासमवोचत्—'सौम्य, पुरा शाम्बो यज्ञवतीसंदेशपरिपालनाय तथाविधं हंसबन्धनमकार्षीत् । तथा हि लोके पण्डिता अपि दाक्षिण्येनाकार्यं कुर्वन्ति' इति ।

---

तपोनिधिर्मुनिः । जातिस्मरत्वं पूर्वजातिस्मरणम् । विधित्सा कर्तुमिच्छा । मरालो हंसः । महीवल्लभो राजा । कमलाकरः सरः । कोकनदं रक्तोत्पलम् । बिसानां मृणालतन्तूनां गुणो रज्जुः । तन्निर्मित इत्यर्थः । खण्डे समुदाये । नैष्ठिकं ब्रह्मचारिणम् । पाप्मना पापेन । 'अस्त्री पङ्कं पुमान्पाप्मा' इत्यमरः । **शापफलाभाव**

---

पाठा०-१ 'हासपूर्वम्'.

कन्याकुमारावेवमन्योन्यपुरातनजनननामधेये [1]परिचिते परस्परज्ञानाय साभिज्ञमुक्त्वा मनोजरागपूर्णमानसौ बभूवतुः ।

तस्मिन्नवसरे मालवेन्द्रमहिषी परिजनपरिवृता दुहितृकेलीविलोकनाय तं देशमवाप । बालचन्द्रिका तु तां दूरतो विलोक्य ससंभ्रमं रहस्यनिर्भेदभिया हस्तसंज्ञया पुष्पोद्भवसेव्यमानं राजवाहनं वृक्षवाटिकान्तरितगात्रमकरोत् । सा मानसारमहिषी सखीसमेताया दुहितुर्नानाविधां विहारलीलामनुभवन्ती क्षणं स्थित्वा दुहित्रा समेता निजागारगमनायोद्युक्ता बभूव । मातरमनुगच्छन्त्यवन्तिसुन्दरी 'राजहंसकुलतिलक, विहारवाञ्छया केलीवने मदन्तिकमागतं भवन्तमकाण्ड एव विसृज्य मया समुचितमिति जनन्यनुगमनं क्रियते । तदनेन [2]भवन्मनोरागोऽन्यथा मा भूत् । इति मरालमिव कुमारमुद्दिश्य समुचितालापकलापं वदन्ती पुनःपुनः [3]परिवृत्तदीननयना वदनं विलोकयन्ती निजमन्दिरमगात् । तत्र हृदयवल्लभकथाप्रसङ्गे बालचन्द्रिकाकथिततदन्वयनामधेया मन्मथबाणपतनव्याकुलमानसा विरहवेदनया दिने दिने बहुलपक्षशशिकलेव क्षामक्षामाहारादिसकलं व्यापारं परिहृत्य रहस्यमन्दिरे मलयजरसक्षालितपल्लवकुसुमकल्पिततल्प[4]तलावर्तितनुलता बभूव । तत्र तथाविधावस्थामनुभवन्तीं मन्मथानलसंतप्तां सुकुमारीं कुमारीं निरीक्ष्य खिन्नो वयस्यागणः काञ्चनकलशसंचितानि

---

**इति ।** मम शापो न त्वां बाधतामित्यर्थः । अमोघतया अनिष्फलतया । जनने जन्मनि । रसेनानुरागेण । निगडितौ बद्धौ । दाक्षिण्यं परच्छन्दानुरोधः ॥

**तस्मिन्निति ।** महिषी पट्टाभिषिक्ता । रहस्यं भिद्येदिति भिया । वाटिका गृहोद्यानम् । 'वाटी वास्तौ गृहोद्यानकट्योः' इति हैमः । राजहंसस्य पक्षिविशेषस्य कुले तिलक इव भूषणभूतः । पक्षे राजहंसस्यैतन्नाम्नो राज्ञः कुले तिलकः । अकाण्डे सहसा । आलापकलापं वचनजातम् । बहुलपक्षः कृष्णपक्षः । शशी चन्द्रः । क्षामक्षामा अतिकृशा । मलयजं चन्दनं तस्य रसेन क्षालिताः पल्लवाः कुसुमानि च तैः कल्पितं तल्पं शय्या तस्य तले आवर्तिनी तनुलता यस्याः । उशीरो नलदः, 'वाळा' इति ख्यातः । घनसारः कर्पूरः । अभिषेकः स्नानम् । तालवृन्तानि व्यजनानि । वयस्यागणोऽशिशिरयदिति संबन्धः । दहनमग्निम् । अयोमयैर्लोहनिर्मितैः । इषुभिर्बाणैः । वडवानलात्

---

**पाठा०—१** 'नामधेयपरिचितेः'. २ 'भवदनुरागः'. ३ 'परिवृत्य'. ४ 'तलायत्त'.

हरिचन्दनोशीरघनसारमिलितानि तदभिषेककल्पितानि सलिलानि बिसतन्तुमयानि वासांसि च नलिनीदलमयानि तालवृन्तानि च संतापहरणानि बहूनि संपाद्य तस्याः शरीरमशिशिरयत् । तदपि शीतलोपचरणं सलिलमिव तप्ततैले तदङ्गे दहनमेव समन्तादाविश्चकार । किंकर्तव्यतामूढां विषण्णां बालचन्द्रिकामीषदुन्मीलितेन कटाक्षवीक्षितेन बाष्पकणाकुलेन विलोक्य विरहानलोष्णनिःश्वासग्लपिताधरया नताङ्ग्या शनैः सगद्गदं व्यलापि—'प्रियसखि, कामः कुसुमायुधः पञ्चबाण इति नूनमसत्यमुच्यते । इयमहमयोमयैरसंख्यैरिषुभिरनेन हन्ये । सखि, चन्द्रमसं [1]वडवानलादतितापकरं मन्ये । यदस्मिन्नन्तः प्रविशति शुष्यति पारावारः, सति निर्गते तदैव वर्धते । दोषाकरस्य दुष्कर्म किं वर्ण्यते मया । यदनेन [2]निजसोदर्याः पद्मालयाया गेहभूतमपि कमलं विहन्यते । विरहानलसंतप्तहृदयस्पर्शेन नूनमुष्णीकृतः स्वल्पीभवति मलयानिलः । नवपल्लवकल्पितं तल्पमिदमनङ्गाग्निशिखापटलमिव संतापं तनोस्तनोति । हरिचन्दनमपि पुरा निजयष्टिसंश्लेषवदुरगरदनलिप्तोल्बणगरलसंकलितमिव तापयति शरीरम् । तस्मादलमलमायासेन शीतलोपचारे । लावण्यजितमारो राजकुमार एवागदंकारो मन्मथज्वरापहरणे । सोऽपि लब्धुमशक्यो मया । किं करोमि' इति । बालचन्द्रिका मनोजज्वरावस्थापरमकाष्ठां गतां कोमलाङ्गीं तां राजवाहनलावण्याधीनमानसामनन्यशरणामवेक्ष्यात्मन्यचिन्तयत्—'कुमारः सत्वरमानेतव्यो मया । नो चेदेनां स्मरणीयां गतिं नेष्यति मीनकेतनः । तत्रोद्याने कुमारयोरन्योन्यावलोकनवेलायामसमसायकः समं मुक्तसायकोऽभूत् । तस्मात्कुमारानयनं सुकरम्'

---

सागरान्तर्गताद्वह्नेः । पारावारः समुद्रः । तदैव तस्मिन्नेव काले । दोषा रात्रिस्तां करोतीति तथा । दोषाणामाकरस्य । सोदरी भगिनी । पद्मालया लक्ष्मीः । गेहं गृहम् । निजशब्देन चन्दनग्रहणम् । निजयष्टेः चन्दनकाण्डस्य संश्लेषवन्त आश्लेषिणो ये उरगाः पन्नगास्तेषां रदनेषु दन्तेषु लिप्तं यदुल्बणं तीव्रं गरलं विषं तेन संकलितं व्याप्तम् । अगदंकारो भिषक् । 'कारे सत्यागदस्य' ( ६।३।७० ) इति मुम् । स्मरणीयां गतिं नेष्यति कथीकृतवपुषं करिष्यति । असमसायको मदनः । सम-

---

पाठा०—१ 'वाडवानलात्'. २ 'निजसहोदर्याः'.

इति । ततोऽवन्तिसुन्दरीरक्षणाय समयोचितकरणीयचतुरं सखीगणं नियुज्य राजकुमारमन्दिरमवाप । पुष्पवाणवाणतूणीरायमाणमानसोऽनङ्गतप्तावयवसंपर्कपरिम्लानपल्लवशयनमधिष्ठितो राजवाहनः प्राणेश्वरीमुद्दिश्य सह पुष्पोद्भवेन संलपन्नागतां प्रियवयस्यामालोक्य पादमूलमन्वेषणीया[1] लतेव बालचन्द्रिकागतेति संतुष्टमना निटिलतटमण्डनीभवदम्बुजकोरकाकृतिलसदञ्जलिपुटाम् 'इतो निषीद' इति निर्दिष्टसमुचितासनासीनामवन्तिसुन्दरीप्रेषितं सकर्पूरं ताम्बूलं विनयेन ददतीं तां कान्तावृत्तान्तमपृच्छत्[2] । तया सविनयमभाणि—'देव, क्रीडावने भवदवलोकनकालमारभ्य मन्मथमथ्यमाना पुष्पतल्पादिषु तापशमनमलभमाना वामनेनेवोन्नततरुफलमलभ्यं त्वदुरःस्थलालिङ्गनसौख्यं स्मरान्धतया लिप्सुः सा स्वयमेव पत्रिकामालिख्य 'वल्लभायैनामर्पय' इति मां नियुक्तवती' । राजकुमारः पत्रिकां तामादाय पपाठ—

'सुभग कुसुमसुकुमारं जगदनवद्यं विलोक्य ते रूपम् ।
मम मानसमभिलषति त्वं[3] चित्तं कुरु तथा मृदुलम् ॥'

इति पठित्वा सादरमभाषत—'सखि, छायावन्मामनुवर्तमानस्य पुष्पोद्भवस्य वल्लभा त्वमेव तस्या मृगीदृशो बहिश्चराः प्राणा इव वर्तसे । त्वच्चातुर्यमस्यां क्रियालतायामालवालमभूत् । तदखिलं[4] करिष्यामि । नताङ्ग्या मन्मनःकाठिन्यमाख्यातम् । यदा केलीवने कुरङ्गलोचना[5] लोचनपथमवर्तत तदैवापहृतमदीयमानसा सा स्वमन्दिरमगात् । सा चेतसो माधुर्यकाठिन्ये स्वयमेव जानाति । दुष्करः

मेककाले । मुक्तसायकोऽभूद्वेधमकरोत् । अन्वेषणीया महौषधत्वादन्वेषणार्हा । निटिलं ललाटम् । वामनो ह्रस्वाकृतिर्नरः । उन्नत उच्चः । लिप्सुर्लब्धुमिच्छति तथा । सुभग सुन्दरेति कोमलामन्त्रणे । कुसुममिव सुकुमारं पेलवम् । जगति अनवद्यं निर्दोषम् । यथा तव वपुः कोमलं न तथा तव चित्तमिति तद्विषया प्रार्थना । अत एवाग्र उक्तम् । 'नताङ्ग्या मन्मनःकाठिन्यमाख्यातम्' इति । बहिश्चरन्ति ते । त्वं तस्याः प्राणतुल्या । ते प्राणा अन्तर्निवसन्ति, त्वद्रूपा बहिश्चरन्तीत्येव भेदः ।

पाठा०—१ 'पादपमूलम्'. २ 'कान्तवृत्तान्तम्'. ३ 'त्वच्चित्तम्'. ४ 'यत्तवाभीष्टं येन प्रियामनोरथः फलिष्यति तदखिलम्'. ५ 'गतमनाः कुरङ्गलोचना'.

कन्यान्तःपुरप्रवेशः। तदनुरूपमुपायमुपपाद्य श्वः परश्वो वा नताङ्गीं संगमिष्यामि। मदुदन्तमेवमाख्याय शिरीषकुसुमसुकुमाराया यथा शरीरबाधा न जायेत तथाविधमुपायमाचर' इति। बालचन्द्रिकापि तस्य प्रेमगर्भितं वचनमाकर्ण्य संतुष्टा कन्यापुरमगच्छत्। राजवाहनोऽपि यत्र हृदयवल्लभावलोकनसुखमलभत तदुद्यानं विरहविनोदाय पुष्पोद्भवसमन्वितो जगाम। तत्र चकोरलोचनावचितपल्लवकुसुमनिकुरम्बं महीरुहसमूहं शरदिन्दुमुख्या मन्मथसमाराधनस्थानं च नताङ्गीपदपङ्क्तिचिह्नितं शीतलसैकततलं च सुदतीभुक्तमुक्तं माधवीलतामण्डपान्तरपल्लवतल्पं च विलोकयँल्ललनातिलकविलोकनवेलाजनितशेषाणि स्मारंस्मारं मन्दमारुतकम्पितानि नवचूतपल्लवानि मदनाग्निशिखा इव चकितो दर्शंदर्शं मनोजकर्णेजपानामिव कोकिलकीरमधुकराणां क्वणितानि श्रावंश्रावं मारविकारेण क्वचिदप्यवस्थातुमसहिष्णुः परिबभ्राम।

तस्मिन्नवसरे धरणीसुर एकः सूक्ष्मचित्रनिवसनः स्फुरन्मणिकुण्डलमण्डितो मुण्डितमस्तकमानवसमेतश्चतुरवेषमनोरमो यदृच्छया समागतः समन्ततोऽभ्युल्लसत्तेजोमण्डलं राजवाहनमाशीर्वादपूर्वकं ददर्श। राजा सादरम् 'को भवान्, कस्यां विद्यायां निपुणः?' इति तं पप्रच्छ। स च 'विद्येश्वरनामधेयोऽहमैन्द्रजालिकविद्याकोविदो विविधदेशेषु राजमनोरञ्जनाय भ्रमन्नुज्जयिनीमद्यागतोऽस्मि' इति शशंस। पुनरपि राजवाहनं सम्यगालोक्य

---

क्रियैव लता तस्याम्। अलवालमावालम्। 'अळें' इति भाषायाम्। लोचनपथमवर्तत। दृष्टेत्यर्थः। अनुरूपं योग्यम्। उपपाद्य संपाद्य। श्व आगामिनि दिवसे। परश्वस्ततः परस्मिन्दिवसे। प्रेमगर्भितं प्रेमयुक्तम्। चकोराविव लोचने यस्याः सा। हृदयवल्लभेत्यर्थः। निकुरम्बं समूहम्। ललनातिलकशब्देन सैव गृह्यते। स्मारंस्मारं स्मृत्वा स्मृत्वा दर्शंदर्शं दृष्ट्वा दृष्ट्वा। कर्णेजपः सूचकः। अलुक्समासः। 'तत्पुरुषे कृति बहुलम्' (६।३।१४) इति सूत्रम्॥

**तस्मिन्निति।** धरणीसुरो विप्रः। सूक्ष्मं चित्रं च निवसनं वासो यस्य। स्फुरद्भ्यां मणिनिर्मिताभ्यां कुण्डलाभ्यां कर्णभूषणाभ्यां मण्डितः शोभितः। मुण्डितं मस्तकं यस्यैतादृशेनापरेण मानवेन समेतो युक्तः। यदृच्छया अकस्मात्। उल्लसत्तेजसां मण्डलं यस्य तम्। आशीर्वाद आशीर्वचनम्, स पूर्वो यस्मिन्यथा तथा।

'अस्यां लीलावनौ पाण्डुरतानिमित्तं किम् ?' इति साभिप्रायं विहस्यापृच्छत् । पुष्पोद्भवश्च[1] निजकार्यैकरणं तर्कयन्नेनम्[2]आदरेण बभाषे—'ननु सतां सख्यस्याभाषणपूर्वतयाचिरं रुचिरभाषणो भवानस्माकं प्रियवयस्यो जातः । सुहृदामकथ्यं च किमस्ति ? केलीवनेऽस्मिन्वसन्तमहोत्सवायागताया मालवेन्द्रसुताया राजनन्दनस्यास्य चाकस्मिकदर्शनेऽन्योन्यानुरागातिरेकः समजायत । सततसंभोगसिद्ध्युपायाभावेनासावीदृशीमवस्थामनुभवति' इति । विद्येश्वरो लज्जाभिरामं राजकुमारमुखमभिवीक्ष्य विरचितमन्दहासो व्याजहार—'देव, भवदनुचरे मयि तिष्ठति तव कार्यमसाध्यं किमस्ति ? अहमिन्द्रजालविद्यया मालवेन्द्रं मोहयन्पौरजनसमक्षमेव तत्तनयापरिणयं रचयित्वा कन्यान्तःपुरप्रवेशं कारयिष्यामीति वृत्तान्त एष राजकन्यकायै सखीमुखेन पूर्वमेव कथयितव्यः' इति । संतुष्टमना महीपतिरनिमित्तं मित्रं प्रकटीकृतकृत्रिमक्रियापाटवं विप्रलम्भकृत्रिमप्रेमसहजसौहार्दवेदिनं तं विद्येश्वरं सबहुमानं विससर्ज ।

अथ राजवाहनो विद्येश्वरस्य क्रियापाटवेन फलितमिव मनोरथं मन्यमानः पुष्पोद्भवेन सह स्वमन्दिरमुपेत्य सादरं बालचन्द्रिकामुखेन निजवल्लभायै महीसुरक्रियमाणं संगमोपायं वेदयित्वा कौतुकाकृष्टहृदयः 'कथमिमां क्षपां क्षपयामि' इत्यतिष्ठत् ।

---

ऐन्द्रजालिकविद्या गारुडम् । कोविदो ज्ञाता । शशंस कथयामास । लीलायाः क्रीडाया अवनिर्भूमिः । आभाषणं पूर्वं यस्मिंस्तत्तस्य भावस्तया । अकथ्यं कथनायोग्यम् । सततं नित्यं नित्यसंभोगसिद्धिर्यथा भवेत्तथोपायं न लभत इत्यर्थः । लज्जयाभिरामं सुन्दरम् । विरचितः कृतः अनिमित्तं निष्कारणम् । प्रकटीकृतं दर्शितं कृत्रिमक्रियायां पाटवं कुशलत्वं येन तम् । विप्रलम्भं च कृत्रिमप्रेम च सहजसौहार्दं च वेत्तीति तथा । सबहुमानम् । बहुमानपुरःसरमित्यर्थः ॥

**अथेति ।** विद्येश्वरस्यैतन्नामकस्यैन्द्रजालिकस्य क्रियतेऽसौ क्रियमाणः । क्षपां रात्रिम् । क्षपयामि नयामि । 'क्षै क्षये' इति धातोर्णिजन्तम् । 'आदेच उपदेशे–' ( ६।१।४५ ) इत्यात्वम् । 'अर्तिह्री–' ( ७।३।३६ ) इत्यादिना पुगागमः ।

---

**पाठा०–१** 'पुष्पोद्भवश्चैन्द्रजालिके'; 'पुष्पोद्भवश्चैन्द्रजालिकचातुर्यम्'. २ 'एवम्'.

परेद्युः प्रभाते विद्येश्वरो [1]रसभावरीतिगतिचतुरस्तादृशेन महता निजपरिजनेन सह राजभवनद्वारान्तिकमुपेत्य दौवारिकनिवेदित-निजवृत्तान्तः सहसोपगम्य सप्रणामम् 'ऐन्द्रजालिकः समागतः' इति द्वाःस्थैर्विज्ञापितेन तद्दर्शनकुतूहलाविष्टेन समुत्सुकावरोधस-हितेन मालवेन्द्रेण समाहूयमानो विद्येश्वरः कक्षान्तरं प्रविश्य सविनयमाशिषं दत्त्वा तदनुज्ञातः परिजनताड्यमानेषु वाद्येषु नदत्सु, गायकीषु मदकलकोकिलामञ्जुलध्वनिषु, समधिकरागरञ्जि-तसामाजिकमनोवृत्तिषु पिच्छिकाभ्रमणेषु, [2]सं परिवारं परिवृतं भ्रामयन्मुकुलितनयनः क्षणमतिष्ठत् । तदनु विषमं विषमुल्बणं वमन्तः फणालंकरणा रत्नराजिनीराजितराजमन्दिराभोगा भोगिनो भयं जनयन्तो निश्चेरुः । गृध्राश्च बहवस्तुण्डैरहिपतीनादाय दिवि समचरन् । ततोऽग्रजन्मा नरसिंहस्य हिरण्यकशिपोर्दैत्येश्वरस्य विदारणमभिनीय महदाश्चर्यान्वितं राजानमभाषत—'राजन्, अवसानसमये भवता शुभसूचकं द्रष्टुमुचितम् । ततः कल्याण-परम्परावाप्तये भवदात्मजाकारायास्तरुण्या निखिललक्षणोपेतस्य राजनन्दनस्य विवाहः कार्यः' इति । तदवलोकनकुतूहलेन महीपाले-

---

मित्त्वाद्ध्रस्वः । परेद्युरन्येद्युः । प्रभाते प्रातः । रसाः शृङ्गारादयः । भावोऽभिप्राय-सूचनम् । रीतिगतय इन्द्रजालविद्यान्तर्गताः । दौवारिको द्वाःस्थः । अवरोधः शुद्धान्तः । राजस्त्रिय इत्यर्थः । कक्षान्तरमन्यां कक्षाम् । गायक्यो गानकर्त्र्यः स्त्रियः । मदेन कलोऽव्यक्तमधुरस्वनो यः कोकिलस्तद्वन्मञ्जुलो ध्वनिर्यासां तासु सत्सु । सामाजिकाः सभ्याः प्रेक्षकजनाः । पिच्छिकाः पिच्छगुच्छाः ऐन्द्रजालि-कानामुपकरणभूता । एताः । परिवृतं मण्डलाकारम् । 'परिवृढम्' इति पाठे बहुने-कविधं वेत्यर्थः । मुकुलिते पिहिते ईषदुन्मीलिते वा । उल्बणं तीव्रम् । रत्नानां शिरःस्थितानामित्यर्थः । राजयः पङ्क्तयस्ताभिर्नीराजितो राजमन्दिरप्रदेशो यैस्ते । भोगिनः सर्पाः । तुण्डैर्मुखैः । अहिपतीन् भोगिश्रेष्ठान् । आदाय गृहीत्वा । दिव्या-काशे । अग्रजन्मा द्विजः । नरसिंहस्य प्रसिद्धविष्णुरूपस्य । विदारणं नखैः पाटनम् । अभिनीय भूमिकादिग्रहणेन दर्शयित्वा । महदाश्चर्यान्वितमिति प्रामादिकम् । कल्याणानां परम्परा तस्या अवाप्तिस्तस्यै । आत्मजा दुहिता । निखिलानि सर्वाणि

---

पाठा०—१ 'रसभावगीतिरीतिगति'. २ 'सपरिवारं परिवृढम्'.

नानुज्ञातः स संकल्पितार्थसिद्धिसंभावनसंफुल्लवदनः सकलमोहजनकमञ्जनं लोचनयोर्निक्षिप्य परितो व्यलोकयत् । सर्वेषु 'तदैन्द्रजालिकमेव कर्म' इति साद्भुतं पश्यत्सु रागपल्लवितहृदयेन राजवाहनेन पूर्वसंकेतसमागतामनेकभूषणभूषिताङ्गीमवन्तिसुन्दरीं वैवाहिकमन्त्रतन्त्रनैपुण्येनाग्निं साक्षीकृत्य संयोजयामास । क्रियावसाने सति 'इन्द्रजालपुरुषाः, सर्वे गच्छन्तु भवन्तः' इति द्विजन्मनोच्चैरुच्यमाने सर्वे मायामानवा यथायथमन्तर्भावं गताः । राजवाहनोऽपि पूर्वसंकल्पितेन गूढोपायचातुर्येणैन्द्रजालिकपुरुषवत्कन्यान्तःपुरं विवेश । मालवेन्द्रोऽपि तदद्भुतं मन्यमानस्तस्मै वाडवाय प्रचुरतरं धनं दत्त्वा विद्येश्वरम्[1] 'इदानीं साधय' इति विसृज्य स्वयमन्तर्मन्दिरं जगाम । ततोऽवन्तिसुन्दरी प्रियसहचरीवरपरिवारा वल्लभोपेता सुन्दरं मन्दिरं ययौ । एवं दैवमानुषबलेन मनोरथसाफल्यमुपेतो राजवाहनः सरसमधुरचेष्टाभिः शनैःशनैर्हरिणलोचनाया लज्जामपनयन्सुरतरागमुपनयन्रहो विश्रम्भमुपजनयन्संलापे तदनुलापपीयूषपानलोलश्चित्रचित्रं चित्तहारिणं चतुर्दशभुवनवृत्तान्तं श्रावयामास ॥

इति श्रीदण्डिनः कृतौ दशकुमारचरितेऽवन्तिसुन्दरीपरिणयो नाम पञ्चमोच्छ्वासः ॥

## समाप्तेयं दशकुमारचरितपूर्वपीठिका ।

---

संकल्पितस्यार्थस्य सिद्धेः संभावना संभवस्तेन संफुल्लं वदनं यस्य सः । इन्द्रजालस्येदमैन्द्रजालिकम् । साद्भुतमिति क्रियाविशेषणम् । पश्यत्सु सत्सु । वैवाहिका विवाहसंबन्धिनः । तन्त्राणि नानाविधदेवतोपासनामार्गप्रतिपादका ग्रन्थविशेषाः । अवसानमन्तः । इन्द्रजालपुरुषा मायापुरुषाः । अन्तर्भावमदर्शनम् । वाडवाय ब्राह्मणाय । साधय गच्छ । दैवं च तन्मानुषं च । पीयूषममृतम् । चित्रचित्रमतिशयेन चित्रम् । श्रावयामास श्रावयति स्म ॥

इति श्रीदशकुमारचरितपूर्वपीठिकाव्याख्यायां पददीपिकायां पञ्चमोच्छ्वासः ॥

---

पाठा०–१ 'विद्येश्वर, त्वमिदानीं साधयेति तं विसृज्य'.

श्रीः ।

# दशकुमारचरितम् ।

## प्रथमोच्छ्वासः ।

श्रुत्वा तु भुवनवृत्तान्तमुत्तमाङ्गना विस्मयविकसिताक्षी

---

### पदचन्द्रिका ।

**श्रुत्वेति** । भुवनवृत्तान्तं चतुर्दशभुवनवृत्तान्तम् । पातालवृत्तान्तमित्यप्यर्थः । 'विष्टपं भुवनं जगत्' इत्यमरः । 'वार्ता प्रवृत्तिर्वृत्तान्तः' इत्यपि । उत्तमाङ्गना नायिका । 'स्त्री योषिदबला–' इत्युपक्रम्य 'विशेषास्त्वङ्गना भीरुः' इत्यमरः । विस्मयेन विकसिते अक्षिणी लोचने यस्याः सेति । 'विस्मयोऽद्भुतमाश्चर्यम्' इत्यमरः ।

### भूषणा ।

अपर्णया हैमवत्या युक्तः स्थाणुः प्रसीदतु ।
सर्वतापप्रशमनः सर्वाभीष्टफलप्रदः ॥

वृषभानुजया युक्तो देवो हलधरानुजः ।
भूतये भवतो भूयाद्योग्ययोगसुखान्वितः ॥

महेशपादाम्बुजसक्तचेता नरेशसंपूजितपादपद्मः ।
ग्रहेशतेजा विरजा महौजास्त्रिलोकचन्द्रोऽजनि स द्विजाग्र्यः ।
सिद्धिर्वचो वृद्धिरलं सुतादीनशिश्रयद्यस्य गृहं समृद्धिः ।
सिद्धिर्मनो बुद्धिरुदारकर्म धर्मप्रसक्तस्य च शर्मराशेः ॥

जातः सुतस्तस्य स कृष्णरामो मनोजवस्तस्य सुता अभूवन् ।
तेष्वग्रजः पूज्यपदारविन्दप्रसादवित्तः शिवरामनामा ॥

गोविन्दरामोऽथ मुकुन्दरामो जातः क्रमात्केशवरामसंज्ञः ।
करोमि टीकां निजबन्धुवर्गमुदे मनोज्ञां शिवरामसंज्ञः ॥

**श्रुत्वेति** । भुवनस्य जगतो वृत्तान्तं रुक्मिण्यादिभिः कृष्णस्यैन्द्रस्य गुरोः पितामहस्य शकुन्तलादुष्यन्तादीनां च गान्धर्वविवाहकरणविषयां प्रवृत्तिम् ।

### लघुदीपिका ।

अभिवाद्य सहस्रांशुं तमोघ्नं लघुदीपिका ।
कुमाराणां दशानां च चरितस्य प्रकाश्यते ॥

**श्रुत्वेति** । वृत्तान्तः प्रकारः । **चन्द्रक इति** । 'समौ चन्द्रकमेचकौ' ।

सस्मितमिदमभाषत—'दयित, त्वत्प्रसादादद्य मे चरितार्था श्रोत्रवृत्तिः । अद्य मे मनसि तमोपहस्त्वया दत्तो ज्ञानप्रदीपः । पक्वमिदानीं त्वत्पादपद्मपरिचर्याफलम् । अस्य च त्वत्प्रसादस्य किमुपकृत्य प्रत्युपकृतवती भवेयम् । अभवदीयं हि नैव किंचिन्मत्संबद्धम् । अथवास्त्येवास्यापि जनस्य क्वचित्प्रभुत्वम् । अशक्यं हि मदिच्छया विना सरस्वतीमुखग्रहणोच्छेषणीकृतो दशनच्छद[1] एष चुम्बयितुम् । अम्बुजासनास्तनतटोपभुक्तमुरःस्थलं

पदचन्द्रिका ।

'लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी' इत्यमरः । सस्मितमिति क्रियाविशेषणम् । सहासमित्यर्थः । 'स्यादाच्छुरितकं हासः सोत्प्रासः स मनाक्स्मितम्' इत्यमरः । इदं वक्ष्यमाणम् । अभाषत । 'भाष व्यक्तायां वाचि' । लङ्यात्मनेपदम् । तदेवाह—**दयितेति** । चरितार्था । सफलेत्यर्थः । तमोपहोऽज्ञानहन्ता । 'अज्ञानान्धकारयोस्तमसी' इति महीधरः । पक्वं परिणतम् । परिचर्योपासना । 'परिचर्याप्युपासना' इत्यमरः । किमुपकृत्य । कमुपकारं कृत्वेत्यर्थः । प्रत्युपकृतवती । कृतप्रत्युपकारेत्यर्थः । भवेयमिति । 'भू सत्तायाम्' विधिलिङ् । उत्तमपरस्मैपदैकवचनम् । अभवदीयम् । न भवदीयमेवेत्यर्थः । मत्संबद्धम् । मदीयमेवेत्यर्थः । ममैव भवदीयत्वादिति भावः । अथवेति पूर्वापरितोषे । अस्यापि जनस्य मल्लक्षणस्य क्वचित्प्रभुत्वमस्त्येव । तदेव विशदयति—**अशक्यमिति** । मदिच्छया विना । 'पृथग्विना—' (२।३।३२) इति तृतीया । सरस्वत्या मुखग्रहणेनोच्छेषणीकृत उच्छिष्टीकृतः । एषः । भवदीय इत्यर्थः । दशनच्छद ओष्ठः । 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी' इत्यमरः । 'उच्छेषणं तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः' इति स्मृतेः । चुम्बयितुम् । णिजन्तम् । अम्बुजासना लक्ष्मीस्तस्याः स्तनतटोपभुक्तमिदमुरःस्थलम् । त्वदीय-

भूषणा ।

'वार्ता प्रवृत्तिर्वृत्तान्तः' इत्यमरः अनेन गान्धर्वविवाहेन परिणीतानां पुण्यवत्त्वज्ञानाद्राजवाहनेन सह गान्धर्वविवाहो मम पुण्यवत्त्वं संपादयेदिति मतिरुत्पन्ना । तेन च तस्मिन्राजवाहनेऽतिरागः । अत एव 'त्रिभुवनसर्गयात्रासंहारसंस्थिताभिः प्रत्यानीयमानरागपूराम्' इति वक्ष्यति । उत्तमाङ्गनावन्तिसुन्दरी नायिका मालवेन्द्रतनया । त्वत्प्रसादादेतद्वृत्तान्तकथनरूपात् । चरितार्था । श्रोतव्यश्रवणादिति भावः । तमोपहोऽभिमतवरलाभेऽपि कन्यानामात्मदाने न प्रभुत्वमित्येवंरूपाज्ञानापहः । ज्ञानप्रदीपः । गान्धर्वादिभिः परिणीतानां पुण्यश्लोकता । पुण्यकृतां न जातु पातकं पीडयतीत्येवंरूपं यज्ज्ञानं तदेव प्रदीप इत्यर्थः । एष ते रदनच्छद ओष्ठश्चुम्बयितुमशक्यमन्येनान्यया वा प्रेरणं कृत्वा मया चुम्बयितुम् । अम्बुजासना लक्ष्मीः । एतेन विशेषणद्वयेन विष्णुरूपवर्णनाद्भावि सार्व-

पाठा०—१ 'रदनच्छद'.

चेदमालिङ्गयितुम्' इति प्रियोरसि प्रावृडिव नभस्युपास्तीर्णगुरुपयोधरमण्डला प्रौढकन्दलीकुड्मलमिव रूढरागरूषितं चक्षुरुल्लासयन्ती बर्हिबर्हावलीविडम्बयता कुसुमचन्द्रकशारेण मधुकरकुलव्याकुलेन केशकलापेन स्फुरदरुणकिरणकेसरकरालं कदम्बमुकुलमिव कान्तस्याधरमणिमधीरमाचुचुम्ब । तदारम्भस्फुरितया च रागवृत्त्या भूयोऽप्यावर्ततातिमात्रचित्रोपचारशीफरो रतिप्रबन्धः । सुरतखेदसुप्तयोस्तु तयोः स्वप्ने विसगुणनिगडितपादो

## पदचन्द्रिका ।

मित्यर्थः । इत्युक्त्वेति शेषः । प्रियोरसि प्रावृडिव नभसि । 'स्त्रियां प्रावृट्' इत्यमरः । 'नभोऽन्तरिक्षं गगनम्' इत्यपि । पयोधरमण्डलं स्तनमण्डलम् । पक्षे मेघमण्डलम् । 'स्त्रीस्तनाब्दौ पयोधरौ' इति । प्रौढा या कन्दली द्रोणपर्णी । 'द्रोणपर्णी स्निग्धगन्धा कन्दली भूतकन्दली' इति शब्दार्णवः । तस्याः कुड्मला मुकुलाः । 'कुड्मलो मुकुलोऽस्त्रियाम्' इत्यमरः । रूषितम् । युक्तमित्यर्थः । 'रूष रूप भूषायाम्' । कर्मणि क्तः । बर्ही मयूरः । 'मयूरो बर्हिणो बर्ही' इत्यमरः । तस्य बर्हाणि पिच्छानि । 'पिच्छबर्हे नपुंसके' इत्यपि । विडम्बयता निर्भर्त्सयता । कुसुमान्येव चन्द्रका मेचकास्तैः शारेण विचित्रेण । 'शबले मारुते शारः' इति विश्वः । केशकलापेनोपलक्षितेति तृतीयोपलक्षणे । स्फुरन्तोऽरुणा ये किरणास्त एव केसराणि किञ्जल्कानि । 'किञ्जल्कः केसरोऽस्त्रियाम्' इत्यमरः । तैः करालमुन्नतम् । 'करालो दन्तुरे तुङ्गे' इति विश्वः । तदारम्भेण । चुम्बनारम्भेणेत्यर्थः । अतिमात्रम् । 'अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम्' इत्यमरः । शीफरो रम्यः । 'शीफरः स्फीतरम्ययोः' इत्यजयः । **सुरतेति** । बिसगुणेन मृणालतन्तुना । 'मृणालं बिसम्'

## भूषणा ।

भौमत्वं सूचितम् । 'वागीशा यस्य वदने लक्ष्मीर्यस्य च वक्षसि । यस्यास्ते हृदये संवित्तं नृसिंहमहं भजे ॥' इति श्लोकेन तादृशविशेषणाक्रान्तं नृसिंहरूपिणं भजे इत्यर्थकेन तादृशविशेषणाक्रान्तस्य नृसिंहत्वसूचनादन्यस्त्रीभोगराहित्यं सूचितम् । कदली कन्दली । कुसुमचन्द्रकः कुसुमगुच्छः (?) । 'समौ चन्द्रकमेचकौ' इत्यमरः । शारो नानावर्णः । 'शबले मारुते शारः' इति वैजयन्ती । अधीरमवशम् । 'धैर्यं तु वशधाार्ष्ट्ययोः' इत्यजयः । शीफरो रम्यः । 'शीफरः

## लघुदीपिका ।

शारो नानावर्णः । 'शबले मारुते शारः' इति वैजयन्ती । अधीरमवशम् । 'धैर्यं तु वशधाार्ष्ट्ययोः' इत्यजयः । शीफरो रम्यः । 'शीफरः स्फीत-

**पाठा०—१ 'इति । ततः प्रियोरसि'. २ 'विडम्बिना'. ३ 'बन्धूकमुकुल'. ४ 'भूयोभूयः प्रावर्तत'.**

जरठः कश्चिज्जालपादोऽदृश्यत । प्रत्यबुध्येतां चोभौ । अथ तस्य राजकुमारस्य कमलमूढशशिकिरणरज्जुदामनिगृहीतमिव रजतशृङ्खलोपगूढं चरणयुगलमासीत् । उपलभ्यैव च 'किमेतत्' इत्यतिपरित्रासविह्वला मुक्तकण्ठमाचक्रन्द राजकन्या । येन च तत्सकलमेव कन्यान्तःपुरमग्निपरीतमिव पिशाचोपहतमिव वेपमानमनिरूप्यमाणतदात्वायतिविभागमगण्यमानरहस्यरक्षासमयमवनितलविप्रविध्यमानगात्रमाक्रन्दविदीर्यमाणकण्ठमश्रुस्रोतोऽवगुण्ठित-

---

पदचन्द्रिका ।

इत्यमरः । निगडितः । 'तदस्य संजातं' (५।२।३६) इतीतच् । जरठो वृद्धः । जालपादो हंसः । जरठग्रहणमशुभसूचकम् । 'जालपादः श्वेतगरुच्चक्राङ्गो मानसप्रियः' इति वैजयन्ती । **अदृश्यतेति** । ताभ्यामर्थादध्याहार्यम् । **अथेति** । कमलमूढः कमलत्वेन भ्रान्तो यः शशी तस्य किरणरज्जुदाम समुदायस्तेन निगृहीतमिव । मुक्तकण्ठमुच्चैःस्वरम् । 'स्वरः कण्ठः प्रकीर्तितः' इति रत्नकोशः । आचक्रन्द । 'क्रदि क्रदि क्लदि आह्वाने रोदने च' इति भ्वादेर्धातोराङ्पूर्वस्य लिटि परस्मैपदे रूपम् । **येन चेति** । 'तत्कालस्तु तदात्वं स्यादुत्तरः काल आयतिः' इत्यमरः । विभागः कृत्यम् । 'कृत्यांशयोर्विभागः स्यात्' इत्यजयः । तत्काले उत्तरकाले वा किं कर्तव्यमित्यत्र मूढमित्यर्थः । रहस्यमेकान्तोद्भूतम् । 'आक्रन्दं रोदनं मतम्' । अश्रूणां स्रोतः प्रवाहः । 'स्रोतोऽम्बुसरणं स्वतः' इत्यमरः ।

भूषणा ।

स्फीतरम्ययोः' इत्यजयः । जरठजालपादो वृद्धहंसः । 'जालपादः श्वेतगरुच्चक्राङ्गो मानसप्रियः' इति वैजयन्ती । कमलमूढः कमलेन भ्रान्तः । कमलसदृश इति यावत् । उपलभ्यानुभूय । 'उपलम्भस्त्वनुभवः' इत्यमरः । मुक्तकण्ठं मुक्तस्वरम् । उच्चैरित्यर्थः । 'कण्ठो गले संनिधाने ध्वनौ मदनपादपे' इति विश्वप्रकाशः । येन येन प्रकारेण । तदात्वायतिविभागं तत्कालोत्तरकालयोः कृत्यम् । 'तत्कालस्तु तदात्वं स्यादुत्तरः काल आयतिः' । 'कृत्यांशयोर्विभागः स्यात्' इत्यजयः । समयो व्यवस्था । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः ।

लघुदीपिका ।

रम्ययोः' इत्यजयः । जरठजालपादो वृद्धहंसः । 'जालपादः श्वेतगरुच्चक्राङ्गो मानसप्रियः' इति वैजयन्ती । जरठग्रहणमशुभसूचकम् । कमलमूढः कमलत्वेन भ्रान्तः । उपलभ्यानुभूय । 'उपलम्भस्त्वनुभवः' । येन येन प्रकारेण । तदात्वायतिविभागं तत्कालोत्तरकालयोः कृत्यम् । 'तत्कालस्तु तदात्वं स्यादुत्तरः काल आयतिः' । 'कृत्यांशयोर्विभागः स्यात्' इत्यजयः । समयो व्यवस्था ।

---

पाठा०-१ 'जरठजालपादः'.

कपोलतलमाकुलीबभूव । तुमुले चास्मिन्समयेऽनियन्त्रितप्रवेशाः 'किं किम्' इति सहसोपसृत्य विविशुरन्तर्वंशिकपुरुषाः । ददृशुश्च तदवस्थं राजकुमारम् । तदनुभावनिरुद्धनिग्रहेच्छास्तु सद्य एव ते तमर्थं चण्डवर्मणे निवेदयांचक्रुः । सोऽपि कोपादागत्य निर्दहन्निव दहनगर्भया दृशा निशाम्योत्पन्नप्रत्यभिज्ञः 'कथं स एवैष मदनुजमरणनिमित्तभूतायाः पापाया बालचन्द्रिकायाः पत्युरत्यभिनिविष्टवित्तदर्पस्य वैदेशिकवणिक्पुत्रस्य पुष्पोद्भवस्य मित्रं रूपमत्तः कलाभिमानी नैकविधविप्रलम्भोपाय-

पदचन्द्रिका ।

अवगुण्ठितं वेष्टितम् । तुमुले संकुले । अनियन्त्रितप्रवेशा अनिवारितप्रवेशाः । अन्तर्वंशिकाः । 'अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः' इत्यमरः । तदवस्थम् । निगडितपादमित्यर्थः । ददृशुः । 'दृशिर् प्रेक्षणे' । लिटि प्रथमे परस्मैपदबहुवचनम् । तस्य राजकुमारस्यानुभावेन सामर्थ्येन । 'अनुभावः प्रभावे च निश्चये भावसूचके' इति वैजयन्ती । निरुद्धा निग्रहेच्छा येषां ते । अन्तर्वंशिका इत्यर्थः । निवेदयांचक्रुः । **सोऽपीति** । सोऽपि । चण्डवर्मेत्यर्थः । दहनगर्भयाग्निगर्भया । निशाम्य । 'शम लक्ष आलोचने' । अस्मात्स्वार्थण्यन्तात् क्त्वाप्रत्यये समासे ल्यप् । दृष्ट्वेत्यर्थः । अत्यभिनिविष्टः अत्यारूढः । नैकविधा अनेकविधा ये विप्रलम्भोपायाः प्रतारणयुक्तयस्तेषु यत्पाटवं पटोर्भावस्तेना-

भूषणा ।

विप्रविध्यमानं ताड्यमानम् । तुमुले संकुले । रणसंकुले शक्तोऽपि रणान्यसंकुले भाक्तः । 'तुमुलं रणसंकुले' इत्यमरः । अयन्त्रितोऽनिवारितः । अन्तर्वंशिकपुरुषाः । 'अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः' इत्यमरः । राजपुत्रं राजवाहनम् । अनुभावः प्रभावः । 'अनुभावः प्रभावे च निश्चये भावसूचके' इति वैजयन्ती । निग्रहो बन्धनम् । चण्डवर्मणे दर्पसारामात्याय । कोपात् । हेतौ पञ्चमी । निशाम्यालोक्य । 'शम आलोचने' । प्रत्यभिज्ञा विस्मृतज्ञानम् । मदनुजः सिंहवर्मा । अङ्गेश्वरादन्य एवायम् । एवमत्र कथा—'अवन्तिसुन्दर्याः सखी बालचन्द्रिका । तां क्वाप्युत्सवसमाजे ददर्श सिंहवर्मा । भ्रातुरधिकारात्का-

लघुदीपिका ।

'समयाः शपथाचारकालसिद्धान्तसंविदः' । विप्रविध्यमानं ताड्यमानम् । तुमुले संकुले । अनियन्त्रितोऽनिवारितः । अन्तर्वंशिकः । 'अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः' । अनुभावः प्रभावः । 'अनुभावः प्रभावे च निश्चये भावसूचके' इति वैजयन्ती । निग्रहोऽभिभवः । कोपात्कोपं विधाय । ल्यब्लोपे पञ्चमी । निशाम्यालोक्यं । प्रत्यभिज्ञा विस्मृतज्ञानम् । पापशीलः पापस्व-

पाठा०—१ 'राजपुत्रम्'. २ 'निशम्य'.

पाटवावर्जितमूढपौरजनमिथ्यारोपितवितथदेवतानुभावः कपटधर्मकञ्चुको निगूढपापशीलश्चपलो ब्राह्मणब्रुवः । कथमिवैनमनुरक्ता मादृशेष्वपि पुरुषसिंहेषु सावमाना पापेयमवन्तिसुन्दरी । पश्यतु पतिमद्यैव शूलावतंसितमियमनार्यशीला कुलपांसनी' इति निर्भर्त्सयन्भीषणभ्रुकुटिदूषितललाटः काल इव काललोहदण्डकर्कशेन बाहुदण्डेनावलम्ब्य हस्ताम्बुजे रेखाम्बुजरथाङ्गलाञ्छने राजपुत्रं सरभसमाचकर्ष । स तु स्वभावधीरः सर्वपौरुषातिभूमिः सहिष्णुतैकप्रतिक्रियां दैवीमेव तामापदमवधार्य 'स्मर तस्या

पदचन्द्रिका ।

वर्जितो वशीकृतो मूढो यः पौरजनस्तेन मिथ्यारोपितो वितथो निष्फलो देवतानुभावो यस्मिन्निति । कपटमेव धर्मकञ्चुकं यस्येति । निगूढं गुप्तम् । ब्राह्मणब्रुव आत्मानं ब्राह्मणं ब्रूतेऽसौ तथा । सावमाना हेलनापरा । 'पापाणके कुत्सितैः' इति साधुः । शूलावतंसितं शूलारोपितम् । कुलपांसनी कुलदूषणी । भ्रुकुटिर्भ्रूः । 'भ्रुकुटिर्भ्रूकुटिः स्त्रियाम्' इत्यमरः । काल इव यम इव । 'कालो दण्डधरः श्राद्धदेवः' इत्यमरः । कालं श्यामायसम् । रेखारूपाण्यम्बुजानि रथाङ्गानि चक्राणि लाञ्छनानि यस्मिन्निति । सरभसं सवेगम् । **स त्विति ।** सर्वपौरुषाणां पुरुषार्थानामतिभूमिरधिष्ठानम् । सहिष्णुतैव सहनशीलतैवैका प्रतिक्रिया प्रतीकारो यस्या इति ।

भूषणा ।

मातिदर्पात्सिंहवर्मा तां नेतुमैच्छत् । ततो रात्रौ तत्संकेतस्थानस्थं तं जघान पुष्पोद्भवः । आवर्जितं स्वायत्तीकृतम् । वशीकृतमिति यावत् । पापशीलः पापस्वभावः । 'शीलं स्वभावे सद्वृत्ते' इत्यमरः । ब्राह्मणब्रुवो ब्राह्मणाधमः । 'ब्रुवो हीनः पदात्परे । जातिमात्रोपजीवे तु कथ्यते ब्राह्मणब्रुवः' इति वैजयन्ती । 'मादृशेषु पुरुषसिंहेषु सावमाना' इत्यनेन तस्यां स्वाभिलाषध्वनिः । मातुलकन्यापरिणयनानुरोधेनाभिलाषः । वेदविरुद्धत्वात्त्वार्यैस्त्यक्तम् । एतदनार्याचरणमाशुपञ्चताहेतुः । शूलस्यावतंसवदाचरितम् । शूलारूढमित्यर्थः । कुलपांसनी कुलदूषिका । 'पांसनः कुलदूषकः' इति वैजयन्ती । भ्रुकुटिर्भ्रुवः कुटिः कौटिल्यम् । अतिभूमिरधिष्ठानम् । सहिष्णुता सहनशीलता । हंसकथायाः स्मर । 'अधीगर्थ-

लघुदीपिका ।

भावः । 'शीलं स्वभावे सद्वृत्ते' इति कोशः । ब्राह्मणब्रुवो ब्राह्मणाधमः 'ब्रुवो हीनः पदात्परे । जातिमात्रोपजीवे तु कथ्यते ब्राह्मणब्रुवः' इति वैजयन्ती । शूलावतंसितं शूलबद्धम् । 'तसि बन्धने' इति धातुः । कुलपांसनी कुलदूषिका । 'पांसनः कुलदूषकः' इति वैजयन्ती । भ्रुकुटिर्ललाटशिरोन्नतिः । 'ललाटे त्रिपताकायां भ्रुकुटिः सा शिरोन्नतिः' इति वैजयन्ती । सहिष्णुता सहनशीलता । हंसक-

पाठा०—१ 'पौरजनाध्यारोपित'.

हंसगामिनि, हंसकथायाः । सहस्व वासु, मासद्वयम्' इति प्राण-परित्यागरागिणीं प्राणसमां समाश्वास्यारिवश्यतामयासीत् ।

अथ विदितवार्तावार्तौ महादेवीमालवेन्द्रौ जामातरमाकारपक्ष-पातिनावात्मपरित्यागोपन्यासेनारिणा जिघांस्यमानं ररक्षतुः । न शेकतुस्तु तमप्रभुत्वादुत्तारयितुमापदः । स किल चण्डशील-श्चण्डवर्मा सर्वमिदमुदन्तजातं राजराजगिरौ तपस्यते दर्प-

### पदचन्द्रिका ।

दैवीमेवादृष्टकृतामेव । हंसगामिनीति नायिकासंबोधनम् । तस्या हंसकथाया इति 'अधीगर्थदयेशां–' ( २।३।५२ ) इति कर्मणि षष्ठी । वासु बाले । अरिवश्यताम-मित्राधीनताम् । अयासीत् । 'या प्रापणे' इत्यस्य रूपम् ॥

**अथेति** । विदितवार्तौ ज्ञातवृत्तान्तौ । आर्तौ पीडितौ । आत्मपरित्यागस्य देहपरित्यागस्योपन्यासेन । वचनेनेत्यर्थः । 'उपन्यासस्तु वाङ्मुखम्' इत्यमरः । आकारेण सौन्दर्येण पक्षपातिनाविति महादेवीमालवेन्द्रयोर्विशेषणम् । **न शेकतुरिति** । 'शक्लृ शक्तौ' लिटि परस्मैपदे रूपम् । तं राजपुत्रम् । अप्रभुत्वादसामर्थ्यात् । **स किलेति** । उदन्तजातं वृत्तान्तजातम् । 'वार्ता-प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्' इत्यमरः । राजराजगिरौ कुबेरपर्वते । तपस्यते तप-

### भूषणा ।

दयेशां कर्मणि' ( २।३।५२ ) इति कर्मणि षष्ठी । पूर्वजन्मनि सरसि क्रीडतानेन कोऽपि राजहंसो द्विमुहूर्तं मृणालेन बद्धस्तेनासौ शप्तः—'द्विमासं तवापि पादबन्धनं भविष्यति । ततः सम्राट्त्वमेष्यसि' इति कथा । वासु बाले । 'बाला स्याद्वासूः' इत्यमरः । यत्त्वस्य नाट्य एव प्रयोग उचितो नाट्यवर्गपाठात्तन्न । तत्रान्ययोगव्य-वच्छेदकत्वात् नाट्य एतेषामेव प्रयोगो नान्येषामिति । अत एव काव्येऽपि नाट्यवर्गस्थान्देव्यादिशब्दान्प्रायुङ्क्त कालिदासः—'ब्राह्मे मुहूर्ते किल तस्य देवी कुमारकल्पं सुषुवे कुमारम्' इति । विदितवार्तौ ज्ञातवृत्तान्तौ । 'वार्ता प्रवृत्ति-र्वृत्तान्तः उदन्तः स्यात्' इत्यमरः । आर्तौ दुःखितौ । मालवेन्द्रो मानसारः । आकारपक्षपातिनौ सौन्दर्यात्तत्पक्षस्थितौ । जिघांस्यमानं हन्तुमिष्यमाणम् । चण्डशील उग्रस्वभावः । 'चण्डः क्रूरातिकोपयोः' इति । उदन्तो वृत्तान्तः । राजराजगिरिः कैलासः संदिश्य संदेशं कृत्वा । 'संदेशः प्रहितं वचः' इति वै-

### लघुदीपिका ।

थायाः स्मर । 'अधीगर्थदयेशां कर्मणि–' इति कर्मणि षष्ठी । वासु बाले । 'अथ बाला स्याद्वासूः' । विदितवार्तौ ज्ञातवृत्तान्तौ । 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्' । आर्तौ दुःखितौ । जिघांस्यमानं हन्तुमिष्यमाणम् । चण्डशील उग्रस्वभावः । 'चण्डः क्रूरातिकोपयोः' । उदन्तजातमुदन्तवृन्दम् । राजराजगिरिः

साराय संदिश्य सर्वमेव पुष्पोद्भवकुटुम्बकं सर्वस्वहरणपूर्वकं सद्य एव बन्धने क्षिप्त्वा कृत्वा च राजवाहनं राजकेसरिकिशोरकमिव दारुपञ्जरनिबद्धं मूर्धजजालविलीनचूडामणिप्रभावविक्षिप्तक्षुत्पिपासादिखेदं च तमवधूतदुहितृप्रार्थनस्याङ्गराजस्योद्धरणायाङ्गानभियास्यन्ननन्यविश्वासान्निनाय । रुरोध च बलभरदत्तकम्पश्चम्पाम् । चम्पेश्वरोऽपि सिंहवर्मा सिंह इवासह्यविक्रमः प्राकारं भेदयित्वा महता बलसमुदायेन निर्गत्य स्वप्रहितदूतव्राताहूतानां साहाय्यदानायातिसत्वरमापततां धरापतीनामचिरकालभाविन्यपि संनिधावदत्तापेक्षः साक्षादिवावलेपो वपुष्मानक्षमापरीतः प्रतिबलं प्रतिजग्राह । जगृहे च महति संपराये क्षीण-

पदचन्द्रिका ।

स्यां कुर्वते । बन्धने कारागृहे । केसरिणः सिंहस्य । किशोरकमिव बालकमिव । दारुपञ्जरे काष्ठपञ्जरे । मूर्धजजाले केशसमूहे विलीनो यश्चूडामणिर्नमुचिकन्ययादत्तस्तस्य प्रभावेन विक्षिप्तो दूरीकृतः क्षुत्पिपासादिखेदो यस्येति तम् । **अवधूतेति ।** अवधूता तिरस्कृता दुहितुः कन्यायाः प्रार्थना येनेति तस्याङ्गराजस्योद्धरणायोन्मूलनायाङ्गान्देशानभियास्यन्गच्छन्ननन्यविश्वासादन्यविश्वासाभावान्निनायेत्यन्वयः । **रुरोधेति ।** 'रुधिर् आवरणे' । **चम्पेश्वर इति ।** प्राकारं सालम् । 'प्राकारो वरणः सालः' इत्यमरः । दूतव्रातः दूतसमूहः । न दत्तापेक्षा येनेति । अवलेपो गर्वः । संपराये युद्धे । 'संपरायः समीकं सांपरायिकम्' इति हैमः । क्षीणं सकलं सैन्यमण्डलं सेनासमूहो यस्येति तथा । मानुषमतिक्रम्य वर्तत इत्यतिमानुषं प्राणबलं यस्येति । जगृहे । 'ग्रह उपादाने' ।

भूषणा ।

जयन्ती । किशोरो बालः । चूडामणिर्नमुचिकन्यया दत्तः । द्वितीयोच्छ्वासारम्भे स्पष्टं भविष्यति । उद्धरणायोन्मूलनाय । निनाय । सहैवेति शेषः । सहैव निनायेति संबन्धः । दूतव्रातो दूतसमूहः । 'व्रातवारसंघातसंचयाः' इत्यमरः । अदत्तापेक्षोऽकृतापेक्षः । साक्षात् । 'साक्षात्प्रत्यक्षतुल्ययोः' इत्यमरः । अवलेपो गर्वः । प्रतिबलं शत्रुबलम् । संपरायः सङ्ग्रामः । **चण्डवर्मणेति ।** जगृह इति पू-

लघुदीपिका ।

कैलासः । संदिश्य संदेशं कृत्वा । 'संदेशः प्रहितं वचः' इति वैजयन्ती । किशोरो बालः । व्रातः समूहः । 'समूहव्रातसंचयाः' । अदत्तापेक्षोऽकृतापेक्षः । 'साक्षात्प्रत्यक्षतुल्ययोः' । व्ययूयुजत् पृथक्चकार । युजेर्ण्यन्ताच्चङि लुङ् । 'अपि

पाठा०—१ 'किशोर'.

सकलसैन्यमण्डलः प्रचण्डप्रहरणशतभिन्नमर्मा सिंहवर्मा करिणः करिणमवप्लुत्यातिमानुषप्राणबलेन चण्डवर्मणा। स च तद्दुहितर्यम्बालिकायामबलारत्नसमाख्यातायामतिमात्राभिलाषः प्राणैरेनं न व्ययूयुजत्। अपि त्वनीनयदपनीताशेषशल्यमकल्यसंधो बन्धनम्। अजीगणच्च गणकसंघैः 'अद्यैव क्षपावसाने विवाहनीया राजदुहिता' इति। कृतकौतुकमङ्गले च तस्मिन्नेकपिङ्गाचलात्प्रतिनिवृत्त्यैणजङ्घो नाम जङ्घाकरिकः प्रभवतो दर्पसारस्य प्रतिसंदेशमावेदयत्—'अयि मूढ, किमस्ति कन्यान्तःपुरदूषकेऽपि कश्चि-

पदचन्द्रिका।

स चेति चण्डवर्मा। तद्दुहितरि सिंहवर्मकन्यायाम्। अम्बालिकेति नाम्ना प्रसिद्धायाम्। रत्नत्वेनोत्कृष्टत्वेन। अतिमात्रमत्यन्तमभिलाषो यस्येति तथा। एनं सिंहवर्माणम्। **न व्ययूयुजदिति।** 'युजिर् योगे'। हेतुमण्णिजन्ताल्लुङि रूपम्। **अपि त्विति।** अनीनयत्। 'णीञ् प्रापणे' णिजन्ताल्लुङि प्रथमपुरुषे परस्मैपदैकवचनम्। अकल्या अचिन्त्या संधा प्रतिज्ञा यस्येति स तथा। बन्धनं कारागृहम्। अजीगणत्। 'गण संख्याने'। गणकसंघैर्ज्यौतिषिकसमूहैः। 'दैवज्ञगणकादेशिज्ञानि' इति हैमः। क्षपावसाने प्रातःकाले। कृतकौतुकमङ्गले बद्धकङ्कणबन्धे। तस्मिंश्चण्डवर्मणि। एकपिङ्गस्य कुबेरस्य। 'यक्षैकपिङ्गैलविल—' इत्यमरः। अचलात्पर्वतात्। एणजङ्घो नाम जङ्घाकरिकः। शीघ्रगामीत्यर्थः। 'जङ्घाकरिकजाङ्घिकौ' इत्यमरः। 'जङ्घालोऽतिजवो जङ्घारिको जाङ्घिको जवी' इति हैमः। दर्पसारस्य प्रतिसंदेशं प्रत्युत्तरम्। आवेदयत्। कथयामासेत्यर्थः। अयीति कोमलामन्त्रणे। मूढे-

भूषणा।

र्वेणान्वितम्। न व्ययूयुजन्न पृथक्चकार। युजेर्णिजन्ताच्चङि लुङ्। अपि तूत्तरकृत्योक्तौ अकल्यसंधोऽचिन्त्यप्रतिज्ञः। सत्यसंध इति यावत्। अजीगणद्गणनं कारयति स्म। गणेर्णिचि लुङ्। एकपिङ्गः कुबेरः। 'यक्षैकपिङ्गैलविल—' इत्यमरः। जङ्घाकरिकः। 'जङ्घाकरिकजाङ्घिकौ' इत्यमरः। 'हलकारा' इति प्रसिद्धः। प्रभवतः प्रभो राज्ञः। 'प्रत्यये लक्षणे हेतौ क्रियायास्तु शतुर्वचः'। अयि।

लघुदीपिका।

तूत्तरकृत्योक्तौ'। अकल्यसंधोऽचिन्त्यप्रतिज्ञः। अजीगणद्गणनं कारयति स्म। गणेर्णिचि लुङ्। जङ्घाकरिकः। 'जङ्घाकरिकजाङ्घिकौ'। प्रभवतः प्रभोः। 'प्रत्यये लक्षणे हेतौ क्रियायास्तु शतुर्वचः' इति वचनादव्यये शतृ। अयि। अधिक्षे-

पाठा०—१ 'भिन्नवर्मा'. २ 'अकल्पसंधः', 'अकल्प्यसंधः'. ३ 'बन्धनगृहम्'.

त्कृपावसरः । स्थविरः स राजा जराविलुप्तमानावमानचित्तो दुश्चरितदुहितृपक्षपाती यदेव किंचित्प्रलपति त्वयापि किं तदनुमत्या स्थातव्यम् । अविलम्बितमेव तस्य कामोन्मत्तस्य चित्रवधवार्ताप्रेषणेन श्रवणोत्सवोऽस्माकं विधेयः । सा च दुष्टकन्या सहानुजेन कीर्तिसारेण निगडितचरणा चारके निरोद्धव्या' इति । तच्चाकर्ण्य 'प्रातरेव राजभवनद्वारे स च दुरात्मा कन्यान्तःपुरदूषकः संनिधापयितव्यः । चण्डपोतश्च मातङ्गपतिरुपचितकल्पनोपपन्नस्तत्रैव समुपस्थापनीयः । कृतविवाहकृत्यश्चोत्थायाहमेव तमनार्यशीलं तस्य हस्तिनः क्रीडनकं तदधिरूढ एव गत्वा शत्रुसाहाय्यकाय प्रत्यासीदतो राजन्यकस्य सकोशवाहन-

पदचन्द्रिका ।

स्यात्मीयतया संबोधनम् । कन्यान्तःपुरदूषके दूषणोद्भावके । स्थविरो वृद्धः । 'प्रवयाः स्थविरो वृद्धः' इत्यमरः । जरया विलुप्तौ मानावमानौ यस्यैवंविधं चित्तं यस्येति । दुश्चरिता दुराचारा । 'प्रलापोऽनर्थकं वचः' इत्यमरः । किमित्याक्षेपे । **सा चेति** । सा दुष्टकन्या । अनुजेन कीर्तिसारेण सहेति । निगडितचरणा कृतपादबन्धना । चारके बन्धनागारे । 'चारकं बन्धनालयः' इति वैजयन्ती । **तच्चेति** । स च दुरात्मा कन्यान्तःपुरदूषकः संनिधापयितव्यः । संनिधौ स्थापनीय इत्यर्थः । चण्डपोतनामा मातङ्गपतिः करिवरः । 'मातङ्गवारणमहामृगसामयोनयः' इति हैमः । उपचिता याः कल्पनाः अलङ्कारादिरचनाः तैरुपपन्नो युक्तः । तत्रैव द्वारे । तमनार्यशीलं दुष्टस्वभावं तस्य हस्तिनः क्रीडनकं खेलनं कृत्वेति । शत्रुसाहाय्यकाय वैरिसाहाय्यार्थम् । प्रत्यासीदतः समीपमागच्छतः । राजन्यकस्य क्षत्रियसमूहस्य । कोशो भाण्डा-

भूषणा ।

'अधिक्षेपैकगुह्ययोः' इति केशवः । **कीर्तिसारेणेति** । निरपराधिनोऽनुजस्य बन्धनेच्छास्य विनाशहेतुः तत्फलं वनवासः । राज्यच्युतिरेवेति भावः । चारके । 'चारकं बन्धनालयः' इति । उचितकल्पनोपपन्नो योग्यालंकारयुक्तः । 'कल्पना सज्जना समे' इत्यमरः । क्रीडनं क्रीडासाधनम् । क्वचित् 'क्रीडनकम्' इति पाठः । **शत्रुसाहाय्यायेति** । शत्रुसाहाय्यं सिंहवर्मसाहाय्यं कर्तुमित्यर्थः । 'क्रियार्थोपपद—' (२।३।१४) इति चतुर्थी । प्रत्यासीदतः आसन्नमागतस्य । राजन्यकस्य राजसमूहस्य ।

लघुदीपिका ।

पैकगुह्ययोः' इति केशवः । चारके 'चारकं बन्धनालयः' । उचितकल्पनोपपन्नो योग्यालंकारयुक्तः । 'कल्पना सज्जना समे' । क्रीडनं क्रीडासाधनम् । सकोश-

पाठा०-१ 'उचित', 'उपरचित'. २ 'क्रीडनम्'. ३ 'शत्रुसाहाय्याय.

स्यावग्रहणं करिष्यामि' इति पार्श्वचरानवेक्षांचक्रे । निन्ये चासावहन्यन्यस्मिन्नुन्मिषत्येवोषोरागे राजपुत्रो राजाङ्गणं रक्षिभिः । उपतस्थे च क्षरितगण्डश्चण्डपोतः । क्षणे च तस्मिन्मुमुचे तदङ्घ्रियुगलं रजतशृङ्खलया । सा चैनं चन्द्रलेखाच्छविः काचिदप्सरो भूत्वा प्रदक्षिणीकृत्य प्राञ्जलिर्व्यजिज्ञपत्—'देव, दीयतामनुग्रहार्द्रं चित्तम् । अहमस्मि सोमरश्मिसंभवा सुरतमञ्जरी नाम सुरसुन्दरी । तस्या मे नभसि नलिनलुब्धमुग्धकलहंसानुबद्धवक्त्रायास्तन्निवारणक्षोभविच्छिन्नविगलिता हारयष्टिर्यदृच्छया जातु हैमवते सरसि मन्दोदके मग्नोन्मग्नस्य महर्षेर्मार्कण्डेयस्य

पदचन्द्रिका ।

गारम् । वाहनानि हस्त्यश्वादीनि । अवग्रहणं बन्धनम् । पार्श्वचरान् वीरान् । अवेक्षांचक्रे । ददर्शेत्यर्थः । **निन्ये चेति** । द्विकर्मकोऽयं धातुः । असौ राजपुत्रो राजवाहन इति । उषोरागे प्रातःकालसंबन्धिनि लौहित्ये । 'उषःप्रत्युषसी' इत्यमरः । राजाङ्गणम् । 'अङ्गणं चत्वराजिरे' इत्यमरः । 'अङ्गणं चाङ्गनम्' इति द्विरूपकोशः । उपतस्थे । 'ष्ठा गतिनिवृत्तौ' । प्रापेत्यर्थः । 'उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्विति वक्तव्यम्' । 'वा लिप्सायाम्' इति चेत्यन्यतरेणात्मनेपदम् । क्षरितः स्रवन्गण्डः कटो यस्येति । 'गण्डः कटः' इत्यमरः । मुमुचे 'मुच्लृ मोक्षणे' । भावे कर्तरि लिट् । **सा चेति** । सा च रजतशृङ्खला । व्यजिज्ञपत् । सोमरश्मिसंभवेत्येतन्नामकगन्धर्वोत्पन्ना । सुरतमञ्जरीति नाम । तस्या मे नभस्याकाशे । नलिने पद्मे । 'वा पुंसि पद्मं नलिनम्' इत्यमरः । मुग्धो मूढः । 'मुग्धः सुन्दरमूढयोः' इत्यमरः । यः कलहंसस्तत्रानुबद्धं लग्नं वक्त्रं यस्याः । तन्निवारणं कलहंसनिवारणम् । विच्छिन्ना त्रुटिता अत एव विगलिता । हारयष्टिर्हारलता । 'यष्टिर्हारलताशस्त्रभेदयोः' इति विश्वः । कर्तृपदमिदम् । जातु कदाचित् । मग्नोन्मग्नस्य स्नानं

भूषणा ।

'राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात्' इत्यमरः । 'गोत्रोक्षोष्ट्रोरभ्र–' (४।२।३९) इति वुञ् समूहे । सकोशवाहनस्य द्रव्यवस्त्रादिगजाश्वादियुक्तस्य अवग्रहणं प्रतिबन्धनम् । 'प्रतिबन्धोऽवग्रहः स्याद्वर्षिकाशुभयोरपि' इति । अवेक्षांचक्रे सावधानांश्चक्रे । 'अवेक्षा प्रतिजागरः' इत्यमरः । उषोरागे प्रभातरागे । 'रागोऽनुरागे लाक्षादौ मात्सर्यालोकयोरपि' इति वैजयन्ती । रक्षिभी रक्षाधिकारिपुरुषैः । व्यजिज्ञपन्निवेदितवती । **नलिनलुब्धेति** । मन्मुखे नलिनत्वभ्रान्त्या कलहंसेनावरुद्धवक्त्राया ममेत्यर्थः । मन्दोदकेऽल्पाम्भसि । 'मूढाल्पापटुनिर्भाग्या मन्दाः'

लघुदीपिका ।

वाहनस्य सेनातुरङ्गयुक्तस्य । अवग्रहं प्रतिबन्धम् । 'प्रतिबन्धोऽवग्रहः स्याद्-

पाठा०–१ 'काचिदप्सरोरूपिणी भूत्वा'.

मस्तके मणिकिरणद्विगुणितपलितमपतत् । पातितश्च कोपितेन कोऽपि तेन मयि शापः—'पापे, भजस्व लोहजातिमजातचैतन्या सती' इति । स पुनः प्रसाद्यमानस्त्वत्पादपद्मद्वयस्य मासद्वयमात्रं संदानतामेत्य निस्तरणीयामिमामापदमपरिक्षीणशक्तित्वं चेन्द्रिया-[1]णामकल्पयत् । अनल्पेन च पाप्मना रजतशृङ्खलीभूतां मामैक्ष्वाकस्य राज्ञो वेगवतः पौत्रः, पुत्रो मानसवेगस्य, वीरशेखरो नाम विद्याधरः शंकरगिरौ समध्यगमत् । आत्मसात्कृता च तेनाहमासम् । अथासौ पितृ[2]प्रयुक्तवैरे प्रवर्तमाने विद्याधरचक्रवर्तिनि वत्सराजवंशवर्धने नरवाहनदत्ते विरसाशयस्तदपकारक्षमो-

पदचन्द्रिका ।

कुर्वतः । मणिकिरणैर्द्विगुणितमसंख्यातीकृतं पलितं जराजातशौक्ल्यमिति क्रियाविशेषणम् । अपतत् । 'पत्लृ पतने' । कोपितेन कोपः संजातो यस्येति तथा । 'तदस्य संजातं–' (५।२।३६) इतीतच् । कोऽपि शापः 'शप आक्रोशे' । लोहजातिं लोहत्वम् । 'जातिर्जातं च सामान्यम्' इत्यमरः । न जातं चैतन्यं चेतनधर्मो यस्याः सेति । स मार्कण्डेयः । मासद्वयमात्रं मासद्वयप्रमाणम् । 'प्रमाणे द्वयसच्–' (५।२।३७) इति मात्रच् । संदानतां पादबन्धनताम् । 'संदानं पादबन्धनम्' इत्यमरः । निस्तरणीयाम् । समापनीयामित्यर्थः । इन्द्रियाणां मनःप्रभृतीनाम् । अनल्पेन बहुना । पाप्मना । पापेनेत्यर्थः । 'अस्त्री पङ्कं पुमान्पाप्मा पापम्' इत्यमरः । रजतशृङ्खलीभूताम् । 'अभूत–' (वा० ३३४०) इति च्विः । इक्ष्वाकोरयमैक्ष्वाकः । वेगवतस्तन्नाम्नो राज्ञः । शंकरगिरौ शंकरपर्वते । मां समध्यगमत् । प्रापेत्यर्थः । तेन वीरशेखरेणाहमात्मसादात्माधीना । तदधीने सातिः । **अथेति** । असौ वीरशेखरो विद्याधरः । पित्रा प्रयुक्तं यद्वैरं तस्मिन् । प्रवर्तमाने । कुर्वाण इत्यर्थः । नरवाहनदत्ते विरसाशयः परुषान्तःकरणः

भूषणा ।

इत्यमरः । मणिकिरणेत्यादि क्रियाविशेषणम् । 'पलितं जरसा शौक्ल्यम्' इत्यमरः । संदानतां बन्धनताम् । अपरिक्षीणशक्तित्वं स्वस्वविषयग्राहकत्वम् । रजतशृङ्खलीभूतां मां समध्यगमत् प्राप्तवानित्यन्वयः । असौ वीरशेखरनामकः । तदप-

लघुदीपिका ।

र्षिकाशुभयोरपि' । उषोराग उषःप्रकाशे । 'रागोऽनुरागो लाक्षादौ मात्सर्यालोकयोरपि' इति वैजयन्ती । रक्षिभिरधिकारिभिः । 'रक्षी कृत्याधिकारी स्यात्' इति वैजयन्ती । व्यजिज्ञपन्निवेदितवती । 'ज्ञप विज्ञप्तौ' । संदानताम् । संदानं 'पाद-

पाठा०—१ 'च पञ्चेन्द्रियाणाम्'. २ 'पितृप्रयुक्तो वैरे वर्तमाने'.

ऽयमिति तपस्यता दर्पसारेण सह समसृज्यत । प्रतिश्रुतं च तेन तस्मै स्वसुरवन्तिसुन्दर्याः प्रदानम् । अन्यदा तु वियति व्यवदायमानचन्द्रिके मनोरथप्रियतमामवन्तिसुन्दरीं दिदृक्षुरवशेन्द्रियस्तदिन्द्रमन्दिरद्युति कुमारीपुरमुपासरत् । अन्तरितश्च तिरस्करिण्या विद्यया, स च तां तदा त्वदङ्कापाश्रयां[1] सुरतखेदसुप्तगात्रीं त्रिभुवनसर्गयात्रासंहारसंबद्धाभिः[2] कथाभिरमृतस्यन्दिनीभिः प्रत्यानीयमानरागपूरां न्यरूपयत् । स तु प्रकुपितोऽपि

पदचन्द्रिका ।

तस्य नरवाहनदत्तस्यापकारे निग्रहे क्षमः समर्थ इति । दर्पसारेण समसृज्यत । संगतोऽभूदित्यर्थः । तेन दर्पसारेण । तस्मै वीरशेखराय । स्वसुर्भगिन्याः । प्रदानं विवाहः । **अन्यदेति** । व्यवदायमानचन्द्रिके निर्मलज्योत्स्ने । 'दैप् शोधने' । मनोरथैः प्रियतमाम् । दिदृक्षुर्द्रष्टुमिच्छुः । उपासरत् । 'सृ गतौ' इत्यस्य रूपम् । तिरस्करिण्यान्तर्धानकारिण्या विद्यया । स चेति वीरशेखरः । तामवन्तिसुन्दरीम् । त्वदङ्केऽपाश्रयो यस्या इति । 'अपाश्रयः शिरोभागः' इति वैजयन्ती । त्रिभुवनस्य त्रैलोक्यस्य । सर्ग उत्पत्तिः । यात्रा व्यवहारस्थितिरिति यावत् । संहारः प्रलयस्तत्संबद्धाभिः कथाभिः । अमृतस्यन्दिनीभिरमृतप्रस्राविणीभिः । प्रत्यानीयमानः परावृत्त्या साध्यमानो रागपूरो यस्यास्ताम् । न्यरूपयत् । दृष्टवानित्यर्थः । 'विलोकनं निरीक्षणं निभालनं निरूपणम्' इत्यजयः । **स त्विति** । स तु विद्याधरो

भूषणा ।

कारे नरवाहनदत्तापकारे । समसृज्यत संगतः । प्रतिश्रुतम् । प्रतिज्ञातमित्यर्थः । स्वस्वसारमवन्तिसुन्दरीं तुभ्यं दास्य इत्येव प्रतिज्ञातमिति भावः । तेन दर्पसारेण । व्यवदायमानचन्द्रिके निर्मलीभवज्ज्योत्स्ने । 'दैप् शोधने' । उपासरत् । वीरशेखरनामको गतवानित्यर्थः । तिरस्करिण्या अन्तर्धानकारिण्या । अपाश्रयः शिरोभागः । 'अपाश्रयः शिरोभागः' इति वैजयन्ती । **त्रिभुवनसर्गेत्यादि** । त्रिभुवनस्य तद्वासिजनस्य सर्गेण मोहेन यात्रा गतिः । इन्द्रादेः पराङ्गनागमनम्, यादवानां मद्यपानम्, युधिष्ठिरनलादीनां द्यूतविधिस्तेन संहारः, इन्द्रचन्द्रवालिरावणादे रोगवधादिः । 'सर्गस्तु निश्चयाध्यायमोहोत्साहात्मसृष्टिषु' । 'यात्रा तु यापनोपाये गतौ देवार्चनोत्सवे' इति विश्वप्रकाशः । यद्वा सर्ग उत्पत्तिः, यात्रा स्थितिः, संहारो लयः, तत्र संस्थिताभिस्तद्बोधिकाभिः । अत्र पूर्वमतं युक्तमिति 'श्रुत्वा

लघुदीपिका ।

बन्धनम्' । वर्तमाने इदमव्ययम् । 'वर्तमानेऽथ सांप्रतम्' । व्यवदायमानचन्द्रिके निर्मलीभवज्ज्योत्स्ने । 'दैप् शोधने' । 'अपाश्रयः शिरोभागे' इति वैजयन्ती । न्यरूपयत् दृष्टवान् । 'विलोकनं निरीक्षणं निभालनं निरूपणम्' इत्यजयः । प्रतिबद्धो

पाठा०—१ 'त्वदङ्गोपाश्रयाम्'. २ 'संस्थिताभिः'.

त्वदनुभावप्रतिबद्धनिग्रहान्तराध्यवसायः समालिङ्ग्येतरेतरमत्यन्तसुखसुप्तयोर्युवयोर्दैवदत्तोत्साहः पाण्डुलोहश्रृङ्खलात्मना मया पादपद्मयोर्युगलं तव निगडयित्वा सरोषरभसमपासरत् । अवसितश्च ममाद्य शापः । तच्च मासद्वयं तव पारतन्त्र्यम् । प्रसीदेदानीम् । किं तव करणीयम्' इति प्रणिपतन्तीं 'वार्तयानया मत्प्राणसमां समाश्वासय' इति व्यादिश्य विससर्ज ।

तस्मिन्नेव क्षणान्तरे 'हतो हतश्चण्डवर्मा सिंहवर्मदुहितुरम्बालिकायाः पाणिस्पर्शरागप्रसारिते वाहुदण्ड एव बलवदवलम्ब्य सरभसमाकृष्य केनापि दुष्करकर्मणा[1] तस्करेण नखप्रहारेण[2] राजमन्दिरोद्देशं च शवशतमयमापादयन्नचकितगतिरसौ विहरति'

पदचन्द्रिका ।

वीरशेखरः । त्वदनुभावेन त्वत्सामर्थ्येन प्रतिबद्धो निवारितो निग्रहान्तराध्यवसायो निग्रहे मारणादावध्यवसायो निश्चयात्मिका बुद्धिर्यस्य । युवयोस्त्वं च सावन्तिसुन्दरी चेति तयोः । दैवेन दत्त उत्साहो यस्येति स विद्याधरः । पाण्डुलोहं रजतम् । 'सर्वं च तैजसं लोहम्' इत्यमरः । श्रृङ्खलात्मना श्रृङ्खलास्वरूपया । निगडयित्वा । बद्ध्वेत्यर्थः । सरोषरभसं सक्रोधवेगम् । अपासरत् । जगामेत्यर्थः । अवसितः समाप्तिं प्राप्तः । परतन्त्रस्य भावः पारतन्त्र्यम् । 'परतन्त्रः पराधीनः' इत्यमरः । अनया मत्प्राणसमां मत्प्राणतुल्यामवन्तिसुन्दरीं समाश्वासयेति व्यादिश्य कथयित्वा विससर्जेति ॥

**तस्मिन्निति ।** क्षणान्तरेऽवसरान्तरे । 'उत्सवेऽवसरे क्षणः' इति महीपः । त्रिंशत्कलात्मकः क्षणः । 'तास्तु त्रिंशत्क्षणः' इत्यमरः । सरभसं सवेगम् । दुष्करकर्मणाऽसुकरकर्मणा । नखप्रहारेण छुरिकाघातेन । 'एकेनैव नखरप्रहारेण' इति पाठे नखरश्छुरिका । राजमन्दिरोद्देशं राजगृहप्रदेशम् । शवशतमयं शवानां

भूषणा ।

तु भुवनवृत्तान्तम्' इत्यादि निरूपितम्, न्यरूपयद्दृष्टवान् । 'विलोकनं निरीक्षणं निभालनं निरूपणम्' इत्यजयः । प्रतिबद्धो निवारितः । निग्रहस्यान्तर्गतोऽध्यवसाय उत्साहो यस्य । 'उत्साहोऽध्यवसायः स्यात्' इत्यमरः । पाण्डुवर्णलोहं रजतम् । 'सर्वं स्यात्तैजसं लोहम्' इत्यमरः । नखरः । 'बाँक' इति भाषायाम् ।

लघुदीपिका ।

निवारितः । निग्रहान्तराध्यवसायो निग्रहविषयेऽन्तर्गतोऽध्यवसायः । नखर-

पाठा०—१ 'दुष्करकर्मकारिणा'. २ 'एकेनैव नखर'.

इति वाचः समभवन्। श्रुत्वा चैतत्तमेव मत्तहस्तिनमुदस्ताधोरणो राजपुत्रोऽधिरुह्य रंहसोत्तमेन राजभवनमभ्यवर्तत। स्तम्बेरमरयावधूतपदातिदत्तवर्त्मा च प्रविश्य वेश्माभ्यन्तरमदभ्राभ्रनिर्घोषगम्भीरेण स्वरेणाभ्यधात्—'कः स महापुरुषो येनैतन्मानुषमात्रदुष्करं महत्कर्मानुष्ठितम्। आगच्छतु। मया सहेमं मत्तहस्तिनमारोहतु। अभयं मदुपकण्ठवर्तिनो देवदानवैरपि विगृह्णानस्य' इति। निशम्यैवं स पुमानुपोढहर्षो निर्गत्य कृताञ्जलिराक्रम्य संज्ञासंकुचितं कुञ्जरगात्रमसक्तमध्यरुक्षत्। आरोहन्तमेवैनं निर्वर्ण्य हर्षोत्फुल्लदृष्टिः 'अये, प्रियसखोऽयमपहारवर्मैव' इति

**पदचन्द्रिका।**

निष्प्राणानां शतानि तन्मयम्। आपादयन्कुर्वन्। अचकितगतिः अत्रस्तगमनः। **श्रुत्वेति।** तमेव चण्डवर्माधिष्ठितमेव। उदस्तो दूरीकृत आधोरणो हस्तिपको येनेति। 'आधोरणा हस्तिपकाः' इत्यमरः। उत्तमेन रंहसा वेगेन। 'रयो वेगो जवो रंहः' इति वैजयन्ती। 'रंहस्तरसी तु रयः स्यदः। जवः' इत्यमरः। स्तम्बेरमते असाविति स्तम्बेरमो हस्ती, तस्य रयो वेगस्तेनावधूता दूरीकृता ये पदातयस्तैर्दत्तं वर्त्म यस्येति। अदभ्रं बहुलम्। अभ्रनिर्घोषगम्भीरेण मेघरसितगम्भीरेण। 'अभ्रं मेघो वारिवाहः' इत्यमरः। 'निर्घोषे रसितादि च' इत्यमरः। विगृह्णानस्य विरोधं कुर्वतः। उपोढहर्षो वर्धमानहर्षः। संज्ञया संकेतेन संकुचितम्। कुञ्जरगात्रं पूर्वपदजङ्घाप्रदेशम्। 'द्वौ पूर्वपश्चाजङ्घादिदेशौ गात्रावरे क्रमात्' इत्यमरः। असक्तम्। त्वरितमित्यर्थः। अध्यरुक्षत्। आरुरोहेत्यर्थः। निर्वर्ण्य दृष्ट्वा। 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः। **अये इति।** 'अतर्कापतिते त्वये' इति केशवः। प्रियस-

**भूषणा।**

'नखरस्त्वसिपुत्रिका' इति वैजयन्ती। उदस्तः क्षिप्तः। आधोरणो हस्तिपकः। 'आधोरणा हस्तिपकाः' इत्यमरः। स्तम्बेरमो हस्ती। 'इभः स्तम्बेरमः पद्मी' इत्यमरः। 'रयो वेगो जवो रंहः' इति वैजयन्ती। पत्तिः पदातिः। 'पदातिपत्तिपदग–' इत्यमरः। अदभ्रं बहु। 'अदभ्रं बहुलं बहु' इत्यमरः। विगृह्णानस्य विरोधं कुर्वतः। गात्रं शरीरम्। 'गात्रं वपुः संहननम्' इत्यमरः। गजप्रकरणेऽमरोक्तस्य 'द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्रावरे क्रमात्' इति पूर्वजङ्घावाचकगात्रस्य न ग्रहणम्। उत्तरग्रन्थविरोधात्। आक्रम्य पादविक्षेपं कृत्वा। 'क्रमु पादविक्षेपे'। असक्तमिति क्रियाविशेषणम्। हस्तिनमस्पृष्ट्वेत्यर्थः। निर्वर्ण्य दृष्ट्वा। 'निर्व-

**लघुदीपिका।**

क्षुरिका। उदस्तः क्षिप्तः। स्तम्बेरमो गजः। रयो वेगः 'रयो वेगो जवो रंहः' इति वैजयन्ती। विगृह्णानस्य विरोधं कुर्वतः। गात्रं पूर्वपदजङ्घाप्रमाणम्। अये,

पाठा०–१ 'धूतपत्ति'.

पश्चान्निषीदतोऽस्य वाहुदण्डयुगलमुभयभुजमूलप्रवेशितमग्रेऽवलम्ब्य स्वमङ्गमालिङ्गयामास । स्वयं च पृष्ठतो वलिताभ्यां भुजाभ्यां पर्यवेष्टयत् । तत्क्षणोपसंहृतालिङ्गनव्यतिकरश्चापहारवर्मा चापचक्रकणपकर्पणप्रासपट्टिशमुसलतोमरादिप्रहरणजातमुपयुञ्जानान्वलावलिप्तान्प्रतिवलवीरान्वहुप्रकारायोधिनः परिक्षिपतः क्षितौ विचिक्षेप । क्षणेन चाद्राक्षीत्तदपि सैन्यमन्येन समन्ततोऽभिमुखमभिधावता वलनिकायेन परिक्षिप्तम् ।

पदचन्द्रिका ।

खोऽयमिति 'राजाहःसखिभ्यष्टच्' (५।४।९१) इत्यदन्तता । अपहारवर्मेति तन्नाम । वलिताभ्यां चलिताभ्याम् । 'वल चलने' । वक्रिताभ्यामित्यर्थः । तत्क्षण इति तस्मिन्नेव समये । उपसंहृत आलिङ्गनव्यतिकर आश्लेषसंपर्को येनेति तथा । चापो धनुः । चक्रम् । 'चक्रं भ्रमं कुण्डलम्' इति वैजयन्ती । 'चक्रं रथाङ्गे सेनायां छद्मन्यस्त्रान्तरेऽपि च' इति भागुरिश्च । कणपो लोहस्तम्भः । 'लोहस्तम्भस्तु कणपः' इति वैजयन्ती । कर्पणः शरावः । 'कुटिलाग्रस्तु कर्पणः' इति च । प्रासः कुन्तः । 'प्रासस्तु कुन्तः' इत्यमरः । पट्टिशः शस्त्रविशेषः । भाषया 'पट्टा' इति प्रसिद्धः । 'पट्टिशः स्याद्दिशालाग्रः' इति वैजयन्ती । मुसलं कण्डनसाधनकाष्ठतुल्यमायसायुधम् । मुशलमिति वा । तोमरो लोहगुच्छः । भाषया 'गुर्ज' इति । 'तोमरो वेगदण्डवान्' इति वैजयन्ती । प्रहरणजातं शस्त्रसमूहम् । उपयुञ्जानान्प्रेरयतः । प्रतिबलवीरान् प्रतिस्पर्धिवीरान् । वहुप्रकारमनेकविधमायोधिनो युद्धं कुर्वतः । परिक्षिपतः । लोकानिति शेषः । विचिक्षेप । पातितवानि-

भूषणा ।

र्णनं तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः । अये अचिन्तिते वर्तमानेऽव्ययम् । 'अतर्कापतिते त्वये' इति वैजयन्ती । कणपः । 'लोहस्तम्भस्तु कणपः' 'लोहोबन्दा' इति भाषया । कर्णपः । 'कुटिलाग्रस्तु कर्णपः' । प्रासः कुन्तः । 'कुन्तप्रासौ मिथः समौ' । पट्टिशः । 'पट्टिशः स्याद्दिशालाग्रः' इति । 'तोमरो वेगदण्डवान्' इति वैजयन्ती । उपयुञ्जान उपदधानः । विचिक्षेप प्रेरितवान् । अन्ये-

लघुदीपिका ।

अचिन्तिते वर्तमानमव्ययम् । 'अतर्कापतिते त्वये' इति केशवः । वलिताभ्याम् । 'वल चलने' । चक्रम् । 'चक्रं भ्रमं कुण्डलं च' इति वैजयन्ती । 'लोहस्तम्भस्तु कणपः कर्पणः' इति वैजयन्ती । प्रासः कुन्तः । 'कुन्तप्रासौ मिथः समौ' । 'पट्टिशः स्याद्दिशालाग्रस्तोमरो वेगदण्डवान्' इति वैजयन्ती । विचिक्षेप प्रेरित-

पाठा०—१ 'कर्णप'. २ 'उपयुञ्जानः'.

अनन्तरं च कश्चित्कर्णिकारगौरः कुरुविन्दसवर्णकुन्तलः कमलकोमलपाणिपादः कर्णचुम्बिदुग्धधवलस्निग्धनीललोचनः कटितटनिविष्टरत्ननखः पट्टनिवसनः कृशाकृशोदरोरःस्थलः कृतहस्ततया रिपुकुलमिषुवर्षेणाभिवर्षन्पादाङ्गुष्ठनिष्ठुरावघृष्टकर्णमूलेन प्रजविना गजेन संनिकृष्य पूर्वोपदेशप्रत्ययात् 'अयमेव स देवो राजवाहनः' इति प्राञ्जलिः प्रणम्यापहारवर्मणि निविष्टदृष्टिराचष्ट—'त्वदादिष्टेन मार्गेण संनिपातितमेतदङ्गराजसाहाय्यदानायोपस्थितं राजकम्[3] । अरिबलं[4] च विहतविध्वस्तं स्त्रीबालहार्य-

पदचन्द्रिका ।

त्यर्थः । **क्षणेनेति** । समन्ततः सर्वतः । 'समन्ततस्तु परितः सर्वतो विष्वगित्यपि' इत्यमरः । बलनिकायेन सेनासमूहेन । 'स्यान्निकायः पुञ्जराशी' इत्यमरः । 'निकायो निवहो व्यूहः समूहो विसरो व्रजः' इति वैजयन्ती ॥

**अनन्तरमिति** । कर्णिकारो द्रुमोत्पलस्तद्वद्गौरः । कुरुविन्देन सवर्णाः समानाः कुन्तलाः केशा यस्येति । कुरुविन्दो नीलगुच्छः । नीलमणिरिति यावत् । कटितटे निविष्टो रत्नयुक्तो नखः नखर इति वा छुरिका यस्येति । पट्टं दुकूलं निवसनं यस्येति तथा । कृशाकृशे उदरोरःस्थले यस्येति स तथा । कृशोदरः स्थूलोरःस्थलश्चेति योज्यम् । कृतहस्ततया शिक्षितहस्ततया । 'शिक्षितं कृतमर्थवत्' इति भागुरिः । इषुवर्षेण बाणवृष्ट्या । अङ्गुष्ठाभ्यां निष्ठुरं यथा तथावघृष्टं घर्षितं कर्णमूलं यस्येति तेन । प्रजविना सवेगेन । संनिकृष्य । संनिकर्षं कृत्वेत्यर्थः । निविष्टदृष्टिः दत्तदृष्टिः । आचष्ट । 'चक्षिङ्' । **त्वदादिष्टेनेति** । 'अथ राजकम् । राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात्' इत्यमरः । राजकं राजसमूहम् । सस्त्रीबालैर्हार्यते तत् । आज्ञाकरः सेवकः ।

भूषणा ।

नाङ्गराजसाहाय्यार्थमागतेन । समन्ततः सर्वतः । 'समन्ततस्तु परितः सर्वतो विष्वगित्यपि' । बलनिकायेन सेनासमूहेन । 'निकायो निवहो व्यूहः समूहो विसरो व्रजः' इति वैजयन्ती । अन्तरेऽवसरे । कश्चिद्धनमित्राख्यः । कर्णिकारो द्रुमोत्पलः । 'अथ द्रुमोत्पलः । कर्णिकारः परिव्याधः' इत्यमरः । 'कठचम्पा' इति भाषायाम् । कुरुविन्दः । 'कुरुविन्दो मेघनामा' इत्यमरः । 'दृषद्यरण्ये सस्ये च कुरुविन्दः' इत्यनेकार्थध्वनिमञ्जरी । कमलकोमलपाणिपाद इत्यादि । अश्वेतरक्तमृदुलौ कमलोदराभौ श्लिष्टाङ्गुली रुचिरताम्रतलौ सुपार्ष्णी । उष्णौ शिराविर-

लघुदीपिका ।

वान् । समन्ततः सर्वतः । 'समन्ततस्तु परितः सर्वतो विष्वगित्यपि' । बलनिकायेन सेनासमूहेन । 'निकायो निवहो व्यूहः समूहो विसरो व्रजः' इति वैजयन्ती । अन्तरेऽवसरे । 'कुरविन्दो नीलगुच्छः' । 'कुरविन्द–' इति पाठे

पाठा०–१ 'अन्तरे'. २ 'अभिपात्य'. ३ 'राजन्यकम्'. ४ 'अखिलारिबलं', 'अखिलं चारिबलं'.

शस्त्रं वर्तते । किमन्यत्कृत्यम्' इति । हृष्टस्तु व्याजहारापहारवर्मा—'देव, दृष्टिदानेनानुगृह्यतामयमाज्ञाकरः । सोऽयमहमेव ह्यमुना रूपेण धनमित्राख्यया चान्तरितो मन्तव्यः । स एवायं निर्गमय्य बन्धनादङ्गराजमपवर्जितं च कोशवाहनमेकीकृत्यास्मद्गृह्येणामुना सह राजन्यकेनैकान्ते सुखोपविष्टमिह देवमुपतिष्ठतु यदि न दोषः' इति । देवोऽपि 'यथा ते रोचते' इति तमाभाष्य गत्वा च तन्निर्दिष्टेन मार्गेण नगराद्बहिरतिमहतो रोहिणद्रुमस्य कस्यचित्क्षौमावदातसैकते गङ्गातरङ्गपवनपातशीतले तले द्विरदा-

पदचन्द्रिका ।

**सोऽयमहमेव हीति** । धनमित्राख्ययैतन्नाम्ना । अन्तरितः । भिन्न इत्यर्थः । स एव धनमित्रोऽङ्गराजं सिंहवर्माणं बन्धनान्निर्गमय्य निष्कामय्य । अपवर्जितम् । इतस्ततो गतमित्यर्थः । कोशवाहनमेकीकृत्य । एकत्र कृत्वेत्यर्थः । अस्मद्गृह्येणास्मत्पक्षस्थेन । 'गृह्यः पक्षस्थ उच्यते' इति वैजयन्ती । राजन्यकेन क्षत्रियसमूहेन । सह साकम् । देवम् । त्वामिति यावत् । उप समीपे तिष्ठतु । **देव इति** । देवो राजवाहनः । त इति तुभ्यम् । 'रुच्यर्थानां–' (१।४।३३) इति चतुर्थी । तमपहारवर्माणम् । तन्निर्दिष्टेनापहारवर्मकथितेन मार्गेण । रोहिणद्रुमस्य वटवृक्षस्य । 'वटवृक्षस्तु रोहिणः' इति वैजयन्ती । क्षौमवदवदातं शुद्धं यत्सैकतं सिकतामयं तस्मिन् ।

भूषणा ।

हितौ च निगूढगुल्फौ कूर्मोन्नतौ च चरणौ मनुजेश्वरस्य ॥' इति विस्तरस्तु वराहसंहितायां द्रष्टव्यः । कृतहस्ततया सुशिक्षितत्वेन । 'कृतहस्तः सुप्रयोगविशिखः कृतपुङ्खवत्' इत्यमरः । प्रत्ययात् ज्ञानात् । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इति । संनिपातितमानीतम् । अखिलं चण्डवर्मसैन्यम् । अपवर्जितं युद्धसमये शत्रुणा गृहीतम् । कोशवाहनं धनं हस्त्यश्वादि चैकीकृत्य देवमुपतिष्ठत्वित्यन्वयः । 'कोशोऽस्त्री कुड्मले शास्त्रे अर्थेऽनीकेऽर्थमन्दिरे' इति भागुरिः । अस्मद्गृह्येण । 'गृह्यः पक्षस्थ उच्यते' इति हलायुधः । इह गङ्गातीरे । उपतिष्ठतु समीपमाग-

लघुदीपिका ।

मणिविशेषः । 'अतिरिक्तं सुपीतं हि कुरविन्दमुदाहृतम्' । कृतहस्ततया शिक्षितहस्ततया । 'शिक्षिते कृतहस्तवत्' इति भागुरिः । प्रत्ययात् ज्ञानात् । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' । कोशवाहनं सेनाश्वतुरङ्गाश्च । 'कोशोऽस्त्री कुड्मले शास्त्रे अर्थेऽनीके च मन्दिरे' इति भागुरिः । अस्मद्गृह्येण । 'गृह्यः पक्षस्थ उच्यते' इति हलायुधः । रोहिणद्रुमस्य वटवृक्षस्य । न्यग्रोधो-

पाठा०–१ 'सोऽयमप्यहमेव' 'सोऽयमेवाद्य'. २ 'कस्यचिन्मूले'.

दवततार । प्रथमसमवतीर्णेनापहारवर्मणा च स्वहस्तसत्वरसमीकृते मातङ्ग[1] इव भागीरथीपुलिनमण्डले सुखं निषसाद । तथा निषण्णं च तमुपहारवर्मार्थपालप्रमतिमित्रगुप्तमन्त्रगुप्तविश्रुतैर्मैथिलेन च प्रहारवर्मणा, काशीभर्त्रा च कामपालेन, चम्पेश्वरेण सहवर्मणा, सहोपागत्य धनमित्रः प्रणिपपात । देवोऽपि हर्षाविद्धमभ्युत्थितः 'कथं समस्त एष मित्रगणः समागतः, को नामायमभ्युदयः' इति कृतयथोचितोपचारान्निर्भरतरं[2] परिरेभे । काशीपतिमैथिलाङ्गराजांश्च सुहृन्निवेदितान्पितृवदपश्यत् । तैश्च हर्षकम्पितपलितं संरभसोपगूढः[3] परमभिननन्द । ततः प्रवृत्तासु प्रीतिसंकथासु प्रियवयस्यगणानुयुक्तः स्वस्य च सोमदत्तपुष्पोद्भव-

## पदचन्द्रिका ।

**प्रथमेति** । स्वहस्तेनात्मकरेण । सत्वरं सवेगं । समीकृते समतां प्रापिते । निषसाद 'षद्लृ विशरणगत्यवसाद–' इत्यस्य रूपम् । **तथेति** । तं राजवाहनम् । उपहारवर्मादिविश्रुतान्त्यैः षड्भिर्दशकुमारसमूहैः । मैथिलेन मिथिलाधिपेन । प्रहारवर्मणा कामपालेन सिंहवर्मणा सह धनमित्रः । धनमित्रसमूहान्तर्वर्ती काशीपतिमैथिलोऽङ्गराजस्तैस्त्रिभिः प्रहारवर्मकामपालसिंहवर्मभिः । निर्भरतरं दृढतरम् । **तत इति** । सोमदत्तपुष्पोद्भवयोश्चरितमाचरणं पूर्वपीठिकायामुक्तमनुवर्ण्य । सुहृदां सर्वे-

## भूषणा ।

च्छतु । रोहिणो वटः । 'न्यग्रोधो रोहिणो वटः' इति वैजयन्ती । **उपहारवर्मेत्यादि** । राजहंसस्य त्रयोऽमात्या धर्मपालसितवर्मपद्मोद्भवाः । धर्मपालस्य सुमन्त्रसुमित्रकामपालाः सुताः । सितवर्मणः सुमतिसत्यवर्माणौ सुतौ पद्मोद्भवस्य सुश्रुतरत्नोद्भवौ सुतौ । तेषु पितॄणां मरणोत्तरं सुमन्त्रसुमित्रसुश्रुतसुमतयः पितॄणामधिकारे स्थिताः । कामपालः क्वाप्यगमत् । रत्नोद्भवः समुद्रतरणमकरोत् । सत्यवर्मा देवयात्रामकरोत् । सुमतिसुमन्त्रसुमित्रसुश्रुतानां प्रमतिमन्त्रगुप्तमित्रगुप्तविश्रुताख्याः पुत्राः । इत्येतेषां संबन्धः । हर्षाविद्धमिति क्रियाविशेषणम् । उत्पीडिततरं गाढं यथा स्यात्तथा । हर्षकम्पितपलितम् क्रियाविशेषणम् । अनुयुक्तः पृष्टः । 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः । **सोमदत्तपुष्पोद्भवयोरिति** । एतेनात्र

पाठा०–१ 'मातङ्ग इव', 'स्फाटिकमय इव'. २ 'अनुत्पीडिततरम्'. ३ 'सहसोपगूढः'.

योऽश्चरितमनुवर्ण्य सुहृदामपि वृत्तान्तं क्रमेण श्रोतुं कृतप्रस्ताव-स्तांश्च तदुक्तावन्वयुङ्क्त । तेषु प्रथमं प्राह स्म किलापहारवर्मा—

इति श्रीदण्डिनः कृतौ दशकुमारचरिते राजवाहनचरितं
नाम प्रथम उच्छ्वासः ।

---

## द्वितीयोच्छ्वासः ।

'देव, त्वयि तदावतीर्णे द्विजोपकारायासुरविवरं त्वदन्वेषण-प्रसृते च मित्रगणेऽहमपि महीमटन्नङ्गेषु गङ्गातटे वहिश्च-

---

पदचन्द्रिका ।

षाम् । कृतप्रस्तावः कृतोपक्रमः । तदुक्तौ सुहृद्वृत्तान्तोक्तौ । अन्वयुङ्क्त । योजितवानित्यर्थः । तेषु सुहृत्सु मध्ये प्रथममपहारवर्मा प्राह स्मेत्यन्वयः ॥

**इति श्रीदशकुमारचरितव्याख्यायां पदचन्द्रिका-भिधायां प्रथम उच्छ्वासः ।**

किमाहापहारवर्मा—**देवेति** । असुरविवरं दैत्यविवरम् । 'सुषिरं विवरं बिलम्' इत्यमरः । प्रसृते परितश्चरिते । दिव्यचक्षुरतीन्द्रियद्रष्टा । संलपतो मिथो वदतः ।

भूषणा ।

कुमारत्रयकथासंग्रहः । अत एवाष्टावेवोच्छ्वासाः ॥ **इति श्रीदशकुमार-चरितटीकायां भूषणाभिधायां प्रथम उच्छ्वासः ॥**

राजवाहनः कदाचित्पितरमामन्त्र्य सुहृद्भिः सह विन्ध्येऽटन् शिवालयमद्राक्षीत् । तत्रत्यादेव विवरान्निर्गत्य शिवार्चनं कुर्वतीं नमुचिकन्यां प्रेक्ष्य कामपीडयातिकृशं द्विजं तत्रापश्यत् । विश्राममिषात्ससुहृत्तत्र स्थितः, क्वचित्प्रयाते मित्रगणे द्विजेन स्ववृत्तान्तोऽस्मै निवेदितः । अथ रात्रौ ससुहृद्गणः सद्विजश्च तत्रैव सुष्वाप । अथार्धरात्रे निर्गतां तामीशमर्चयित्वा यान्तीं तद्वारि द्विजोपकाराय देवालयबिलं गतमात्मानं मित्रबोधाय विलिख्यानुययौ । तत्र स्वर्णपुरे कन्याशतवृतां तां पर्यङ्कस्थां 'का त्वम्' इत्याद्यन्वयुङ्क्त राजवाहनः । 'देव, विष्णुना नमुचौ सालोक्यं नीते मां समाश्वास्येदमभिहितम्—'योऽत्र ज्वलनकुण्डे प्रवेक्ष्यति स ते भर्ता' इत्यनुजगाद सा । ततो द्विजेन ज्वलनकुण्डे प्रविश्य सोढा । तद्वृत्तं च राजवाहनः क्षुत्पिपासाहरं मणिमादाय बहिर्ययौ । मित्रगणस्तु प्रातस्तं तत्रानुपलक्ष्य

लघुदीपिका ।

रोहिणो वटः' इति वैजयन्ती । अनुयुक्तः पृष्टः । 'प्रश्ने स्यादनुयोगः' इति हलायुधः ॥ **इति लघुदीपिकायां प्रथम उच्छ्वासः ॥**

असुरविवरं पातालम् । 'अधोलोकस्तु पातालं दैत्यरन्ध्रं रसातलम्' इत्य-

म्पायाः 'कश्चिदस्ति तपःप्रभावोत्पन्नदिव्यचक्षुर्मरीचिर्नाम महर्षिः' इति कुतश्चित्संलपतो जनसमाजादुपलभ्यामुतो बुभुत्सुस्त्वद्गतिं तमुद्देशमगमम् । न्यशामयं च तस्मिन्नाश्रमे कस्यचिच्चूतपोतकस्य छायायां कमप्युद्विग्नवर्णं तापसम् । अमुना चातिथिवदुपचरितः क्षणं विश्रान्तः 'कासौ भगवान्मरीचिः, तस्मादहमुपलिप्सुः प्रसङ्गप्रोषितस्य सुहृदो गतिम्, आश्चर्यज्ञानविभवो हि स महर्षिर्मह्यां विश्रुतः' इत्यवादिषम् । अथासावुष्णमायतं च निःश्वस्याशंसत्—'आसीत्तादृशो मुनिरस्मिन्नाश्रमे । तमेकदा काममञ्जरी-

पदचन्द्रिका ।

'संलापो भाषणं मिथः' इत्यमरः । उपलभ्य ज्ञात्वा । अमुतः । मुनेरित्यर्थः । बुभुत्सुर्बोद्धुमिच्छुः । त्वद्गतिम् । त्वन्मार्गमित्यर्थः । तमुद्देशं महर्ष्यधिष्ठितप्रदेशम् । अगमम् । 'गम्लृ गतौ' इत्यस्य रूपम् । न्यशामयमपश्यम् । उद्विग्नवर्णमुद्विग्नस्य वर्ण इव वर्णः कान्तिर्यस्येति स तम् । 'उद्विग्नो भ्रान्तमानसः' इति वैजयन्ती । वर्णः कान्तिः । अमुना तापसेन । उपचरितः सत्कृतः । तस्मान्मरीचेः । उपलिप्सुरुपलब्धुमिच्छुः । प्रसङ्गप्रोषितस्य केनापि कारणेन गतस्य । 'प्रसङ्गः कारणं हेतुः' इति वैजयन्ती । आश्चर्यश्चमत्कारकारी ज्ञानविभवो ज्ञानसामर्थ्यं यस्य तथा । विश्रुतो विख्यातः । अवादिषम् । उक्तवानित्यर्थः । **अथेति ।** असौ तापसः । तं महर्षिम् ।

भूषणा ।

तदन्वेषणाय दिक्षु प्रतस्थे । राजवाहनोऽपि मित्राण्यनुपलभ्य स्वेच्छया महीं विचचारेति प्रसङ्गः । असुरविवरं पातालम् । 'अधोलोकस्तु पातालं दैत्यरन्ध्रं रसातलम्' इत्यजयः । संलपतोऽन्योन्यं भाषमाणान् । 'संलापो भाषणं मिथः' इत्यमरः । उपलभ्य ज्ञात्वा । बुभुत्सुर्बोद्धुमिच्छुः । न्यशामयमपश्यम् । 'शमोऽदर्शने' इति मित्वनिषेधः । चूत आम्रः । 'आम्रश्चूतो रसालोऽसौ' इत्यमरः । उद्विग्नो भ्रान्तमानसस्तस्य वर्णः कान्तिस्तद्वत्कान्तिर्यस्य सः । उपलिप्सुरुपलब्धुमिच्छुः । प्रसङ्गप्रोषितस्य कारणेन गतस्य । 'प्रसङ्गः कारणं हेतुः' इति वैजयन्ती । अवतंसस्थानीया शेखरसदृशी । 'रत्नं पुंस्यवतंसो वा कर्णपूरेऽपि शेखरे' । क्वचित् 'वतंसस्थानीया' इति पाठः । तत्र 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यकार-

लघुदीपिका ।

जयः । संलपतोऽन्योन्यं भाषमाणस्य । 'संलापो भाषणं मिथः' । उपलभ्य ज्ञात्वा । बुभुत्सुर्बोद्धुमिच्छुः । न्यशामयमपश्यम् । उद्विग्नवर्णम् । उद्विग्नो भ्रान्तमनसो वर्णः कान्तिः । उद्विग्नस्य वर्ण इव वर्णो यस्य सः । उपलिप्सुरुपलब्धुमिच्छुः । प्रसङ्गप्रोषितस्य कारणेन गतस्य । 'प्रसङ्गः कारणं हेतुः' इति वैजयन्ती । वतंसस्थानीया शेखरसदृशी । 'रत्नं पुंस्यवतंसो वा कर्णपूरेऽथ शेखरे' । 'वष्टि भागुरिरल्लोपमवा-

पाठा०-१ 'आशशंसे'.

नासाङ्गपुरी[1]वतंसस्थानीया वारयुवतिरश्रुबिन्दुतारकितपयोधरा सनि-
र्वेदमभ्येत्य कीर्णशिखण्डास्तीर्णभूमिरभ्यवन्दिष्ट । तस्मिन्नेव
च क्षणे मातृप्रमुखस्तदाप्तवर्गः सानुक्रोशमनुप्रधावितस्तत्रैवावि-
च्छिन्नपात[2]मपतत् । स किल कृपालुस्तं जनमार्द्रया गिरा[3]श्वास्या-
र्तिकारणं तां गणिकामपृच्छत् । सा तु सव्रीडेव सविषादेव
सगौरवेव चाब्रवीत्—'भगवन्, ऐहिकस्य सुखस्याभाजनं[4] जनो-
ऽयमामुष्मिकाय श्वोवसीयायार्ताभ्युपपत्तिवित्तयोर्भगवत्पादयोर्मूलं

पदचन्द्रिका ।

अङ्गपुरीवतंसस्थानीया तन्नगरीशेखरभूता । 'वष्टि भागुरि–' इत्यकारलोपः । 'रत्नं पुंस्यवतंसे वा कर्णपूरेऽपि शेखरे' । वारयुवतिर्वेश्या । अश्रुबिन्दुतारकितपयोधरा-श्रुबिन्दुभिस्तारकितौ पयोधरौ यस्या इति । तारकाः संजाता इति व्युत्पत्तिः । सनि-र्वेदं सर्वत्रोपेक्षासहितम् । 'द्वेषः सर्वत्र निर्वेदः' इति वैजयन्ती । कीर्णशिखण्डास्ती-र्णभूमिः कीर्णः प्रसृतो यः शिखण्डः केशपाशस्तेनास्तीर्णा कृतास्तरणा भूमिर्ययेति । अभ्यवन्दिष्ट । 'वदि अभिवादनस्तुत्योः' इति । **तस्मिन्निति** । तस्या वारा-ङ्गनायाः । सानुक्रोशं सकृपम् । सर्वजनस्य यथा कृपा स्यात्तथेत्यर्थः । 'कृपा दयानुकम्पा स्यादनुक्रोशोऽपि' इत्यमरः । आर्तिकारणं पीडानिदानम् । **सेति** । ऐहिकमिह भवं तथा तस्य । अभाजनमपात्रम् । 'सर्वमावपनं भाण्डं पात्रामत्रं च भाजनम्' इत्यमरः । अमुत्र जातमामुष्मिकम् । पारलौकिकायेत्यर्थः । श्वोव-

भूषणा ।

लोपः । वारयुवतिः । 'वारस्त्री गणिका वेश्या' इत्यमरः । तारकितम् । 'तदस्य संजातं तारकादिभ्यः–' (५।२।३६) इतीतच् । सनिर्वेदं सर्वत उपेक्षासहितम् । 'द्वेषः सर्वत्र निर्वेदः' इति । शिखण्डः केशपाशः । 'शिखण्डः केशपाशः स्यात्' इति वैजयन्ती । मातृप्रमुखो माधवसेनादिः । सानुक्रोशं सकृपम् । सर्वजनस्य यथा कृपा स्यात्तथेत्यर्थः । 'कृपा दयानुकम्पा स्यादनुक्रोशोऽपि' इत्यमरः । कृपालुः । 'स्याद्द-यालुः कारुणिकः कृपालुः सूरतः समाः' इत्यमरः । सव्रीडेत्युत्तमत्वार्थम् । स्वभा-वोक्तिः । मुनेः स्वनिर्वेदप्रत्ययार्थं सविषादत्वम् । महर्षेरावर्जनस्य स्वसुकरत्वज्ञा-नात्सगौरवत्वम् । अयं जनो मद्रूपो वेश्याजनः । श्वोवसीयाय । 'श्वःश्रेयसं स्यात्

लघुदीपिका ।

प्योरुपसर्गयोः' इति वचनादकारलोपः । वारयुवतिः । 'वारस्त्री गणिका वेश्या' । सनिर्वेदं सर्वत्रोपेक्षासहितम् । 'द्वेषः सर्वत्र निर्वेदः' । 'शिखण्डः केशपाशः स्यात्' इति वैजयन्ती । सानुक्रोशं सकृपम् । सर्वजनस्य यथा कृपा स्यात्तथेत्यर्थः । 'कृपा दयानुकम्पा स्यादनुक्रोशोऽपि' । श्वोवसीयाय । 'श्वःश्रेयसं स्यात्कल्याणं

**पाठा०–१ 'पुर्यवतंस'. २ 'अवनिपातम्'. ३ 'गिरोत्थाप्य'. ४ 'सुखस्य भाजनम्'.**

शरणमभिप्रपन्नः' इति । तस्यास्तु जनन्युदञ्जलिः पलितशारशिखण्डबन्धस्पृष्टमुक्तभूमिरभाषत—'भगवन्, अस्या मे दोषमेषा वो दासी विज्ञापयति । दोषश्च मम स्वाधिकारानुष्ठापनम् । एष हि गणिकामातुरधिकारो यद्दुहितुर्जन्मनः प्रभृत्येवाङ्गक्रिया, तेजोबलवर्णमेधासंवर्धनेन दोषाग्निधातुसाम्यकृता मितेनाहारेण शरीरपोषणम्, आ पञ्चमाद्वर्षात्पितुरप्यनतिदर्शनम्, जन्मदिने पुण्य-

---

पदचन्द्रिका ।

सीयाय । 'श्वःश्रेयसं स्यात्कल्याणं श्वोवसीयं शिवं शुभम्' इति हलायुधः । आर्ताभ्युपपत्तिवित्तयोरार्तानां पीडितानामभ्युपपत्तिरनुग्रहस्तद्वित्तयोः ख्यातयोः । चरणविशेषणम् । 'शरणं गृहरक्षित्रोः' इत्यमरः । **तस्या इति** । तस्या वाराङ्गनायाः । जननी माता । उद्गतोऽञ्जलिः यस्याः सा उदञ्जलिरूर्ध्वीकृताञ्जलिः । पलितेन जरसा शौक्ल्येन शारश्चित्रो यः शिखण्डबन्धस्तेनादौ स्पृष्टा पश्चान्मुक्ता भूमिर्यया । 'पूर्वकालैक-' ( २।१।४९ ) इति समासः । **भगवन्निति** । मे दोषं मद्दूषणम् । एषेति पुरोवर्तिनी । वो युष्माकं दासी, मत्कन्येत्यर्थः । स्वाधिकारानुष्ठापनं स्वोचितकर्माचरणप्रेरणम् । अङ्गक्रियोद्वर्तनादिः । 'अङ्गक्रिया यदङ्गेषु हरिद्रातैलमर्दनम्' इति वात्स्यायने । 'तेजः प्रभावः' इति महीपः । बलं शारीरम् । वर्णो रूपम् । मेधा धारणावती बुद्धिः । एतेषां सम्यग्वर्धनेन पोषणेन । दोषा वातपित्तश्लेष्माणः । अग्निर्जाठरः । धातवः सप्त । एतेषां साम्यकृताऽवैषम्यकृता । आहारेण भक्षणेन । आ पञ्चमात् । पञ्चमवर्षादुत्तरमित्यर्थः । 'आङ् मर्यादाभिविध्योः' इति । अनतिदर्शनमत्यन्तदर्शनाभावः । जन्मदिन उत्पत्तिदिवसे । पुण्यदिने संक्रमणादौ ।

भूषणा ।

कल्याणं श्वोवसीयं शिवं शुभम्' इति वैजयन्ती । 'श्वसो वसीयः श्रेयसः ।' (५।४।८०) अभ्युपपत्तिरनुभवः । पादयोर्मूलं पादसमीपदेशम् । मूलशब्दः समीपदेशवाची । एतावताप्यार्तिकारणं स्पष्टम् । अनुपन्यासादार्तिकारणं तज्जनन्याह—**अस्या मे दोषमिति** । विज्ञापनं कथनम् । अनुष्ठापनं विधापनम् । जन्मनः । 'कार्तिक्याः प्रभृति' इति भाष्यप्रयोगात्पञ्चमी । अङ्गक्रिया । 'अङ्गक्रिया यदङ्गेषु हरिद्रातैलमर्दनम्' इति वात्स्यायने । दोषा वातपित्तश्लेष्माणः । मेधा बुद्धिः । 'धीर्धारणावती मेधा' इत्यमरः । अग्निर्जाठरः । धातवो रसादयः । तेषां साम्यं करोति तादृक् तेन । 'वसासृङ्मांसमेदोस्थिमज्जाशुक्राणि धातवः । सप्तैव दश वैकेषां रोमत्वक्स्नायुभिः सह ॥' इति हेमचन्द्रः । आ पञ्चमात् । 'पञ्चम्यपाङ्परिभिः' (२।३।१०) इति पञ्चमी । पितुरप्यनति-

लघुदीपिका ।

श्वोवसीयं शिवं शुभम्' । अभ्युपपत्तिरनुग्रहः । अनुष्ठापनं विधापनम् । प्रभृतियोगे पञ्चमी वक्तव्या । 'अङ्गक्रिया यदङ्गेषु हरिद्रातैलमर्दनम्' इति वात्स्यायने ।

दिने चोत्सवोत्तरो मङ्गलविधिः, अध्यापनमनङ्गविद्यानां साङ्गानाम्, नृत्यगीतवाद्यनाट्यचित्रास्वाद्यगन्धपुष्पकलासु लिपिज्ञानवचनकौशलादिषु[1] च सम्यग्विनयनम्, शब्दहेतुसमयविद्यासु [2]वार्तामात्राववोधनम्, आजीवज्ञाने क्रीडाकौशले सजीवनिर्जीवासु च द्यूतकलास्वभ्यन्तरीकरणम्, अभ्यन्तरकलासु वैश्वासिकजनात्प्रयत्नेन प्रयोगग्रहणम्, यात्रोत्सवादिष्वादरप्रसाधितायाः स्फीतपरिवर्हायाः प्रकाशनम्, प्रसङ्गवत्यां संगीतादिक्रियायां

## पदचन्द्रिका ।

अनङ्गविद्यानां कामप्रतिपादकविद्यानाम् । विनयनं शिक्षणम् । शब्दो व्याकरणम् । हेतुस्तर्कः । समयः सिद्धान्तः । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । अवबोधनं ज्ञानम् । आजीवो जीविका । क्रीडाकौशले नर्मभाषणनैपुणे । 'क्रीडा लीला च नर्म च' इत्यमरः । सजीवाः कुक्कुटादियोधनानि, निर्जीवाश्चतुरङ्गाद्याः । अभ्यन्तरीकरणं स्वायत्तीकरणम् । अभ्यन्तरकलासु रतकलासु । 'साभ्यन्तरकला यत्तु स्पृश्याङ्गस्पर्शनं रतौ' इति वात्स्यायनः । वैश्वासिकजनादाप्तजनात् । प्रयोगः कर्तव्यता । प्रसाधिताया अलंकृतायाः । 'प्रसाधितोऽलंकृतश्च भूषितश्च परिष्कृतः' इति वैजयन्ती । परिवर्हः परिच्छदः । 'परिवर्हस्तु राजार्हे

## भूषणा ।

दर्शनम् । दृष्टिदोषस्य बाल्ये भयसत्त्वात् । अनङ्गविद्यानां वात्स्यायनसूत्रादीनाम् । वचनकौशलं वक्रोक्तिश्लेषादि । शब्दो व्याकरणम् । हेतुस्तर्कः । समयः सिद्धान्तो ज्यौतिषः । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । आजीवो जीविकोपायः । 'आजीवो जीविका वार्ता' इत्यमरः । क्रीडाकौशले नर्मभाषणनैपुणे । 'क्रीडा लीला च नर्म च' इत्यमरः । सजीवनिर्जीवासु । सजीवः कुक्कुटादियोधनम्, निर्जीवाश्चतुरङ्गाद्याः । अभ्यन्तरकला रतसमये क्रियमाणं किमपि विज्ञानम् । 'साभ्यन्तरकला यत्तु स्पृश्याङ्गस्पर्शनं रतौ' इति वात्स्यायनः । प्रसाधिताया अलंकृतायाः । 'प्रसाधितोऽलंकृतश्च' इत्यमरः । परिवर्हः परिकरः । 'परिच्छदे नृपार्हे

## लघुदीपिका ।

दोषा वातपित्तश्लेष्माणः । शब्दो व्याकरणम् । हेतुस्तर्कः । समयः सिद्धान्तः । 'समयाः शपथाचारकालसिद्धान्तसंविदः' । वार्तावार्तावबोधनं सारासारावबोधनम् । 'वार्तं फल्गुन्यसारेऽपि' । आजीवो जीविका । क्रीडाकौशले नर्मभाषणनैपुणे । 'क्रीडा लीला च नर्म च' । सजीवनिर्जीवासु द्यूतकलासु । सजीवः कुक्कुटादियोधनम्, निर्जीवाश्चतुरङ्गाद्याः । अभ्यन्तरकला रतसमये क्रियमाणं किमपि विज्ञानम् । 'साभ्यन्तरकला यत्तु स्पृश्याङ्गस्पर्शनं रतौ' इति वात्स्यायनः । प्रसाधितायाः । 'प्रसाधितोऽलंकृतश्च भूषितश्च परिष्कृतः' इति वैजयन्ती । परि-

पाठा०—१ 'कौशलेषु'. २ वार्तावार्तावबोधनम्'

पूर्वसंगृहीतैर्ग्राह्यवाग्भिः सिद्धिलम्भनम्, दिङ्मुखेषु तत्तच्छिल्पवित्तकैर्यशःप्रख्यापनम्, कार्तान्तिकादिभिः कल्याणलक्षणोद्घोषणम्, पीठमर्दविटविदूषकैर्भिक्षुक्यादिभिश्च नागरिकपुरुषसमवायेषु रूपशीलशिल्पसौन्दर्यमाधुर्यप्रस्तावना, युवजनमनोरथलक्ष्यभूतायाः प्रभूततमेन शुल्केनावस्थापनम्, स्वतो रागान्धाय तद्भावदर्शनोन्मादिताय वा जातिरूपवयोऽर्थशक्तिशौचत्यागदाक्ष्यदाक्षिण्यशिल्पशीलमाधुर्योपपन्नाय स्वतन्त्राय प्रदानम्, अधिकगुणायास्वतन्त्राय

---

**पदचन्द्रिका ।**

वस्तुन्यपि परिच्छदे' इत्यपि । सेवकजन इति यावत् । ग्राह्यवाग्भिः शिक्षकैः । 'ग्राह्यवागुपलालकः' इति वैजयन्ती । सिद्धिलम्भनं सिद्धिप्रापणम् । शिल्पवित्तकैः कलाप्रसिद्धैर्मार्दङ्गिकमौरजिकादिभिः । 'प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः' इत्यमरः । कान्तान्तिका लक्षणज्ञाः । 'कार्तान्तिको लक्षणज्ञः' इत्यपि । उद्घोषणं ख्यापनम् । पीठमर्दो नटविशेषः । 'पीठमर्दो विटश्चेति तथा चेटविदूषकौ' इत्युक्तेष्वतिधृष्टो नायकप्रियः पीठमर्द इति । 'पीठमर्दोऽतिधृष्टे स्यान्नाट्योक्त्या नायकप्रिये' इति विश्वः । विट एकविद्यः । विदूषकः । 'विकृताङ्गवचोवेषैर्हास्यकारी विदूषकः' इति । भिक्षुकी श्रमणा । 'श्रमणा भिक्षुकी मुण्डा' इति हैमः । नागरिका निपुणाः । समवायेषु समुदायेषु । 'समुदायः समुदयः समवायश्चयो गणः' इत्यमरः । प्रभूततमेन प्रचुरतरेण । शुल्को मौल्यम् । उन्मादित उन्मादं प्रापितस्तस्मै । शौचं शुद्धता । 'शौचमर्थेष्ववञ्चनम्' इति

**भूषणा ।**

ऽर्थे परिबर्हः' इत्यमरः । संगृहीतैर्विधेयीकृतैः । ग्राह्यवाग्भिरुपलालकैः । 'ग्राह्यवागुपलालकः' इति वैजयन्ती । शिल्पवित्तकैः शिल्पप्रसिद्धैः । मार्दङ्गिकमौरजिकाद्यैरित्यर्थः । 'प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः' इत्यमरः । कार्तान्तिकः सामुद्रिकज्ञः । 'कार्तान्तिको लक्षणज्ञः' इति वैजयन्ती । पीठमर्दः कुपितस्त्रीप्रसादकः । विटः खिङ्गः । 'खिङ्गः पाल्लविको विटः' इत्यमरः । विदूषकः । 'अङ्गादिवेषवैकृत्यैर्हास्यकारी विदूषकः' इति रसरत्नहारः । भिक्षुकी श्रमणा । नागरिका निपुणाः । अवस्थापनं समीपे स्थापनम् । शौचमुज्ज्वलत्वम् । परिचितपरित्यागाक्षमत्वं

**लघुदीपिका ।**

बर्हः परिकरः । 'परिबर्हः परिच्छदः' । संगृहीतैर्विधेयीकृतैः । ग्राह्यवाग्भिः । 'ग्राह्यवागुपलालकः' । शिल्पवित्तकैः शिल्पप्रसिद्धैः । 'प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः' । कार्तान्तिकः सामुद्रज्ञः । 'कार्तान्तिको लक्षणज्ञः' इति वैजयन्ती । 'किंचिदूनः पीठमर्द एकविद्यो विटः स्मृतः । संधाननिपुणश्चैव हास्यकारी विदूषकः' । 'भिक्षुकी श्रमणी समे' । नागरिका निपुणाः । 'शौचमर्थेष्व-

प्राज्ञतमायाल्पेनापि बहुव्यपदेशेनार्पणम्, अस्वतन्त्रेण वा गान्धर्वसमागमेन तद्गुरुभ्यः शुल्कापहरणम्, अलाभेऽर्थस्य कामस्वीकृते स्वामिन्यधिकरणे च साधनम्, रक्तस्य दुहित्रैकचारिणीव्रतानुष्ठापनम्, नित्यनैमित्तिकप्रीतिदायकतया हृतशिष्टानां गम्यधनानां चित्रैरुपायैरपहरणम्, अददता लुब्धप्रायेण च विगृह्यासनम्, प्रतिहस्तिप्रोत्साहनेन लुब्धस्य रागिणस्त्यागशक्तिसंधुक्षणम्, असारस्य वाक्संतक्षणैर्लोकोपक्रोशनैर्दुहितृनिरोधनैर्व्रीडोत्पादनैरन्या-

## पदचन्द्रिका ।

वैजयन्ती । दाक्षिण्यं परिचितपरित्यागाक्षमत्वम् । गान्धर्वसमागमेन । गान्धर्वविवाहेनेत्यर्थः । कामस्वीकृते स्वायत्तीकृते । स्वामिन्यधिकारिणि । अधिकरणे चोत्तरादौ । रक्तस्य । अनुरक्तस्येत्यर्थः । एकचारिणीव्रतं पातिव्रत्यम् । हृतशिष्टानां गृहीतावशिष्टानाम् । गम्यधनानाम् । गम्या भुजङ्गाः । 'गम्यो विटः पाल्लविको भुजङ्गः' इति भागुरिः । असनं क्षेपणम् । प्रतिहस्त्यासन्नगृहवेश्यापतिः । 'प्रतिहस्ती प्रातिवेश्यः' इति वैजयन्ती । त्यागशक्तेः संधुक्षणमुद्दीपीकरणम् । असारस्य निर्धनस्य । वाक्संतक्षणैर्वचनतिरस्कारैः । लोकोपक्रोशनैर्लोकेषु निन्दनैः ।

## भूषणा ।

दाक्षिण्यम् । अल्पेनाल्पशुल्केन । अधिगुणाद्गुणग्रहणमेव महालाभ इति भावः । गान्धर्वसमागमो गान्धर्वविवाहः । 'गान्धर्वः समयान्मिथः' । तदीयद्रव्यापकारित्वायेति (?) । अस्वतन्त्राद्ग्रहणे तु तत्पित्रादयः शुल्कं परावृत्य गृह्णीयुरिति तेभ्यः । एव ग्रहणमिति भावः । अलाभेऽर्थस्य धूर्तात्स्वशुल्कालाभे । कामस्वीकृते केवलं मैत्र्यादङ्गीकृते । न तु भयेनाङ्गीकृते । स्वामिनि प्रभौ[1] ग्रामाध्यक्षे । अधिकरणे नागरिकसंसदि । साधनमुच्चावचवागादिभिः स्वोपयुक्तविधानम् । एकचारिणीव्रतं पातिव्रत्यम् । आहृतशिष्टानामाहृतेभ्य आकर्षितेभ्यः शिष्टानामवशिष्टानामुर्वरितानां गम्यस्य विटजनस्य धनानामित्यन्वयः । गम्यो विटः । 'गम्यो विटः पाल्लविको भुजङ्गः' इति भागुरिः । आसनमुपवेशनम् । प्रतिहस्त्यासन्नगृहवेश्यापतिः । 'प्रतिहस्ती प्रातिवेश्यः' इति वैजयन्ती । संतक्षणैस्तनूकरणैः । 'तक्षू तनूकरणे' । उपक्रोशनैः कुत्सनैः । 'उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे'

## लघुदीपिका ।

वञ्चनम्' इति वैजयन्ती । परिचितपरित्यागाक्षमत्वं दाक्षिण्यम् । साधनं दापनम् । एकचारिणीव्रतं पातिव्रत्यम् । 'गम्यो विटः पाल्लविको भुजङ्गः' इति भागुरिः । प्रतिहस्त्यासन्नगृहवेश्यापतिः । 'प्रतिहस्ती प्रातिवेश्यः' इति वैजयन्ती । संतक्षणैश्छेदनैः । 'तक्ष संतक्षणे' । उपक्रोशनैः । 'उपक्रोशस्तु गर्हणम्' । सज्जता संगति-

पाठा०—१ 'उभौ'. २ अधिकगुणे च'. ३ 'आहृत'.

भियोगैरवमानैश्चापवाहनम्, अर्थदैरनर्थप्रतिघातिभिश्चानिन्द्यैरिभ्यै-रनुबद्धार्थानर्थसंशयान्विचार्य भूयोभूयः संयोजनमिति । गणिकायाश्च गम्यं प्रति सज्जतैव न सङ्गः । सत्यामपि प्रीतौ न मातुर्मातृकाया वा शासनातिवृत्तिः । एवं स्थितेऽनया प्रजापतिविहितं स्वधर्ममुल्लङ्घ्य क्वचिदागन्तुके रूपमात्रधने विप्रयूनि स्वेनैव धनव्ययेन रममाणया मासमात्रमत्यवाहि । गम्यजनश्च भूयानर्थयोग्यः प्रत्याचक्षाणयानया प्रकोपितः । स्वकुटुम्बकं चावसादितम् । 'एषा कुमतिर्न कल्याणी' इति निवारयन्त्यां मयि वनवासाय कोपात्प्रस्थिता । सा चेदियमहार्यनिश्चया सर्व एष जनोऽत्रैवानन्यगतिरनशनेन संस्थास्यते' इत्यरोदीत् ।

अथ सा वारयुवतिस्तेन तापसेन 'भद्रे, ननु दुःखाकरोऽयं वनवासः । तस्य फलमपवर्गः स्वर्गो वा । प्रथमस्तु तयोः प्रकृष्ट-

---

पदचन्द्रिका ।

अपवाहनं दूरीकरणम् । अनर्थप्रतिघातिभिरुपद्रवनिवारकैः । इभ्यैर्धनिकैः । 'इभ्य आढ्यो धनी स्वामी' इत्यमरः । सज्जता संगतिविषयता । मातृकाया मातामह्याः । 'मातुर्माता तु मातृका' इति वैजयन्ती । अतिवृत्तिस्त्यागः । गम्यजनो विटजनः । प्रत्याचक्षाणया प्रत्याख्यानं कुर्वत्या । अवसादितं नाशितम् । अहार्यनिश्चया दृढनिश्चया । संस्थास्यते मरिष्यतीत्यर्थः । 'संस्थानं मरणं मतम्' इति वैजयन्ती ॥

**अथेति** । दुःखाकरो दुःखजनकः । 'दुःखात्प्रातिलोम्ये' (५।४।६४) इति

भूषणा ।

प्रथमोऽपवर्गः । दुःसंपादो दुःसाध्यः । कुलधर्मानुष्ठायिनः स्वकुलोचितकर्मकारिणः । अर्थदैस्त्यागिभिः । अनर्थप्रतिघातिभी राजवदाज्ञाशक्तिप्रधानैः । इभ्यैराढ्यैः । अस्माभिर्लभ्येति विचार्येत्यर्थः । 'इभ्य आढ्यो धनी स्वामी' इत्यमरः । 'संयोजनमिति' इत्यन्तेन मातुरधिकारं निरूप्य गणिकाधिकारमाह—**गणिकायाश्चेति** । अधिकार इत्यनुषज्यते । मातृकाया मातुर्मातुः । 'मातुर्माता तु मातृका' इति वैजयन्ती । कुटुम्बकम् । अनुकम्पायां कन् । अहार्यनिश्चया दृढनिश्चया । संस्था-

लघुदीपिका ।

विषयता । 'मातुर्माता तु मातृका' इति वैजयन्ती । संस्थास्यते मरिष्यति ।

---

पाठा०-१ 'अन्यैः'.

ज्ञानसाध्यः प्रायो दुःसंपाद एव, द्वितीयस्तु सर्वस्यैव सुलभः कुलधर्मानुष्ठायिनः । तदशक्यारम्भादुपरम्य मातुर्मते वर्तस्व' इति सानुकम्पमभिहिता 'यदीह भगवत्पादमूलमशरणम्, शरणमस्तु मम कृपणाया हिरण्यरेता देव एव' इत्युदमनायत । स तु मुनिरनुविमृश्य गणिकामातरमवदम्—'संप्रति गच्छ गृहान् । प्रतीक्षस्व कानिचिद्दिनानि यावदियं सुकुमारा सुखोपभोगसमुचिता सत्यरण्यवासव्यसनेनोद्वेजिता भूयोभूयश्चास्माभिर्विबोध्यमाना प्रकृतावेव स्थास्यति' इति । 'तथा' इति तस्याः प्रतियाते स्वजने सा गणिका तमृषिमलघुभक्तिर्धौतोद्गमनीयवासिनी नात्यादृतशरीरसंस्कारा वनतरुपोतालवालपूरणैर्देवतार्चनकुसुमोच्चयावचयप्रयासैर्नैकविकल्पोप-

पदचन्द्रिका ।

डाच्प्रत्ययः । प्रथमोऽपवर्गः । दुःसंपादो दुःसाध्यः । अशक्यारम्भात्तपस इत्यर्थः । अशरणमरक्षितृ । 'शरणं गृहरक्षित्रोः' । 'हिरण्यरेता हुतभुग्दहनः' इत्यमरः । उदमनायत उन्मना अभवत् । **स इति** । स मुनिः । संप्रतीदानीम् । गृहान् । 'गृहाः पुंसि च भूम्न्येव' इत्यमरः । प्रकृतौ स्वभावे । अलघुभक्तिर्दृढभक्तिः । **धौतोद्गमनीयेति** । धौतं यदुद्गमनीयं तद्वस्ते सा तद्वासिनी । 'तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम्' इत्यमरः । धौतोद्गमनीयमित्यत्र 'विशिष्टवाचकानाम्' इति वचनाद्विशेष्यपरतया व्याख्येयम् । **नात्यादृतेति** । नात्यादृतो नादरितः शरीरस्य संस्कारः परिकर्मादिर्यया सा । वनतरूणां पोता बालवृक्षास्तेषामालवालानि । देवतार्चनं देवपूजा तदर्थं कुसुमानि पुष्पाणि तेषामुच्चयः समूहस्तस्यावचयो ग्रहणं तत्प्रयासैः श्रमैः नैका अनेका ये विकल्पा भेदाः । 'विकल्पः संशये भेदे' इति वररुचिः । उपहारकर्मभिर्बलिकर्मभिः ।

भूषणा ।

स्यते मरिष्यति । दुःखकरो दुःखदः । 'दुःखात्प्रातिलोम्ये' (५।४।६४) इति डाच् । **संप्रतीति** । 'लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते' इति लक्षणाल्लोकोक्तिरलंकारः । उदमनायतोन्मना इवाभवत् । 'कर्तुः क्यङ्—' (३।१।११) इत्याचारक्यङन्तः । 'दुर्मना विमना अन्तर्मनाः स्यादुत्क उन्मनाः' । इत्यमरः । उद्गमनीयं वस्त्रयुगम् । 'तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम्' इत्यमरः । उच्चयस्तरोरादानम् । अवचयो भूमेः । नैकविधविकल्पोऽनेकप्रकारः । 'विकल्पः संशये भेदे' इति वररुचिः । 'बलिः

लघुदीपिका ।

संस्थानं मरणं मतम्' । उदमनायतोन्मना अभवत् । उद्गमनीयं वस्त्रद्वयम् । 'तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम्' । नैकविधविकल्पो नैकप्रकारः । 'विकल्पः संशये भेदे' इति वररुचिः । 'बलिः पूजोपहारः स्यात्' । त्रिवर्गो धर्मार्थकामाः

पाठा०—१ 'नैकविधविकल्प'.

हारकर्मभिः कामशासनार्थे च गन्धमाल्यधूपदीपनृत्यगीतवाद्यादिभिः क्रियाभिरेकान्ते च त्रिवर्गसंबन्धिनीभिः कथाभिरध्यात्मवादैश्चानुरूपैरल्पीयसैव कालेनान्वरञ्जयत् । एकदा च रहसि रक्तं तमुपलक्ष्य 'मूढः खलु लोको यत्सह धर्मेणार्थकामावपि गणयति' इति किंचिदस्मयत । 'कथय वासु, केनांशेनार्थकामातिशायी धर्मस्तवाभिप्रेतः' इति प्रेरिता मरीचिना लज्जामन्थरमारभताभिधातुम्—'इतः किल जनाद्भगवतस्त्रिवर्गबलाबलज्ञानम् । अथवैतदपि प्रकारान्तरं दासजनानुग्रहस्य । भवतु, श्रूयताम् । ननु धर्मादृतेऽर्थकामयोरनुत्पत्तिरेव । तदनपेक्ष एव धर्मो निवृत्तिसुखप्रसूतिहेतुरात्मसमाधानमात्रसाध्यश्च । सोऽर्थकामवद्बाह्यसाधनेषु नात्यायतते । तत्त्वदर्शनोपबृंहितश्च यथाकथं-

---

### पदचन्द्रिका ।

'बलिः पूजोपहारः स्यात्' इत्यमरः । कामशासनो महादेवस्तदर्थे तन्निमित्तम् । त्रिवर्गो धर्मार्थकामाः । अध्यात्मवादैरात्मानमधिकृत्य ये वादास्तत्त्वबुभुत्सुकथाः । अल्पीयसैवाल्पे । अन्वरञ्जयत् । अनुरञ्जयामासेत्यर्थः । **एकदेति** । रहस्येकान्ते । रक्तमनुरक्तम् । किंचिदल्पम् । अस्मयत । **कथयेति** । वासु बाले । 'अथ बाला स्याद्वासूः' इत्यमरः । 'अम्बार्थनद्योर्ह्रस्वः' (७।३।१०७) इति संबुद्धौ ह्रस्वता । अर्थकामावतिशेते अतिक्रम्य वर्तत इति तथा । अभिप्रेतः संमतः । इतो जनान्मल्लक्षणात् । तदनपेक्ष एकार्थकामनिरपेक्ष एव । स्वतन्त्र एवेत्यर्थः । निवृत्तिसुखं मोक्षसुखं तदुद्भवहेतुः । आत्मसमाधानं बुद्धेरेकाग्रतामात्रम् । 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' इत्यमरादयः । स धर्मः । नात्यायतते नात्यन्तमधीनो

### भूषणा ।

पूजोपहारः स्यात्' । उपहारकर्म 'सांझी' इति भाषायाम् । कामशासनार्थे च कामोद्दीपनार्थे च लज्जामन्थरं व्रीडाशृङ्गारव्यभिचारिभावः । त्रिवर्गो धर्मार्थकामाः । 'त्रिवर्गो धर्मकामार्थैः' इत्यमरः । अध्यात्मवादैर्ब्रह्मतत्त्वचिन्तनैः । **धर्मादृत इति** । तथा च व्यासः—'धर्मादर्थश्च कामश्च' इति । तदनपेक्षोऽर्थकामानपेक्षः । निवृत्तिसुखप्रसूतिहेतुरक्षयसुखप्रसूतिहेतुः । ब्रह्मानन्दहेतुरिति यावत् । 'निवृत्तिस्तु सुखे व्याजे अभये अक्षयेऽपि च' (?) इति धरणिः । आत्मनः समाधानबुद्धेरैकाग्र्यम् । 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' इति धरणिः । बाह्यसाधनेषु लोकव्यवहारेषु । नात्यायतते । 'यती प्रयत्ने' । गुरुतल्पं बृहस्पतिभार्या ।

### लघुदीपिका ।

'त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः' । अध्यात्मवादैर्मोक्षोपायविचक्षणैः । प्रकारान्तरं प्रकारभेदः । निवृत्तिसुखप्रसूतिहेतुर्मोक्षसुखोद्भवहेतुः । आत्मसमा-

---

पाठा०—१ 'आत्मनः समाधान'.

चिदप्यनुष्ठीयमानाभ्यां नार्थकामाभ्यां वाध्यते । बाधितोऽपि चाल्पायासप्रतिसमाहितस्तमपि दोषं निर्हृत्य श्रेयसेऽनल्पाय कल्पते । तथा हि पितामहस्य तिलोत्तमाभिलाषः, भवानीपतेर्मुनिपत्नीसहस्रसंदूषणम्, पद्मनाभस्य षोडशसहस्रान्तःपुरविहारः, प्रजापतेः स्वदुहितर्यपि प्रणयप्रवृत्तिः, शचीपतेरहल्याजारता, शशाङ्कस्य गुरुतल्पगमनम्, अंशुमालिनो वडवालङ्घनम्, अनिलस्य केसरिकलत्रसमागमः, बृहस्पतेरुतथ्यभार्याभिसरणम्, पराशरस्य दाशकन्यादूषणम्, पाराशर्यस्य भ्रातृदारसंगतिः, अत्रेर्मृगीसमागम इति । अमराणां च तेषु तेषु कार्येष्वासुरविप्रलम्भनानि ज्ञानबलान्न धर्मपीडामावहन्ति । धर्मपूते च मनसि नभ-

---

पदचन्द्रिका ।

भवतीत्यर्थः । 'यती प्रयत्ने' । उपसर्गादन्योऽर्थः । तत्त्वदर्शनेनोपबृंहितो वर्धितो धर्मोऽर्थकामाभ्यां न बाध्यते । बाधितोऽपि धर्मोऽल्पायासेनाल्पप्रयत्नेन प्रतिसमाहितः समाधानं प्रापितः । श्रेयसे मोक्षाय । **तथा हीति ।** तिलोत्तमा अप्सरोविशेषः । संदूषणं गमनम् । प्रणयेन प्रीत्या । प्रवृत्तिः प्रवर्तनम् । अहल्या गौतमपत्नी । गुरुतल्पं बृहस्पतिभार्या । 'तल्पं शय्याट्टदारेषु' इत्यमरः । वडवाश्विनी । अनिलस्य वायोः । 'कलत्रं श्रोणिभार्ययोः' इत्यमरः । अंशुमाली सूर्यः । केसरी वानरभेदः । उतथ्यो बृहस्पतेर्ज्येष्ठभ्राता । अभिसरणं गमनम् । पराशरस्य व्यासपितुः । दाशः कैवर्तः । 'कैवर्ते दाशधीवरौ' इत्यमरः । तत्कन्या योजनगन्धा तद्दूषणं तद्गमनम् । पाराशर्यस्य भ्राता विचित्रवीर्यः । आसुरविप्रलम्भनान्यकृत्याचरणानि । 'अकृत्याचरणं यत्तदासुरं विप्रलम्भनम्' इत्यजयः । ज्ञानबलात्तत्प्राबल्यात् । धर्मपूते धर्मपवित्रे । यथा नभसि रजो नानुषक्तं भवति तथेत्यर्थः ।

भूषणा ।

'तल्पं शय्याट्टदारेषु' इत्यमरः । अभिसरणमभिसृतिः । दाशः कैवर्तः । 'कैवर्ते दाशधीवरौ' इत्यमरः । आसुरविप्रलम्भनान्यकृत्याचरणानि । 'अकृत्याचरणं यत्तदासुरं विप्रलम्भनम्' इत्यजयः । **नभसीवेति ।** अमूर्तत्वान्नभसो न तत्र रजोनुषङ्ग इति भावः । मूर्तत्वेनान्यत्र वर्णनं तु बालव्यवहारसिद्धत्वेन । संधिः शत्रुमेलनम् ।

लघुदीपिका ।

धानमात्रं बुद्धेरैकाग्र्यमात्रम् । 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' । नात्यायतते 'यती प्रयत्ने' । गुरुतल्पं बृहस्पतिभार्या । 'तल्पं शय्याट्टजायासु' इति वैजयन्ती । अभिसरणमभिगमनम् । दाशः । 'कैवर्ते दाशधीवरौ' । आसुरविप्रलम्भनान्यकृत्याचरणानि । 'अकृत्याचरणं यत्तदासुरं विप्रलम्भ-

सीव न जातु रजोऽनुषज्यते । तन्मन्ये नार्थकामौ धर्मस्य शततमीमपि कलां स्पृशतः' इति । श्रुत्वैतदृषिरुदीर्णरागवृत्तिरभ्यधात्—'अयि विलासिनि, साधु पश्यसि । न धर्मस्तत्त्वदर्शिनां विषयोपभोगेनोपरुध्यत इति । किंतु जन्मनः प्रभृत्यर्थकामवार्तानभिज्ञा वयम् । ज्ञेयौ चेमौ किंरूपौ किंपरिवारौ किंफलौ च' इति । सा त्ववादीत्—'अर्थस्तावदर्जनवर्धनरक्षणात्मकः, कृषिपाशुपाल्यवाणिज्यसंधिविग्रहादिपरिवारः, तीर्थप्रतिपादनफलश्च । कामस्तु विषयातिसक्तचेतसोः स्त्रीपुंसयोर्निरतिशयसुखस्पर्शविशेषः । परिवारस्त्वस्य यावदिह रम्यमुज्ज्वलं च । फलं पुनः परमाह्लादनम्, परस्परविमर्दजन्म, स्मर्यमाणमधुरम्, उदीरिताभिमानमनुत्तमम्, सुखमपरोक्षं स्वसंवेद्यमेव । तस्यैव कृते विशिष्ट-

---

पदचन्द्रिका ।

**श्रुत्वेति** । उदीर्णा वृद्धिं गता रागवृत्तिर्यस्येति । रागवृत्तिरिच्छावृत्तिः । अयि विलासिनीति सानुरक्तिः । तत्त्वदर्शिनां तत्त्वसाक्षात्कारिणाम् । जन्मनः प्रभृति । आ जन्मेत्यर्थः । अनभिज्ञा अज्ञातारः । नोपरुध्यते नोपक्षीयते । धर्मो विषयोपभोगेन स्त्र्याद्युपभोगेन । ज्ञेयौ चेमावर्थकामौ ज्ञातव्याविति । रूपं स्वरूपम् । परिवारः परिकरः । **सा त्ववादीदिति** । अर्जनं संपादनम् । वर्धनं वृद्धिकालादिभिः । रक्षणं पालनम् । कृषिः कर्षणकर्म । पाशुपाल्यं पशुपालनम् । तीर्थेषु सत्पात्रेषु । 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्' इत्यमरः । कामस्तु स्त्रीपुंसयोरिति । 'अचतुर–' (५।४।७७) इत्यादिना निपातनाददन्तता । निरतिशयः श्रेष्ठ इत्यर्थः । यावदिति साकल्ये । परस्परविमर्दजन्मान्योन्यालिङ्गनचुम्बनादिजन्मा । अपरोक्षं प्रत्यक्षम् । तस्यैव सुखस्यैव निमित्तम् । कृत इत्यव्ययं तादर्थ्ये । 'अर्थे

भूषणा ।

शत्रुलुण्ठनं विग्रहः । परिवारः परिकरः । तीर्थप्रतिपादनं सत्पात्रदानम् । 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्' इत्यमरः । विषयाभिव्यक्तचेतसोर्विषयोऽभिव्यक्तो विषयीभूतो यत्र तथाविधं चेतो ययोः । विषयमात्रविषयकचेतसोरिति यावत् । रम्यमुज्ज्वलं वस्तूद्दीपनविभावः स्मर्यमाणं सन्मधुरम् । यदीयं स्मरणमपि सुखजनकमिति

लघुदीपिका ।

नम्' इत्यजयः । आवहन्ति कुर्वन्ति । परिवारौ । 'परिवारः परिकरः' । तीर्थप्रतिपादनं सत्पात्रदानम् । 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् । प्रदा-

---

पाठा०—१ 'अभिव्यक्त'. २ 'उज्ज्वलं वस्तु'.

स्थानवर्तिनः कष्टानि तपांसि, महान्ति दानानि, दारुणानि युद्धानि, भीमानि समुद्रलङ्घनादीनि च नराः समाचरन्ति' इति। निशम्यैतन्नियतिबलान्नु[1] तत्पाटवान्नु स्वबुद्धिमान्द्यान्नु स्वनियममनादृत्य तस्यामसौ प्रासजत्। सा सुदूरं मूढात्मानं च तं प्रवहणेन नीत्वा पुरमुदारशोभया राजवीथ्या स्वभवनमनैषीत्। अभूच्च घोषणा 'श्वः कामोत्सवः' इति। उत्तरेद्युः स्नातानुलिप्तमारचितमञ्जुमालमारब्धकामिजनवृत्तं[2][3] निवृत्तस्ववृत्ताभिलाषं क्षणमात्रे गतेऽपि तया विना दूयमानं तमृषिमृद्धिमता राजमार्गेणोत्सवसमाजं नीत्वा कच्चिदुपवनोद्देशे युवतिजनशतपरिवृतस्य राज्ञः[4] संनिधौ स्मितमुखेन तेन 'भद्रे, भगवता सह निषीद' इत्यादिष्टा

पदचन्द्रिका।

कृतेऽव्ययं तावत्तादर्थ्ये वर्तते द्वयम्' इति। विशिष्टस्थानवर्तिनः सत्तीर्थवासिनः। नरा मानवाः। निशम्य श्रुत्वा। नियतिर्दैवम्। तस्याः काममञ्जर्याः। पाटवं पटुत्वम्। मान्द्यं मन्दत्वम्। नुः सर्वत्र वितर्के। स्वनियमं मुनिसमयम्। असौ मरीचिस्तस्यां काममञ्जर्यां प्रासजत्। प्रसक्तोऽभूदित्यर्थः। **सेति**। सा काममञ्जरी। मूढात्मानं मूर्खबुद्धिम्। तं मुनिम्। प्रवहणेन कर्णीरथेन। 'कर्णीरथः प्रवहणम्' इत्यमरः। उदारशोभयोत्कृष्टशोभया। राजवीथ्या राजमार्गेण। स्वभवनं स्वगृहम्। **अभूच्चेति**। घोषणा डिण्डिमः। 'डांगोरा' इति प्रसिद्धः। श्व आगामिनि दिवसे। उत्तरेद्युरित्युत्तरदिवसे। पूर्वं स्नातः पश्चादनुलिप्तस्तथा तम्। आरचिता धृता मञ्जुः मनोज्ञा माला येनेति तम्। मनोज्ञं मञ्जुलम्। वृत्तं वर्तनम्। निवृत्तो दूरापास्तः स्ववृत्ते स्वाचरणेऽभिलाषो यस्य तम्। दूयमानं खिद्यमानम्। ऋद्धिमता समृद्धेन। उत्सवसमाजं क्रीडासभाम्। स्मितमुखेन। तेन राज्ञेत्यर्थः।

भूषणा।

यावत्। उदीरित इत्यत्राभिमानः सार्थक्यबुद्धिर्यत इत्यर्थः। तस्यैव कृते तदर्थम्। 'अर्थे कृतेऽव्ययं तावत्तादर्थ्ये वर्तते द्वयम्' इति कोशसारः। प्रासजत् प्रकर्षेण सक्तोऽभवत्। सुदूरमत्यन्तम्। 'सुदूरं दीर्घमायतम्' इत्यमरः। प्रवहणं कर्णीरथः।

लघुदीपिका।

नम्' इति वैजयन्ती। तस्यैव कृते तदर्थम्। 'अर्थे कृतेऽव्ययं तावत्तादर्थ्ये वर्तते द्वयम्'। प्रासजत् प्रकर्षेण सक्तोऽभूत्। 'कर्णीरथः प्रवहणमर्थयानं सयन्त्रकम्'

पाठा०—१ 'निमित्तबलान्नु'. २ 'मुण्डमालम्'. ३ 'जनवृत्तनिवृत्त.' ४ 'अनिधौ समासदत्तत्र'.

सविभ्रमं कृतप्रणामा सस्मितं न्यषीदत् । तत्र काचिदुत्थाय बद्धाञ्जलिरुत्तमाङ्गना 'देव, जितानयाहम् । अस्यै दास्यमद्यप्रभृत्यभ्युपेतं मया' इति प्रभुं प्राणंसीत् । विस्मयहर्षमूलश्च कोलाहलो लोकस्योदजिहीत । हृष्टेन च राज्ञा महार्हैं रत्नालंकारैर्महता च परिबर्हेणानुगृह्य विसृष्टा वारमुख्याभिः पौरमुख्यैश्च गणशः प्रशस्यमाना स्वभवनमगत्वैव तमृषिमभाषत—'भगवन्, अयमञ्जलिः, चिरमनुगृहीतोऽयं दासजनः । स्वार्थ इदानीमनुष्ठेयः' इति । स तु रागादशनिहत इवोद्भ्राम्याब्रवीत्—'प्रिये, किमेतत् । कुत इदमौदासीन्यम् । क्व गतस्तव मय्यसाधारणोऽनुरागः' इति । अथ सा सस्मितमवादीत्—'भगवन्, ययाद्य राजकुले मत्तः पराजयोऽभ्युपेतस्तस्याश्च मम च कस्मिंश्चित्संघर्षे '[1]मरीचिमावर्जितवतीव श्लाघसे' इति [2]तयास्म्यहमधिक्षिप्ता । दास्यपणबन्धेन

## पदचन्द्रिका ।

भगवता मुनिना सह । निषीदेत्युपविशेति । **तत्रेति** । तत्र सभायाम् । अनया काममञ्जर्या । दास्यं दासत्वम् । अभ्युपेतमङ्गीकृतम् । प्रभुं राजानम् । प्राणंसीत् प्रणाममकरोत् । प्रणताभूदित्यर्थः । विस्मय आश्चर्यम् । 'विस्मयोऽद्भुतमाश्चर्यम्' इत्यमरः । कोलाहलः कलकलः । एवमेवामरः । उदजिहीत । 'ओहाङ् गतौ' इत्यस्य । उद्गतोऽभूदित्यर्थः । अर्हो मौल्यम् । परिबर्हः परिकरः । सेवकजन इति यावत् । अनुगृह्यानुग्रहं कृत्वा । प्रशस्यमाना स्तूयमाना । अनुगृहीतोऽनुग्रहविषयीकृतः । अयं दासजनो मल्लक्षणः । स्वार्थस्तपश्चरणादिः । **स त्विति** । स तु मुनिः । अशनिः खड्गः । 'दम्भोलिरशनिर्द्वयोः' इत्यमरः । उदासीनस्य भाव औदासीन्यम् । **अथेति** । संघर्षो वैरम् । आवर्जितवतीव वशीकृतवती-

## भूषणा ।

'कर्णीरथः प्रवहणम्' इत्यमरः, 'तांगा' इति भाषया । प्राणंसीत्प्रणाममकरोत् । विस्मयहर्षमूलः पौराणां विस्मयमूलः, काममञ्जरीवर्ग्याणां हर्षमूल इत्यर्थः । उदजिहीत । सर्वत्राभूदिति यावत् । 'ओहाङ् गतौ' । **महर्षिमरीचिमिति** । मरीचिमावर्जितवतीव मोहितवती सदृशीव श्लाघस इति तयाहमधिक्षिप्ता निन्दिता । यथा ऋषेर्मोहं कृत्वोर्वशी श्लाघते तद्वदियमकृतकार्यापि श्लाघत इति भावः । ततस्तन्मोहः क्रियते

## लघुदीपिका ।

प्राणंसीत्प्रणाममकरोत् । बन्धक्याऽसत्या । 'पांसुला बन्धकी स्वैरिण्यसती पुंश्चली त्वरी' । [ तावत् ] तावदेवेत्यर्थः । 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' । समकुचन्मुकुलितानि । 'कुच निमीलने' । तमनुशय्य तेन सह शयित्वा 'तृ-

पाठा०—१ 'महर्षिं मरीचिम्'. २ 'तयाहमधिक्षिप्ता'.

चास्मिन्नर्थे प्रावर्तिषि । सिद्धार्था चास्मि त्वत्प्रसादात्' इति । स तया तथावधूतो दुर्मतिः कृतानुशयः शून्यवन्न्यवर्तिष्ट । यस्तयैवं कृतस्तपस्वी तमेव मां महाभाग, मन्यस्व । स्वशक्तिनिषिक्तं राग-मुद्धृत्य तयैव बन्धक्या महद्वैराग्यमर्पितम् । अचिरादेव शक्य आत्मा त्वदर्थसाधनक्षमः कर्तुम् । अस्यामेव तावदङ्गपुर्यां चम्पायाम्' इति ।

अथ तन्मनश्च्युततमःस्पर्शभियेवास्तं रविरगात् । ऋषिमुक्तश्च रागः संध्यात्वेनास्फुरत् । तत्कथादत्तवैराग्याणीव कमलवनानि समकुचन् । अनुमतमुनिशासनस्त्वहममुनैव सहोपास्य संध्या-मनुरूपाभिः कथाभिस्तमनुशय्य नीतरात्रिः प्रत्युन्मिषत्युदयप्रस्थ-

पदचन्द्रिका ।

वेत्यर्थः । पणबन्धः प्रतिज्ञा । अस्मिन्नर्थे भवद्वशीकरणरूपेऽर्थे । प्रावर्तिषि प्रवर्तिता । सिद्धार्था कृतार्था । अवधूतो दूरीकृतः । कृतानुशयः कृतपश्चात्तापः । 'भवेदनुशयो द्वेषे पश्चात्तापानुबन्धयोः' इति विश्वः । शून्यवच्छून्यहृदय इव । न्यवर्तिष्ट । परावृत्तोऽभूदित्यर्थः । **य इति** । तपस्व्यनुकम्प्यः । 'तपस्वी चानुकम्पार्हः' इत्यमरः । महाभागेत्यपहारवर्मसंबोधनम् । तमेव मरीचिमेव । मां मन्यस्व । जानीहीत्यर्थः । स्वशक्तिनिषिक्तं स्वसामर्थ्येन निषिक्तं निक्षिप्तम् । रागमनुरागम् । उद्धृत्य दूरीकृत्य । बन्धक्या पुंश्चल्या । 'पुंश्चली धर्षणी बन्ध-क्यसती कुलटेत्वरी' इत्यमरः । त्वदर्थसाधनक्षमस्त्वत्प्रयोजनसंपादनसमर्थः ॥

**अथेति** । तस्य मनुर्यन्मनस्तस्माच्च्युतं गलितं यत्तमोऽज्ञानं तत्स्पर्शभियेव । सूर्यतमसोर्वैरादिति भियेवेत्यर्थः । ऋषिमुक्तः स रागः काममञ्जरीविषयकः संध्यात्वेनास्फुरदिति प्रकटीबभूवेत्यर्थः । तत्कथा मुनिवार्तास्ताभिर्दत्तवैराग्याणीव कमलवनानि समकुचन् संकुचितानि बभूवुः । इवशब्दोऽत्रोत्प्रेक्षायाम् । अनुमत-मङ्गीकृतं मुनिशासनं येनेति सः । अमुना सह मुनिना सह । सहयोगे तृतीया ।

भूषणा ।

चेत्त्वया दास्यं कार्यमिति पणबन्धहेतुकमेतस्मिन्नर्थे प्रवर्तनम् । अनुशयोऽनुतापः 'अनुशयो दीर्घद्वेषानुतापयोः' इत्यमरः । स्वशक्तिः प्रलोभनशक्तिः । बन्धक्याऽसत्या 'बन्धक्यसती कुलटा' इत्यमरः । तावत् । तावदेवेत्यर्थः । 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः । अत्र सिद्धिविषयहेतूत्प्रेक्षालंकारः—'संभावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना । उक्तानुक्तास्पदाद्या तु सिद्धासिद्धास्पदे परे ॥ इति लक्षणात् । समकुचन्मुकुलितानि । 'कुच निमीलने' । तमनुशय्य तेन सह शयित्वा । 'तृतीयार्थे'

लघुदीपिका ।

तीयार्थे–' ( १।४।८५ ) इत्यनोः कर्मत्वम् । 'कर्मप्रवचनीययुक्ते' ( २।३।८ ) इति

पाठा०–१ 'स्वनिषिक्तम्'.

दावकल्पे कल्पद्रुमकिसलयावधीरिण्यरुणार्चिषि तं नमस्कृत्य नगरायोदचलम् । अदर्शं च मार्गाभ्याशवर्तिनः[1] कस्यापि क्षपणकविहारस्य बहिर्विविक्ते रक्ताशोकखण्डे निषण्णमस्पृष्टसमाधिमाधिक्षीणमग्रगण्यमनभिरूपाणां कृपणवर्णं कमपि क्षपणकम् । उरसि चास्य शिथिलितमलनिचयान्मुखान्निपततोऽश्रुबिन्दून् लक्षयम् । अप्राक्षं चान्तिकोपविष्टः—'क्व तपः, क्व च रुदितम् ?

### पदचन्द्रिका ।

अनुरूपाभिरनुकूलाभिः । तमनुशय्य । तेन सह शयित्वेत्यर्थः । 'तृतीयार्थे–' ( १।४।८५ ) इत्यनोः कर्मप्रवचनीयत्वम् । 'कर्मप्रवचनीययुक्ते–' ( २।३।८ ) इति द्वितीया । प्रत्युन्मिषत्युदयति सतीति सप्तम्यन्तम् । उदयः पूर्वपर्वतः । एवमेवामरः । तस्य प्रस्थं सानुः । 'स्नुः प्रस्थः सानुरस्त्रियाम्' इत्यमरः तत्र दावकल्पे वह्निसदृशे । 'दवदावौ वनाग्निलौ' इत्यमरः । कल्पद्रुमस्य कल्पवृक्षस्य । किसलयानि पल्लवानि । 'पल्लवोऽस्त्री किसलयम्' इत्यमरः । अवधीरिणि तिरस्कारकारिणि । अरुणार्चिषि सूर्ये । तं मुनिम् । नगराय । नगरं प्रतीत्यर्थः । 'उदश्चरः सकर्मकात्' ( १।३।५३ ) इति उदचलम् । चलित इत्यर्थः । अदर्शमिति दृष्टवान् । मार्गस्याभ्याशं समीपम् । 'सदेशाभ्याशसविधसंनिकृष्टसनीडवत्' इत्यमरः । क्षपणकविहारस्य सौगतावासस्य । बहिर्विविक्ते विजने । 'विविक्तौ पूतविजनौ' इत्यमरः । रक्ताशोकखण्डे रक्ताशोककदम्बे । 'कदम्बे खण्डमस्त्रियाम्' इत्यमरः । अस्पृष्टसमाधिं नियमरहितम् । 'समाधिर्नियमे ध्याने' इति विश्वः । आधिक्षीणं मानसपीडादुर्बलम् । अनभिरूपाणां कुरूपाणाम् । कृपणवर्णं दीनवर्णम् । क्षपणकं बौद्धम् । शिथिलितो मलनिचयो यत्रेति तथा तस्मात् । अप्राक्षम् । इत्यवोचमित्यर्थः । अन्तिकोपविष्टः समीपस्थितः । न

### भूषणा ।

( १।४।८५ ) इत्यनोः कर्मप्रवचनीयत्वम् । 'कर्मप्रवचनीययुक्ते–' ( २।३।८ ) इति द्वितीया । उदयप्रस्थः पूर्वपर्वतसानुः । तद्दावकल्पे वनाग्निसदृशे । 'उदयः पूर्वपर्वतः' । 'स्नुः प्रस्थः सानुरस्त्रियाम्' । 'दवदावौ वनानलौ' इति त्रिष्वप्यमरः । 'दृशिर् प्रेक्षणे' 'इरितो वा' ( ३।१।५७ ) इति वाङ् । च्लेः 'ऋदृशोऽङि–' ( ७।४।१६ ) इति गुणेऽमि पूर्वरूपे रूपम्, अदर्शमिति । अभ्याशवर्तिनः समीपवर्तिनः । 'सदेशाभ्याशसविध–' इत्यमरः । 'षण्डं च पादपानां' इति हलायुधः । अप्राक्षं पृष्टवान् । उपशमय्य शान्तिं नीत्वा ।

### लघुदीपिका ।

द्वितीया । उदयः । 'अस्तस्तु चरमक्ष्माभृदुदयः पूर्वपर्वतः' 'दृशिर् प्रेक्षणे' इत्यस्माद्धातोः इरितो वा' ( ३।१।५७ ) इत्यङ्प्रत्यये कृतेऽदर्शयदिति रूपं भवति । अभ्याशवर्तिनः समीपवर्तिनः । 'अभ्याशासन्ननिकटसंनिकृष्टसमीपवत्', 'विहारः सौगतावासे क्रीडायां च' इति वैजयन्ती । षण्डं वृक्षसमूहः । 'षण्डं

पाठा०–१ 'अभ्यासवर्तिनः'.

न चेद्रहस्यमिच्छामि श्रोतुं शोकहेतुम्' इति । सोऽब्रूत—'सौम्य, श्रूयताम् । अहमस्यामेव चम्पायां निधिपालितनाम्नः श्रेष्ठिनो ज्येष्ठसूनुर्वसुपालितो नाम । वैरूप्यात्तु मम विरूपक इति प्रसिद्धिरासीत् । अन्यश्चात्र सुन्दरक इति यथार्थनामा कलागुणैः[1] समृद्धो वसुना नातिपुष्टोऽभवत् । तस्य च मम च वपुर्वसुनी निमित्तीकृत्य वैरं वैरोपजीविभिः पौरधूर्तैरुदपाद्यत । त एव कदाचिदावयोरुत्सवसमाजे स्वयमुत्पादितमन्योन्यावमानमूलमधिक्षेपवचनव्यतिकरमुपशमय्य 'न वपुर्वसु वा पुंस्त्वमूलम्, अपि तु प्रकृष्टगणिकाप्रार्थ्यर्यौवनो हि यः स पुमान् । अतो युवतिललामभूता काममञ्जरी यं वा कामयते स हरतु सुभगपताकाम्' इति व्यवास्थापयन् । अभ्युपेत्यावां प्राहिणुव तस्यै[2] दूतान् । अहमेव किलामुष्याः स्मरोन्मादहेतुरासम् । आसीनयोश्चावयोर्मामेवोपगम्य

पदचन्द्रिका ।

चेद्रहस्यं न चेद्गोप्यम् । तच्छ्रोतुं श्रवणविषयीकर्तुम् । **सोऽब्रूतेति** । श्रेष्ठिनो वणिग्वरस्य । अन्यः कश्चन । वसुना नातिपुष्टः । दरिद्र इति यावत् । तस्य सुन्दरकस्य मम च वपुर्वसुनी शरीरद्रव्ये । वैरोपजीविभिर्वैरेणोपजीवन्ति तथोक्तैः । उदपाद्यत । उत्पादितमित्यर्थः । **त इति** । आवयोः स चाहं चावां, तयोरावयोः । स्वयं तैः पौरधूर्तैः । अन्योन्यावमानमूलं परस्परावज्ञानिदानम् । अधिक्षेपवचनव्यतिकरं तिरस्कारवाक्यप्रसरम् । उपशमय्य शमयित्वा । प्रकृष्टगणिकयोत्तमवेश्यया प्रार्थ्यमानं यौवनं यस्येति स तथा । युवतिललामभूता युवतिभूषणभूता । सुभग इति पताकाम् । चिह्नमिति यावत् । व्यवस्थापयन्निति मर्यादां चक्रुरित्यर्थः । अभ्युपेत्याङ्गीकृत्य । प्राहिणुवागमयाव । **अहमिति** । अमुष्याः काममञ्जर्याः । आसम् 'अस् भुवि' इति । आवयोरुभयोर्मध्ये मां

भूषणा ।

'शम उपशमे'। 'ल्यपि लघुपूर्वात्' (६।४।५६) इति णेरय्। अभ्युपेत्याङ्गीकारं कृत्वा । 'अङ्गीकाराभ्युपगम–' इत्यमरः। प्रहिणुवागमयाव। 'हि गतौ'। अस्या एनामानेतुम् । 'क्रियार्थोपपदस्य–' (२।३।१४) इति कर्मणि चतुर्थी । **अहमेवेति**। 'अर्थवद्ग्रहणे यस्मान्नानर्थकपरिग्रहः । सुरूपधनिनोर्वेश्या गृह्णाति धनिनं ततः ॥' इति । नक्षत्र-

लघुदीपिका ।

च पादपानां स्कन्धं करितुरंगमानां च' इति हलायुधः । अप्राक्षं पृष्टवान् । अभ्युपेत्यानुमत्य । प्राहिणुवागमयाव । अपत्रपया लज्जया ।

पाठा०–१ 'कल्याणगुणैः'. २ 'अस्यै'.

सा नीलोत्पलमयमिवापाङ्गदामाङ्गे मम मुञ्चन्ती तं जनमपत्रपयाधोमुखं व्यधत्त । सुभगंमन्येन च मया स्वधनस्य स्वगृहस्य स्व[1]गणस्य स्वदेहस्य स्वजीवितस्य च सैवेश्वरीकृता । कृतश्चाहमनया मलमल्लकशेषः । हृ[2]तसर्वस्वतया चापवाहितः प्रपद्य लोकोपहासलक्ष्यतामक्षमश्च सोढुं धिक्कृतानि पौरवृद्धानामिह[3] जैनायतने मुनिनैकेनोप[4]दिष्टमोक्षवर्त्मा सुकर एष वेषो वेशनिर्गतानामित्युदीर्णवैराग्यस्तदपि कौपीनमजहाम् । अथ पुनः प्रकीर्णमलपङ्कः प्रबलकेशलुञ्चनव्यथः प्रकृष्टतमक्षुत्पिपासादिदुःखः स्थानासनशयनभोजनेष्वपि द्विप इव नवग्रहो बलवतीभिर्यन्त्रणाभिरुद्वेजितः प्रत्यवामृशम् । 'अहमस्मि द्विजातिः । अस्वधर्मो ममैष पाख[5]ण्डिपथावतारः । श्रुतिस्मृतिविहितेनैव वर्त्मना मम पूर्वजाः प्रा-

### पदचन्द्रिका ।

प्रत्युपगम्य । अपाङ्गं नेत्रप्रान्तम् । तं जनं मत्प्रतिद्वन्द्विनं सुन्दरकम् । अपत्रपया लज्जया । 'लज्जा सापत्रपान्यतः' इत्यमरः । अधोमुखं नम्रवदनम् । व्यधत्त कृतवती । **सुभगमिति** । आत्मानं सुभगं मनुते स तथा । सैव काममञ्जरी । ईश्वरीकृता स्वामिनीकृता । च्व्यन्तमेतत् । मलमल्लकं कौपीनम् । 'आच्छादनं संपिधानं कौपीनं मलमल्लकम्' इति वैजयन्ती । अपवाहितो बहिष्कृतः । प्रपद्य । प्राप्येत्यर्थः । लोकानामुपहासास्तेषां लक्ष्यतां स्थानताम् । धिक्कृतानि तिरस्कारवचनानि । पौरवृद्धानां नागरिकश्रेष्ठानाम् । जैनायतने क्षपणकदेवतागारे । वेशो वेश्यागृहम् । 'वेशो वेश्याजनसमाश्रयः' इत्यमरः । तस्मिन्निर्गतानाम् । उदीर्णवैराग्योऽधिकवैराग्यः । कौपीनमजहामत्याक्षम् । **अथेति** । प्रकीर्णः प्रसृतः । लुञ्चनमुत्पाटनम् । व्यथा दुःखम् । प्रकृष्टतमः । 'अतिशायने तमबिष्ठनौ' (५।३।५५) इति तमप् । क्षुत्क्षुधा । पिपासा तृषा । द्विप इव हस्तीव । नवग्रहो नूतनं ग्रहणमुपादानं यस्येति । प्रत्यवामृशम् व्यचारयम् । द्विजातिर्वैश्यः । अस्वधर्मः । स्वधर्मो न भवतीत्यर्थः । पाखण्डिपथावतारः पाखण्डिनां पन्था इति

### भूषणा ।

माला । अपाङ्गदाम शृङ्गारानुभावः । अपत्रपया लज्जया । 'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा सापत्रपान्यतः' इत्यमरः । मलमल्लकं कौपीनम् । 'आच्छादनं संपिधानं कौपीनं मलमल्लकम्' इति वैजयन्ती । वेशो वेश्यागृहं । 'वेशो वेश्यागृहे प्रोक्तो ने-

### लघुदीपिका ।

'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा सापत्रपान्यतः' । मलमल्लकं कौपीनम् । 'आच्छादनं संपिधानं कौपीनं मलमल्लकम्' इति वैजयन्ती । 'वेशो वेश्याजनसमा-

पाठा०-१ 'स्वगुणस्य'. २ 'हृतसर्वस्वस्तया'. ३ 'इहैवायतने'. ४ 'उपदिष्ट उत्तमो वर्त्मा'. ५ 'पाषण्ड'.

वर्तन्त । मम तु मन्दभाग्यस्य निन्द्यवेषममन्ददुःखायतनं हरिहरहिरण्यगर्भादिदेवतापवादश्रवणनैरन्तर्यात्प्रेत्यापि निरयफलमफलं विप्रलम्भप्रायमीदृशमिदमधर्मवर्त्म धर्मवत्समाचरणीयमासीत्' इति प्रत्याकलितस्वदुर्नयः पिण्डीखण्डं विविक्तमेतदासाद्य पर्याप्तमश्रु मुञ्चामि' इति । श्रुत्वा चैतदनुकम्पमानोऽब्रवम्—'भद्र, क्षमस्व । कंचित्कालमत्रैव निवस । निजेन द्युम्नेनासावेव वेश्या यथा त्वां योजयिष्यति तथा यतिष्ये । सन्त्युपायास्तादृशाः' इत्याश्वास्य तमनूत्थितोऽहम् । नगरमाविशन्नेव चोपलभ्य लोकवादाल्लुब्धसमृद्धपूर्णं पुरमित्यर्थानां नश्वरत्वं च प्रदर्श्य प्रकृति-

---

पदचन्द्रिका ।

पथः । 'ऋक्पूः—'इत्यवन्तता । बौद्धमार्गावतरणम् । प्रावर्तन्त प्रवृत्ता आसन् । अमन्ददुःखायतनं महद्दुःखस्थानम् । अपवादो निन्दा । श्रवणस्य नैरन्तर्यान्निरन्तरस्य भावस्तया । अविच्छेदादित्यर्थः । प्रेत्य जन्मान्तरे । 'प्रेत्यामुत्र भवान्तरे' इत्यमरः । निरयो नरकः । 'स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्' इत्यमरः । अफलं निष्फलम् । विप्रलम्भप्रायं वञ्चनप्रायम् । 'विप्रलम्भो विसंवादो विरहो वञ्चना तथा' इति विश्वः । अधर्मवर्त्माऽधर्ममार्गः । प्रत्याकलितो विचारितः । पिण्डीखण्डम् पिण्ड्यशोकः । खण्डं समूहः । 'अशोकः पिण्डिका पिण्डी' इति वैजयन्ती । विविक्तमेकान्तम् । पर्याप्तं यथेष्टम् । श्रुत्वा चैतदिति क्षपणकवृत्तान्तम् । अब्रवमवदम् । भद्रेति संबोधनम् । द्युम्नेन धनेन । 'हिरण्यं द्रविणं द्युम्नम्' इत्यमरः । यतिष्ये । 'यती प्रयत्ने' । प्रयत्नं करिष्य इत्यर्थः । उपायाः साधनानि । तमिति क्षपणकम् । अनु पश्चात् । आविशन्नेवाप्रविशन्नेव । लोकवादाज्जनवाक्याल्लुब्धा वित्तत्यागासहाः । समृद्धाः श्रीमन्तः । 'श्रीमानिभ्य आढ्यः समृद्धश्च' इत्यमरः । अमूँल्लो-

लघुदीपिका ।

पथ्ये गृहमात्रके' इति विश्वप्रकाशः । प्रत्यवामृशं विचारितवान् । प्रेत्य जन्मान्तरे । 'प्रेत्यामुत्र भवान्तरे' इत्यमरः । निरयो नरकः । 'स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्' इत्यमरः । पिण्ड्यशोकः । 'अशोकः पिण्डिका पिण्डी' इति वैजयन्ती । विविक्तमेकान्तः । 'विविक्तविजनच्छन्न—' इत्यमरः । द्युम्नेन धनेन । 'हिरण्यं द्रविणं द्युम्नम्' इत्यमरः । लुब्धाः सतृष्णाश्च ते समृद्धा ऋद्धिमन्तस्तैः पूर्णम् । 'लुब्धोऽभि-

भूषणा ।

श्रयः' । प्रेत्य जन्मान्तरेऽपि । 'प्रेत्यामुत्र भवान्तरे' । निरयो नरकः । 'स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्' । पिण्ड्यशोकः । 'अशोकः पिण्डिका पिण्डी' इति वैजयन्ती । द्युम्नेन धनेन लुब्धः 'वित्तत्यागासहो लुब्धः' । इभ्यः समृद्धः ।

स्थानमून्विधास्यन्कर्णीसुतप्रहिते पथि मतिमकरवम् । अनुप्रविश्य च द्यूतसभामक्षधूर्तैः समगंसि । तेषां च पञ्चविंशतिप्रकारासु सर्वासु द्यूताश्रयासु कलासु कौशलमक्षभूमिहस्तादिषु चात्यन्तदुरुपलक्ष्याणि कूटकर्माणि तन्मूलानि सावलेपान्यधिक्षेपवचनानि, जीवितनिरपेक्षाणि संरम्भविचेष्टितानि, सभिकप्रत्ययव्यवहारान्न्यायबलप्रतापप्रायानङ्गीकृतार्थसाधनक्षमान्, बलिषु सान्त्वनानि, दुर्बलेषु भर्त्सितानि, पक्षरचनानैपुणम्, उच्चावचानि प्रलोभ-

पदचन्द्रिका ।

कान् । प्रकृतिस्थान्स्वभावस्थान् । कर्णीसुतप्रहिते । कर्णीसुतः स्तेयशास्त्रकर्ता । 'कर्णीसुतः करटकः स्तेयशास्त्रस्य कारकः' इति वैजयन्ती । तेन प्रहिते प्रवर्तिते । अक्षधूर्तैः पाशनिपुणैः । 'धूर्तौ निपुणवञ्चकौ' इति वैजयन्ती । समगंसि संगतोऽभवम् । **तेषां चेति** । तेषामक्षधूर्तानाम् । अक्षभूमिः शारीस्थापनगृहम् । कूटकर्माणि कपटकर्माणि, तन्मूलानि कूटकर्ममूलानि । सावलेपानि सगर्वाणि वेगोत्पादितानि । 'सभिको द्यूतकारकः' इत्यमरः । अङ्गीकृतार्थः स्वीकृतार्थस्तत्साधने क्षमान्समर्थान् । पक्षरचनानैपुणं स्वपक्षीकरणे नैपुण्यम् । सर्वलोकानां स्वाय-

भूषणा ।

लाषुकस्तृष्णक्' इत्यमरः । अर्थानां नश्वरत्वं नाशयोग्यत्वम् । प्रकृतिस्थानर्थजन्योन्मादशून्यान् । अमूँल्लुब्धसमृद्धलोकान् । कर्णीसुतः स्तेयशास्त्रप्रवर्तकः । 'कर्णीसुतो मूलदेवो मूलभद्रः कलाङ्कुरः' इति हारावली । अनुप्रपद्य विचारपूर्वकं प्राप्य । धूर्तो निपुणः । 'धूर्तौ निपुणवञ्चकौ' इति वैजयन्ती । समगंसि संगतः । अक्षाः पाशाः भूमिस्तत्क्षेपभूमिः हस्तादि च तेषु । 'अक्षो ज्ञानार्थशकटव्यवहारेषु पाशके' इति विश्वः । तन्मूलानि कूटकर्ममूलानि । सावलेपानि सगर्वाणि । जीवितनिरपेक्षाणि प्राणनिरपेक्षाणि । सभिकप्रत्ययात्सभिकज्ञानात् । 'सभिका द्यूतकारकाः' इत्यमरः । **व्यवहारन्यायबलेति** । व्यवहारो लोकानां व्यवहारः, न्यायो युक्तिः, तयोर्बलमुपन्यासः । प्रतापः प्रागल्भ्यं तैः प्रयोजितार्थसाधने क्षमस्तस्मादिति प्रत्ययस्य विशेषणम् । क्वचित् 'प्रत्ययव्यवहारात्' इति पाठः । प्रत्ययजनको व्यवहार इत्यर्थः । पक्षरचनानैपुणं सर्वजनानां स्वपक्षीकरणत्वे नैपुणम् । उ-

लघुदीपिका ।

'श्रीमानिभ्य आढ्यः समृद्धश्च' । कर्णीसुतः स्तेयशास्त्रकर्ता । 'कर्णीसुतः करटकः स्तेयशास्त्रस्य कारकः' इति वैजयन्ती । समगंसि संगतोऽस्मि । अक्षभूमिः शारीस्थापनगृहम् । तन्मूलानि कूटकर्ममूलानि । सावलेपानि सगर्वाणि । संरम्भविचेष्टितानि वेगव्युत्पादितानि । सभिकप्रत्ययात्सभिकज्ञानात् । सभिका द्यूतकारकाः' । पक्षरचनानैपुणं सर्वजनानां स्वपक्षीकरणे नैपुणम् । उच्चावचान्यनेकप्रका-

पाठा०—१ 'अनुप्रपद्य'. २ 'अक्षरभ्रमि'. ३ 'व्यवहारन्याय'. ४ 'प्रयोजितार्थ;' 'जितार्थे'. ५ 'परपक्षरचनानैपुण्यम्'. ६ 'उपप्रलोभनानि'.

नानि ग्लहप्रभेदवर्णनानि, द्रव्यसंविभागौदार्यम्, अन्तरान्तराश्लीलप्रायान्कलकलान्, इत्येतानि चान्यानि चानुभवन्न तृप्तिमध्यगच्छम्। अहसं च किंचित्प्रमाददत्तशारे क्वचित्कितवे। प्रतिकितवस्तु निर्दहन्निव क्रोधताम्रया दृशा मामभिवीक्ष्य 'शिक्षयसि रे द्यूतवर्त्म हासव्याजेन। आस्तामयमशिक्षितो वराकः। त्वयैव तावद्विचक्षणेन देविष्यामि' इति द्यूताध्यक्षानुमत्या व्यत्यषजत्। मया जितश्चासौ षोडशसहस्राणि दीनाराणाम्। तदर्धं सभिकाय सभ्येभ्यश्च दत्त्वार्धं स्वीकृत्योदतिष्ठम्। उदतिष्ठंश्च तत्र गतानां हर्षगर्भाः प्रशंसालापाः। प्रार्थयमानसभिकानुरोधाच्च तदगारेऽत्युदारमभ्यवहारविधिमकरवम्। यन्मूलश्च मे दुरोदरावतारः स मे विमर्दको नाम विश्वास्यतरं द्वितीयं हृदयमासीत्।

---

पदचन्द्रिका।

त्तीकरणे कुशलत्वम्। उच्चावचान्यनेकप्रकाराणि। 'उच्चावचं नैकभेदम्' इत्यमरः। प्रलोभनानि मोहनानि। 'मोहनं तु प्रलोभनम्' इत्यमरः। ग्लहः पणः। 'पणोऽक्षेषु ग्लहो मतः' इत्यमरः। अन्तरान्तरा। मध्ये मध्य इत्यर्थः। अश्लीलप्रायानसभ्यबहुलान्। 'अश्लीलं ग्राम्यभाषणम्' इति वैजयन्ती। कलकलान् कोलाहलान्। 'कोलाहलः कलकलः' इत्यमरः। नाध्यगच्छं न प्रापम्। प्रमाददत्तशारे प्रमादेनानवधानतया दत्तः शारः क्षेपकरणं येन तस्मिन्निति। 'शारः शारिश्च खेलनी' इति महीपः। प्रतिकितवः प्रतिकूलकितवः। द्यूतवर्त्म द्यूतमार्गम्। हासव्याजेन हासमिषेण। अशिक्षितोऽकुशलः। देविष्यामि क्रीडिष्यामीत्यर्थः। व्यत्यषजत् व्यतिषक्तोऽभूदिति। दीनाराणां निष्काणाम्। सुवर्णानामिति यावत्। 'दीनारेऽपि च निष्कोऽस्त्री' इत्यमरः। तत्र गतानां सभिकसभ्यानां वेति। प्रशंसालापाः प्रशंसावचनानि। अभ्यवहारविधिं भोजनविधिम्। अकरवं कृतवान्। दुरोदरं द्यूतम्। 'दुरोदरं द्यूतकारे पण्ये द्यूतेऽपि पाशके' इति महीपः॥

भूषणा।

च्चावचान्यनेकप्रकाराणि। 'उच्चावचं नैकभेदम्' इत्यमरः। उपप्रलोभनं मोहनम्। ग्लहप्रभेदवर्णनानि। पणस्यान्यथाभाववर्णना। 'अक्षेषु ग्लहः' इति लत्वम्। 'पणोऽक्षेषु ग्लहः' इत्यमरः। अन्तरान्तरा। मध्ये मध्य इत्यर्थः। कितवो द्यूतकारः। 'कितवोऽक्षधूर्तो द्यूतकृत्समाः' इत्यमरः। वराकः शोच्यः। 'वराकः साधुशोच्ययोः' इति वैजयन्ती। दीनाराणां निष्काणाम्। अभ्यवहारविधिं भोजनविधिम्।

लघुदीपिका।

राणि। 'उच्चावचं नैकभेदम्'। उपप्रलोभनम् 'मोहनं तु प्रलोभनम्'। ग्लहप्रभेदवर्णनानि पणस्यान्यथाभावकथनानि। 'पणोऽक्षेषु ग्लहः स्मृतः'। अश्लीलप्रायानसभ्यप्रायान्। 'अश्लीलं ग्राम्यभाषणम्' इति वैजयन्ती। 'धृताङ्ककर्बुरौ शारौ'। कितवोऽक्षधूर्तः। 'कितवो द्यूतकारकः'। 'वराकः साधुशोच्ययोः'। तावत्सं-

तन्मुखेन च सारतः कर्मतः शीलतश्च सकलमेव नगरमवधार्य धूर्जटिकण्ठकल्माषकालतमे तमसि नीलनिवसनार्धोरुकपरिहितो बद्धतीक्ष्णकौक्षेयकः फणिमुखकाकलीसंदंशकपुरुषशीर्षकयोगचूर्णयोगवर्तिकामानसूत्रकर्कटकरज्जुदीपभाजनभ्रमरकरण्डकप्रभृत्यनेकोप-

---

पदचन्द्रिका ।

**धूर्जटीति** ॥ धूर्जटिर्महादेवः । 'धूर्जटिर्नीललोहितः' इत्यमरः । तत्कण्ठे यत्कल्माषं कालिमा । 'सितेतरः स्यात्कल्माषम्' इति शाश्वतः । तद्वत्कालतमेऽतिश्यामले । नीलनिवसनं नीलवस्त्रं तस्य यदर्धोरुकमवगुण्ठनवस्त्रम् । 'अर्धोरुकं वरस्त्रीणाम्' इत्यमरः । परिहित आच्छादितः । कौक्षेयकः करवालः । 'कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्' इत्यमरः । येनेति तथा । फणिमुखं सुरुङ्गासाधनम् । काकली कर्तरी । संदंशकः भाषया 'सांडशी' इति । पुरुषशीर्षकं पुरुषशीर्षप्रतिकृतिकाष्ठमयं शिरः । योगवर्तिकोपायाञ्जनम् । मानसूत्रं प्रमाणरज्जुः । कर्कटको यन्त्रसाधनम् । भाषया 'कर्काटक' इत्युच्यते । कर्कटकस्त्वहौ । 'बिल्ये कुचन्दने वृक्षे यन्त्राङ्गे रक्तचन्दने' इति महीपः । रज्जुरारोहणसाधनम् । दीपभाजनं भ्रमरकरण्डकं दीप-

भूषणा ।

दुरोदरावतारो द्यूतकारावतारः । 'दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम्' इत्यमरः । सारतो बलात् । 'सारो बले स्थिरांशे च' इत्यमरः । कल्माषः । 'चित्रं किर्मीरकल्माष–' इत्यमरः । नीलवसनार्धोरुकपरिहितश्छादितः । 'अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमंशुकम्' इत्यमरः । कौक्षेयकोऽसिः । 'कौक्षेयको मण्डलाग्रः' इत्यमरः । 'कुलकुक्षिग्रीवाभ्यः–' (४।२।९६) इति ढकञ् । फणिमुखं खननसाधनम् । 'सबरी' इति भाषायाम् । काकली । 'निद्राति जागर्ति वेति बोधनार्थं कलमधुरध्वनिवाद्यविशेषः' इति गुरुचरणाः । 'काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे' इत्यमरः । वाद्ये भक्तिः । संदंशकः 'सांडशी' इति भाषायाम् । पुरुषशीर्षकं पुरुषशीर्षप्रतिकृतिकाष्ठमयं शिरः । 'इवे प्रतिकृतौ' (५।३।९६) इति कन् । चूर्णं निध्यञ्जनौषधिमूलादिचूर्णम् । योगवर्तिका यस्याः प्रज्वालनात्सर्वत्र सर्पा एव लोचनगोचरा भवन्ति । यत्प्रभया मोहमुपयान्ति जनाः सा । मानसूत्रं विस्तारायाममानार्थं सूत्रम् । रज्जुरालम्ब्यावरोहणार्थम् । भ्रमरकरण्डकं दीपनिर्वापकशलभभाजनम् । पटभास-

लघुदीपिका ।

पूर्णम् । देविष्यामि क्रीडिष्यामि । 'दिवु क्रीडादौ' । व्यत्यजषत् व्यतिषक्तोऽभवत् । 'अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमंशुकम्' । परिहित आच्छादितः । कौक्षेयकोऽसिः । 'कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्' । फणिमुखं सुरुङ्गासाधनम् । काकली कर्तरी । संदंशकः सांडसी । पुरुषशीर्षकं पुरुषशीर्षप्रतिकृतिकाष्ठमयं शिरः । योगवर्तिकोपायाञ्जनम् । 'वर्तिकाञ्जनतूलिके' । मानसूत्रं प्रमाण-

करणयुक्तो गत्वा कस्यचिल्लुब्धेश्वरस्य गृहे संधिं छित्त्वा पटभा-[1]ससूक्ष्मच्छिद्रालक्षितान्तर्गृहप्रवृत्तिरव्यथो निजगृहमिवानुप्रविश्य नीवीं सारमहतीमादाय निरगाम् । नीलनीरदनिकरपीवरतमो-[2]निबिडितायां राजवीथ्यां झटिति शतह्रदासंपातमिव क्षणमालो-कमलक्षयम् । अथासौ नगरदेवतेव नगरमोषरोषिता निःसंबा-धवेलायां निःसृता संनिकृष्टा काचिदुन्मिषद्भूषणा युवतिराविरासीत् । 'कासि वासु, क यासि ?' इति सदयमुक्ता त्रासगद्गद-मगादीत्—'आर्य, पुर्यस्यामर्यवर्यः कुवेरदत्तनामा वसति । अस्म्यहं तस्य कन्या । मां जातमात्रां धनमित्रनाम्नेऽत्रत्यायैव कस्मैचिदिभ्यकुमारायान्वजानाद्भार्यां मे पिता । स पुनरस्मिन्न-त्युदारतया पित्रोरन्ते वित्तैर्निजैः क्रीत्वेवार्थिवर्गाद्दारिद्र्यं[3] दरिद्रति

पदचन्द्रिका ।

निर्वापणशलभभाण्डम् । संधिमिष्टकासंधिम् । पटभासो जालान्तरम् । 'पटभासः प्रेक्षणकम्' इति वैजयन्ती । नीवीं मूलवणिग्धनम् । 'मूलद्रव्यं परिपणो नीवी' इति हैमः । **नीलेति** । नीला ये नीरदा मेघास्तेषां निकरः समूहस्तेन पीवरं पुष्टं यत्तमोऽन्धकारस्तन्निबिडितायाम् । शतह्रदा विद्युत् । 'शम्पा शतह्रदा' इत्यमरः । संपातः स्फुरणम् । 'संपातस्तु समुद्गमः' इत्यमरः । आलोकं प्रकाशम् । अलक्षयम् । लक्षितवानित्यर्थः । **अथेति** । असौ विद्युत्प्रकाशः । नगरस्य मोषश्चौर्यं तेन रोषिता रुष्टा नगरदेवतेव । निःसंबाधं निःसंकटम् । 'संकटं ना तु संबाधः' इत्य-मरः । उन्मिषद्भूषणा प्रस्फुरद्भूषणा । त्रासगद्गदं भयविह्वलम् । अगादीत् । 'गद व्यक्तायां वाचि' । अर्यवर्यो वैश्यवर्यः । 'अर्यः स्वामिवैश्ययोः' इति निघण्टुः । अत्र-त्यायैतद्देशभवाय । अव्ययात्त्यप् । धनमित्रनाम्ने । इभ्यकुमाराय धनिककुमाराय । अन्वजानात् प्रतिज्ञातवान् । **स इति** । स पिता । अस्मिन् धनमित्रे । पित्रोरन्ते

भूषणा ।

प्रेक्षणसाधनम् । 'पटभासः प्रेक्षणकम्' इति वैजयन्ती । नीवी मूलधनम् । शतह्रदा विद्युत् । 'शम्पा शतह्रदा' इत्यमरः । संपातः स्फुरणम् । 'संपातस्तु समुद्गमः' इति वैजयन्ती । आलोकः प्रकाशः । 'स्मृतं प्रकाश आलोको द्योतकश्च समा-श्रये' इति हलायुधः । निःसंबाधं निःसंमर्दम् । 'संकटं ना तु संबाधः' इत्यमरः ।

लघुदीपिका ।

रज्जुः । भ्रमरकरण्डकं दीपनिर्वापणशलभभाण्डम् । 'पटभासः प्रेक्षणकम्' इति वैजयन्ती । नीवी मूलवणिग्धनम् । संपातः स्फुरणम् । 'संपातस्तु समुद्गमः' ।

पाठा०—१ 'पटहाक्ष'. २ 'तिमिरनिबिडपीडितायाम्'. ३ 'क्रीत्वैव'.

सत्यथोदारक इति च प्रीतलोकाधिरोपितापरश्लाघ्यनामनि[१] वरयत्येव तस्मिन्मां तरुणीभूतामधन इत्यदत्त्वार्थपतिनाम्ने कस्मैचिदितरस्मै यथार्थनाम्ने सार्थवाहाय दित्सति मे पिता । तदमङ्गलमद्य किल प्रभाते भावीति ज्ञात्वा प्रागेव प्रियतमदत्तसंकेता वञ्चितस्वजना निर्गत्य बाल्याभ्यस्तेन वर्त्मना मन्मथाभिसरा तदगारमभिसरामि । तन्मां मुञ्च । गृहाणैतद्भाण्डम्' इत्युन्मुच्य मह्यमर्पितवती । दयमानश्चाहमब्रवम्—'एहि साध्वि, त्वां नयेयं त्व-

---

पदचन्द्रिका ।

मातापित्रोरवसाने । निजैः स्वकीयैर्वित्तैरर्थिवर्गाद्याचकसमूहाद्दारिद्र्यं क्रीत्वेव दरिद्रति सति । प्रीतेन लोकेनाधिरोपितं दत्तमुदारक इत्यपरं श्लाघ्यं नाम यस्य तस्मिन् । अधन इति निःस्व इति हेतोः । सार्थवाहाय । 'वैदेशिकः सार्थवाहः' इति । दित्सति दातुमिच्छति । तदमङ्गलमर्थपतिदानरूपम् । प्रभाते प्रातःकाले । प्रियतमो धनमित्रनामा तेन दत्तः संकेतो यस्यै सेति । मन्मथो मदनोऽभिसरः सहायो यस्याः सा । 'सहायोऽनुचरः समाः' इत्यमरः । तदगारं तद्गृहम् । अभिसरामि गच्छामि । एतद्भाण्डमेतद्भूषणम् । 'भाण्डं भूषाश्वभूषयोः' इत्यमरः । उन्मुच्योत्तार्य । दयमानो दयतेऽसौ तथा । कृपावानित्यर्थः । साध्वि पतिव्रते इति

भूषणा ।

त्रासगद्गदं स्वरभङ्गः सात्त्विकभावः । अर्यवर्यो वैश्यश्रेष्ठः । 'अर्यः स्वामिवैश्ययोः' इति निपातः । अत्रत्याय एतद्देशोद्भवाय । 'वैदेशिकः सार्थवाहो नैगमो वाणिजो वणिक्' इत्यमरः । दित्सति दातुमिच्छति सति । प्रियतमदत्तसंकेता तदगारमभिसरामि । 'कान्तार्थिनी तु याति संकेतं साभिसारिका' इत्यमरः । नेयमभिसारिकेति वयम् । तादृशरतिसुखेच्छयाभिसरणाभावात् । 'रतार्थिनी तु संकेतं याति या साभिसारिका' इति रसरत्नहारः । अभिसरः सहायः । 'अनुप्लवः सहायश्चानुचरोऽभिसरः समाः' इत्यमरः । भाण्डं भूषणम् । 'भाण्डं भूषणमात्रेऽपि' इति विश्व-

लघुदीपिका ।

आलोकं प्रकाशम् । 'स्मृतः प्रकाश आलोको द्योतकश्च समास्त्रयः' इति हलायुधः । निःसंबाधं निःसंमर्दम् । 'सकटं ना तु संबाधः' । अर्यवर्यो वैश्यश्रेष्ठः । 'अर्यः स्वामिवैश्ययोः' इति निपातितः । अत्रत्यायैतद्देशसंभवाय । अव्ययात्त्यप् । वैदेशिकः सार्थवाहः । दित्सति दातुमिच्छति । अभिसरः सहायः । 'अनुप्लवश्चानुसरः सहायोऽभिसरः समाः' भाण्डं भूषणम् । 'भाण्डं भूषाश्वभूषयोः' । 'दीपिका हस्तदीप

---

पाठा०—१ 'नाम । निवारयत्येव'.

त्रियावसथम्' इति त्रिचतुराणि पदान्युदचलम् । आपतच्च दीपिकालोकपरिलुप्यमानतिमिरभारं यष्टिकृपाणपाणि नागरिकबलमनल्पम् । दृष्ट्वैव प्रवेपमानां कन्यकामवदम्—'भद्रे, मा भैषीः । अस्त्ययमसिद्वितीयो मे बाहुः । अपि तु मृदुरयमुपायस्त्वदपेक्षया चिन्तितः । शयेऽहं भावितविषवेगविक्रियः । त्वयाप्यमी वाच्याः 'निशि वयमिमां पुरीं प्रविष्टाः । दष्टश्च ममैष नायको दर्वीकरेणामुष्मिन्सभागृहकोणे । यदि वः कश्चिन्मन्त्रवित्कृपालुः स एनमुज्जीवयन्मम प्राणानाहरेदनाथायाः' इति । सापि बाला गत्यन्तराभावाद्भयगद्गदस्वरा बाष्पदुर्दिनाक्षी बद्धवेपथुः कथंकथमपि गत्वा मदुक्तमन्वतिष्ठत् । अशयिषि चाहं भावितविषविक्रियः । तेषु कश्चिन्नरेन्द्राभिमानी मां निर्वर्ण्य मुद्रातन्त्रमन्त्रध्यानादिभि-

पदचन्द्रिका ।

संबोधनम् । आवसथं गृहम् । उदचलं गतवान् । **आपतंश्चेति** । दीपिका 'दिवटी' इति लोकप्रसिद्धा । 'दीपिका हस्तदीपः स्यात्' इति वैजयन्ती । अनल्पं बहु । त्वदपेक्षया । त्वदनुरोधेनेत्यर्थः । शये निद्रां करोमि । अमी आगन्तुकाः । निशि रात्रौ । वयमिति द्वयोरपि बहुवचनम्, 'अस्मदो द्वयोश्च' (१।२।५९) इति । दर्वीकरेण सर्पेण । 'दर्वीकरो दीर्घपृष्ठो दन्दशूको बिलेशयः' इत्यमरः । सभागृहं बहुतरजनावस्थानगृहं तस्य कोणे । मन्त्रविन्मान्त्रिकः । **सापीति** । गत्यन्तराभावादुपायान्तराभावात् । बाष्पदुर्दिनाक्षी बाष्पव्याप्तनेत्रा । बद्धवेपथुः प्राप्तकम्पा । अशयिषि शयितवान् । भाविता प्रकाशिता विषविक्रिया विषविकारो येनेति । नरेन्द्रो विषवैद्यः । 'नरेन्द्रो वार्तिके राज्ञि विषवैद्येऽपि कथ्यते' इति । निर्वर्ण्य । निरीक्ष्ये-

भूषणा ।

प्रकाशः । दीपिका हस्तदीपः । 'मशाल' इति भाषायाम् । दीपशब्दात्संज्ञायां कन् । 'दीपिका हस्तदीपः स्यात्' इति वैजयन्ती । नागरिकबलं नगररक्षाकर्तुः भाषया 'कोतवाल' इत्याख्यस्य बलं सैन्यम् । प्रवेपमानां वेपथुमतीम् । तदपेक्षया सात्त्विकभावः । भयानको रसः । बाष्पेण दुर्दिने अन्धीभूते अक्षिणी यस्याः । वयं द्वौ । 'अस्मदो द्वयोश्च' (१।२।५९) इति बहुवचनम् । दर्वीकरः सर्पः । 'दर्वीकरो दीर्घपृष्ठो दन्दशूको बिलेशयः' इत्यमरः । नरेन्द्राभिमानी विषवैद्याभिमानी । 'नरेन्द्रो वार्तिके राज्ञि विषवैद्येऽपि कथ्यते' इति विश्वप्रकाशः । निर्वर्ण्य निरीक्ष्य । 'निर्वर्णनं तु निध्यानं

लघुदीपिका ।

स्यात्' इति वैजयन्ती । अपि तु तथापीत्यर्थः । वयमिति द्वयोरपि बहुवचनम् 'अस्मदो द्वयोश्च' (१।२।५९) इति । दर्वीकरः सर्पः । दर्वीकरो दीर्घपृष्ठो दन्दशूको बिलेशयः' निर्वर्ण्य निरीक्ष्य । 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्' । उपक्रम्य चिकित्स-

श्चोपक्रम्याकृतार्थः 'गत एवायं कालदष्टः । तथा हि स्तब्धश्यावमङ्गम्, रुद्धा दृष्टिः, शान्त एवोष्मा । शुचालं वासु, श्वोऽग्निसात्करिष्यामः । कोऽतिवर्तते दैवम्' इति सहेतरैः प्रायात् ।

उत्थितश्चाहमुदारकाय तां नीत्वाब्रवम्—'अहमस्मि कोऽपि तस्करः । त्वद्गतेनैव चेतसा सहायभूतेन त्वामिमामभिसरन्तीमन्तरोपलभ्य कृपया त्वत्समीपमनैषम् । भूषणमिदमस्याः' इत्यंशुपटलपाटितध्वान्तजालं तदप्यर्पितवान् । उदारकस्तु तदादाय सलज्जं च सहर्षं च ससंभ्रमं च मामभाषत—'आर्य, त्वयैवेयमस्यां निशि प्रिया मे दत्ता । वाक्पुनर्ममापहृता । तथा हि न जाने वक्तुम्, त्वत्कर्मैतदद्भुतमिति । न[2] ते स्वशीलमद्भुतवत्प्रति-

पदचन्द्रिका ।

त्यर्थः । उपक्रम्य चिकित्सित्वा । 'उपक्रमश्चिकित्सा स्यात्' इति वैजयन्ती । **तथा हीति** । स्तब्धं निश्चेष्टम् । श्यावं श्यामलम् । 'श्यावः स्यात्कपिशो धूम्र–' इत्यमरः । अग्निसादग्न्यधीनम् । कोऽतिवर्तते दैवम् । न कोऽपीत्यर्थः । इतरैरन्यैः प्रायादगच्छत् ॥

**उदारकायेति** । धनमित्रनाम्ने । तस्करश्चोरः । 'तस्करश्चोरकर्णयोः' इति । अन्तरा मार्गमध्ये । अंशुपटलेन किरणजालेन पाटितं नाशितं ध्वान्तजालमन्धकारसमूहो येनेति तथा । तद्भूषणम् । **तथा हीति** । अद्भुतमाश्चर्यकारि । प्रतिनियता

भूषणा ।

दर्शनालोकनेक्षणम्' इत्यमरः । उपक्रम्य चिकित्सयित्वा । 'उपक्रमश्चिकित्सा स्यात्' इति वैजयन्ती । श्याववर्णः कपिशवर्णः । 'श्यावास्यता विषकृतता' इति माधवाचार्यः । 'श्यावःस्यात्कपिशो धूम्रधूमलौ कृष्णलोहिते' इत्यमरः । अग्निसात्करिष्यामः । 'तदधीनवचने' (५।४।५४) इति सातिः । **उदारकायेति** । 'गत्यर्थकर्मणि–' (२।३।१२) इति चतुर्थ्यन्तं ब्रुवः कर्म । अन्तरा मध्ये । इतिशब्दः प्रकारे । 'इति हेतुप्रकरणप्रकारादि–' इति कोशः । सलज्जं स्वरहस्यज्ञानात् । सहर्षं प्रियाप्राप्तेः । ससंभ्रममद्भुतकर्मदर्शनात् । व्यभिचारिशबलता (?) । प्रियादत्ता वागपहृता । अत्र परिवृत्तिरलंकारः, 'परिवृत्तिर्विनिमयो न्यूनाभ्यधिकयोर्मिथः' इति लक्षणात् । तथा हीत्यादिना काव्यलिङ्गमपि । **न जान इति** । यदिदमद्भुतं त्वत्कर्म वक्तुं न जाने न ज्ञातुं शक्नोमि । स्वप्रतिभाया अभावात् । एवं च वाणी हृतैवेति स्पष्टम् । **न ते स्वशील-**

लघुदीपिका ।

यित्वा । 'उपक्रमश्चिकित्सा स्यात्' इति वैजयन्ती । श्यावो विवर्णः । 'श्यावः स्यात्कपिशो धूम्रधूमलौ कृष्णलोहिते' । इतिशब्दः प्रकारे । 'इति हेतुप्रकरणप्रकारादि-

पाठा०—१ 'श्याववर्णाङ्गम्'. २ 'ननु'

भाति । नैवमन्येनापि कृतपूर्वमिति प्रतिनियतैव वस्तुशक्तिः । न हि त्वय्यन्यदीया लोभादयः । त्वयाद्य साधुतोन्मीलितेति तत्प्रायस्त्वत्पूर्वावदानेभ्यो न रोचते । दृष्टमिदानीमौदार्यस्य स्वरूपमिति त्वदाशयमननुमान्य न युक्तो निश्चयः । त्वयामुना सुकृतेन क्रीतोऽयं दासजन इत्यसारमतिगरीयसा क्रीणासीति स ते प्रज्ञाधिक्षेपः । प्रियादानस्य प्रतिदानमिदं शरीरमिति तदलाभे निधनोन्मुखमिदमपि त्वयैव दत्तम् । अथवैतावदत्र प्राप्तरूपम् । अद्यप्रभृति भर्तव्योऽयं दासजनः' इति मम पादयोरपतत् । उत्थाप्य चैनमुरसोपश्लिष्याभाषिषि—'भद्र, काद्य ते प्रतिपत्तिः ?' इति । सोऽभ्यधत्त—'न शक्नोमि चैनामत्र पित्रोरनभ्यनुज्ञयोपयम्य जीवितुम् । अतोऽस्यामेव यामिन्यां देशमिमं जिहासामि । को वाहम्,

पदचन्द्रिका ।

विषयविशेषनिष्ठा । अवदानं महत्कर्म । त्वदाशयं त्वदभिप्रायम् । 'छन्दोऽभिप्राय आशयः' इत्यमरः । अननुमान्यानुमतिमकारयित्वा । अयं दासजनः । मद्रूप इत्यर्थः । असारं निःसारम् । अतिगरीयसा बहुतरेण । क्रीणासि गृह्णासि । त इति तव । प्रज्ञाधिक्षेपो बुद्धिनिन्दा । तदलाभे प्रियाया अप्राप्तौ । निधनोन्मुखम्, निधनं मरणम् । इदं मच्छरीरम् । **अथवेति** । प्राप्तरूपं प्रशस्तं प्राप्तम् । प्रशंसायां रूपप् । उपश्लिष्यालिङ्ग्य । प्रतिपत्तिः कर्तव्यम् । 'प्रतिपत्तिः कर्तव्ये प्रतिभाविज्ञातगौरवेष्वपि च' इत्यमरः । **न शक्नोमीति** । अनभ्यनुज्ञयाननुमत्या । उपयम्य विवाहं कृत्वा । यामिन्यां रात्रौ । 'रजनी यामिनी तमी' इत्यमरः । जिहासामि त्यक्तुमिच्छामि ।

भूषणा ।

**मिति** । इदं द्रव्यस्य प्रियायाश्च समर्पणं तं चोरत्वेन व्यवहृतस्य स्वशीलं स्वभावो न भवतीत्यतोऽद्भुतवत्प्रतिभाति । **प्रतिनियतेति** । तत्तद्व्यक्तिविश्रान्तेत्यर्थः । **तत्प्राय इति** । इदं द्रव्यस्य प्रियायाश्च समर्पणं पूर्वावदानेभ्यः पूर्वजातकर्मभ्यो न रोचते । 'रुच्यर्थानां–'(१।४।३३) इति चतुर्थी । कर्मणां न शोभत इत्यत्र तात्पर्यम् । एतदुपलभ्य परदारपरस्वनिवृत्तिरूपम् । अवदानेभ्यः । 'अवदानं कर्म वृत्तम्' इत्यमरः । आशयमभिप्रायम् । 'छन्दोऽभिप्राय आशयः' इति । अननुमान्यानुमतिमकारयित्वा । निधनं मरणम् । प्रतिपत्तिः कर्तव्यता । 'प्रतिपत्तिः कर्तव्ये प्रतिभाविज्ञातगौरवेष्वपि च'

लघुदीपिका ।

समाप्तिषु' । अपूर्वावदानेभ्योऽपूर्वविक्रमेभ्यः । आशयमभिप्रायम् । 'छन्दोभिप्राय आशयः' । अननुमान्यानुमतिमकारयित्वा । निधनं मरणम् । 'निधनं कुलनाशयोः' । 'प्रतिपत्तिः कर्तव्ये प्रतिभाविज्ञातगौरवेष्वपि च' । प्रत्यवायो बाधकम् ।

यथा त्वमाज्ञापयसि' इति। अथ मयोक्तम्—'अस्त्येतत्। स्वदेशो देशान्तरमिति नेयं गणना विदग्धस्य पुरुषस्य। किंतु बालेयमनल्पसौकुमार्या, कष्टाः प्रत्यवायभूयिष्ठाश्च कान्तारपथाः। शैथिल्यमिव किंचित्प्रज्ञासत्त्वयोरनर्थेनेदृशेन देशत्यागेन संभाव्यते। तत्सहानया सुखमिहैव वस्तव्यम्। एहि। नयावैनां स्वमेवावासम्' इति। अविचारानुमतेन तेन सद्य एवैनां तद्गृहमुपनीय तयैवापसर्पभूतया तत्र मृद्भाण्डावशेषमचोरयाव। ततो निष्पत्य क्वचिन्मुषितकं निधाय समुच्चलन्तौ नागरिकसंपाते मार्गपार्श्वशायिनं कंचिन्मत्तवारणमुपरिपुरुषमाकृष्याध्यारोहाव। ग्रैवेयप्रोत-

पदचन्द्रिका।

**अथेति।** विदग्धस्य चतुरस्य। अनल्पसौकुमार्या। अत्यन्तसुकुमारेत्यर्थः। प्रत्यवायो बाधकम्। 'बाधकं प्रत्यवायः स्यात्' इत्यजयः। कान्तारपथा वनमार्गाः। 'ऋक्पूः-' (५।४।७४) इत्यदन्तता। 'कान्तारं च वने विघ्ने दुर्गमार्गेषुभेदयोः' इति महीधरः। शैथिल्यं शिथिलता। प्रज्ञा बुद्धिः। सत्त्वं बलम्। आवासं गृहम्। अपसर्पभूतया चरभूतया। 'अपसर्पश्चरः स्पशः' इत्यमरः। तत्र नगरे। अचोरयाव। 'चुर स्तेये' उत्तमपुरुषद्विवचनम्। **तत इति।** ततो नगरात्। क्वचित्प्रदेशे। मुषितकं चोरितं वस्तुजातम्। नागरिकसंपाते नगरस्थलोकसंमर्दे। उपरिपुरुषमाधोरणम् आकृष्याधो निःपात्य। ग्रैवेयं कण्ठरज्जुः। 'ग्रीवाविभूषणे रज्जौ ग्रैवं ग्रैवेयमित्यपि'

भूषणा।

इति। बालेयमित्यादि विषमालंकारः। 'विषमं वर्ण्यते यत्र घटनाननुरूपयोः' इति लक्षणात्। प्रत्यवायो बाधकम्। 'बाधकं प्रत्यवायः स्यात्' इत्यजयः। इवैवार्थे। प्रज्ञासत्त्वयोर्बुद्धिपराक्रमयोः। 'धीः प्रज्ञा शेमुषी मतिः' इत्यमरः। 'सत्त्वोऽस्त्री जन्तुषु क्लीबे व्यवसाये पराक्रमे' इति विश्वः। अपसर्पभूतया चारभूतया। 'अपसर्पश्चरः स्पशः। चारश्च गूढपुरुषः' इत्यमरः। निष्पत्य निर्गत्य। 'पत्ऌ गतौ'। मुषितकं चोरितधनम्। नागरिकपुरुषसंपाते नगररक्षकपुरुषसंपाते। उपरिपुरुषं पुरुषोन्मानादधिकम्। आकृष्य गजपृष्ठस्थां रज्जुम्। मत्तगजे सर्वकालं रज्ज्वा नियन्त्रितत्वात्। ग्रैवेयं कण्ठरज्जुः। 'ग्रीवाविभूषणे रज्जौ ग्रैवं ग्रैवेयमित्यपि' इति।

लघुदीपिका।

'बाधकं प्रत्यवायः स्यात्' इत्यजयः। इवैवेत्यर्थे। 'इवावधारणे साम्ये' इति वैजयन्ती। प्रज्ञासत्त्वयोर्बुद्धिधैर्ययोः। 'अपसर्पश्चरः स्पशः'। निष्पत्य। 'पत्ऌ गतौ'। मुषितं चोरितं धनम्। ग्रैवेयं कण्ठरज्जुः। 'ग्रीवाविभूषणे रज्जौ ग्रैवं ग्रैवेय-

पाठा०—१ 'अविचार्य'. २ 'मुषितम्'. ३ 'नागरिकपुरुषसंपाते', 'नागरिकसंपातेन'. ४ 'उपरिपुच्छम्'. ५ 'ग्रैवेयकप्रतोद'.

पादयुगलेन च मयोत्थाप्यमान एव पातिताधोरणपृथुलोरःस्थलपरिणतः पुरीतल्लतापरीतदन्तकाण्डः स रक्षिकबलमक्षिणोत् । अध्वंसयाव चामुनैवार्थपतिभवनम् । अपवाह्य च क्वचन जीर्णोद्याने शाखाग्राहिकया चावातराव । स्वगृहगतौ च स्नातौ शयनमध्यशिश्रियाव ।

तावद्देवोदगादुदधेरुदयाचलेन्द्रपद्मरागशृङ्गकल्पं कल्पद्रुमहेमपल्लवापीडपाटलं पतङ्गमण्डलम् । उत्थाय च धौतवक्त्रौ प्रगेतनानि मङ्गलान्यनुष्ठायास्मत्कर्मतुमुलं पुरमनुविचरन्तावशृणुव वरवधूगृहेषु कोलाहलम् । अथार्थैरर्थपतिः कुबेरदत्तमाश्वास्य कुल-

---

पदचन्द्रिका ।

इति वैजयन्ती । भाषया 'किलावा' इति प्रसिद्धम् । प्रोतं प्रवेशितम् । पातितो य आधोरणो हस्तिपकस्तस्य पृथुलं विशालं यदुरःस्थलं तत्र परिणतो दन्तेन तिर्यक्प्रहारी । 'तिर्यग्दन्तप्रहारस्तु गजः परिणतो मतः' इति हलायुधः । पुरीतत् लतान्त्रवल्ली । 'अन्त्रं पुरीतत्' इत्यमरः । परीतं दन्तकाण्डं यस्येति । तथा अक्षिणोत् क्षपितवान् । अमुनैव गजेनैव । अपवाह्य नीत्वा । शाखाग्राहिकया । शाखां गृहीत्वेत्यर्थः । अवातराव उत्तीर्णाविति । अध्यशिश्रियाव अधिष्ठितवन्तौ ॥

**तावदिति** । पद्मरागो रक्तमणिस्तस्य शृङ्गं शिखरं तत्कल्पं तत ईषन्न्यूनम् । कल्पद्रुमस्य हेमपल्लवाः सुवर्णपल्लवास्तेषामापीडः समूहः । 'आपीडः शेखरे व्राते' इति वैजयन्ती । पाटलमनेकवर्णम् । 'श्वेतरक्तस्तु पाटलः' इत्यमरः । पतङ्गमण्डलं सूर्यबिम्बम् । 'पतङ्गौ पक्षिसूर्यौ च' इत्यमरः । प्रगेतनानि प्रातःकालोचितानि 'तुमुलो व्याकुलरवः' इति हैमः । **अथेति** । अर्थपतिर्वरः । अर्थैर्द्रव्यैः । कुबेरदत्तं कन्या-

भूषणा ।

वैजयन्ती । 'कुलकुक्षि-' (४।२।९६) इति ढकञ् । परिणतो दन्तेन तिर्यक्प्रहारी । 'तिर्यग्दन्तप्रहारस्तु गजः परिणतो मतः' इति हलायुधः । **पतिताधोरणेति** । पतितः समीपभूमौ सुप्तः । तदीयोरःस्थले परिणतः । उरःस्थलकर्मकतिर्यग्दन्तप्रहारवानित्यर्थः । पुरीतदन्त्रम् । 'अन्त्रं पुरीतत्' इत्यमरः । भवनं वस्त्रकटादिनिर्मितं न तु पाषाणनिर्मितम् । तस्य तदानीमेवान्यदेशादागन्तुकतया तस्यासंभवादन्याध्यत्वाच्च । शाखाग्राहिकया शाखाग्रहणेन । धात्वर्थनिर्देशे ण्वुल् । आपीडः समूहः । 'आपीडः शेखरे व्राते' इत्यमरः । प्रगेतनानि प्रातः-

लघुदीपिका ।

मित्यपि' इति वैजयन्ती । परिणतो दन्तेन तिर्यक्प्रहारी । 'तिर्यग्दन्तप्रहारस्तु गजः परिणतो मतः' इति हलायुधः । 'अन्त्रं पुरीतत्' । ग्राहिकाया । ग्रहणेन । आपीडः समूहः । 'आपीडः शेखरे व्राते' इति वैजयन्ती । प्रगेतनानि प्रातःकरणीयानि

---

पाठा०-१ 'पतिताधोरण'.

पालिकाविवाहं मासावधिकमकल्पयत् । उपह्वरे पुनरित्यशिक्षयं धनमित्रम्—'उपतिष्ठ सखे, एकान्त एव चर्मरत्नभस्त्रिकामिमां[1] पुरस्कृत्याङ्गराजम् । आचक्ष्व च जानात्येव देवो नैककोटिसारस्य वसुमित्रस्य मां धनमित्रं नामैकपुत्रम् । सोऽहं मूलहरत्वमेत्यार्थिवर्गादस्म्यवज्ञातः । मदर्थमेव संवर्धितायां कुलपालिकायां मद्दारिद्र्यदोषात्पुनः कुबेरदत्तेन दुहितर्यर्थपतये दित्सितायामुद्वेगादुज्झितुमसूनुपनगरभवं[2] जरद्वनमवगाह्य कण्ठन्यस्तशस्त्रिकः केनापि जटाधरेण निवार्यैवमुक्तः—'किं ते साहसस्य मूलम् ?' इति । मयोक्तम्—'अवज्ञासोदर्यं दारिद्र्यम्' इति । स पुनरेवं कृपालुरन्वग्रहीत्—'तात, मूढोऽसि । नान्यत्पापिष्ठतममात्मत्यागात् । आत्मानमात्मनानवसाद्यैवोद्धरन्ति सन्तः । सन्त्युपाया धनार्जनस्य

## पदचन्द्रिका ।

पितरम् । मासावधिकम् । मासोत्तरमित्यर्थः । उपह्वरे । 'रहोऽन्तिकमुपह्वरे' इत्यमरः । सखे धनमित्र । चर्मरत्नमुत्तमचर्म । 'रत्नं स्वजातिश्रेष्ठेऽपि' इति कोशः । भस्त्रिका 'भाता' इति भाषया प्रसिद्धा । 'प्रसेविकोच्यते भस्त्रा' इति । अङ्गराजम् । नैककोटिसारस्य । अनेककोटिद्रव्यस्येत्यर्थः । वसुमित्रस्यैकपुत्रम् । आर्थिवर्गाद्याचकसमूहात् । कुलपालिकायां कन्यायाम् । 'कन्या तु कुलपालिका' इत्यमरः । दित्सितायां दातुमारब्धायाम् । उद्वेगाच्छोकात् । 'उद्वेगौ शोकसंभ्रमौ' इति वैजयन्ती । असून्प्राणान् । उज्झितुं त्यक्तुम् । उपनगरभवं नगरसमीपस्थम् । जरद्वनं प्रचाररहितं वनम् । केनाप्यविदितनाम्ना । साहसस्योद्योगस्य । अवज्ञा हेलना, तस्याः सोदर्यः । बन्धुरित्यर्थः । 'समानोदर्य–' इत्यमरः । **स इति** । स जटाधरः । तात । अर्भक इत्यर्थः । 'तातस्तु जनकेऽर्भके' इति कोशः । अनवसाद्याविनाश्य । एकोऽप्यु-

## भूषणा ।

करणीयानि । '–प्राह्णेप्रगेऽव्ययेभ्यः' (४।३।२३) इति ट्युः । उपह्वरे रहः । चर्मभस्त्रिका । 'भस्त्रा चर्मप्रसेविका' । मूलहरत्वं मूलद्रव्यनाशकत्वम् , काष्ठवाहिकत्वं वा । उद्वेगात् । 'उद्वेगौ शोकसंभ्रमौ' इति वैजयन्ती । तात पुत्र । 'तातस्तु जनके-

## लघुदीपिका ।

उपह्वरे रहसि । 'रहोऽन्तिकमुपह्वरे' । चर्मभस्त्रा । 'प्रसेविकोच्यते भस्त्रा' । उद्वेगाच्छोकात् । 'उद्वेगौ शोकसंभ्रमौ' इति वैजयन्ती । तात पुत्र । 'तातस्तु जनकेऽर्भके' इति केशवः । अनवसाद्य विनाश्य । स एष कल्पः स एष प्रकारः ।

पाठा०—१ 'चर्मभस्त्रिका'. २ 'उपपौरिकम्'.

बहवः । नैकोऽपि च्छिन्नकण्ठप्रतिसंधानपूर्वस्य प्राणलाभस्य । किमनेन । सोऽस्म्यहं मन्त्रसिद्धः । साधितेयं लक्षग्राहिणी चर्मरत्नभस्त्रिका । चिरमहमस्याः प्रसादात्कामरूपेषु कामप्रदः प्रजानामवात्सम् । मत्सरिण्यां जरसि भूमिस्वर्गमत्रोद्देशे प्रवेक्ष्यन्नागतः । तामिमां प्रतिगृहाण । मदन्यत्र चेयं वणिग्भ्यो वारमुख्याभ्यो वा दुग्धे इति हि तद्गता प्रतीतिः । किंतु यत्सकाशादन्यायापहृतं तत्तस्मै प्रत्यर्पणीयम् । न्यायार्जितं तु देवब्राह्मणेभ्यस्त्याज्यम् । अथेयं देवतेव शुचौ देशे निवेश्याचर्यमाना प्रातःप्रातः सुवर्णपूर्णैव दृश्यते । स एष कल्पः' इति बद्धाञ्जलये मह्यमेनां दत्त्वा किमपि ग्रावच्छिद्रं प्राविशत् । 'इयं च रत्नभूता चर्मभस्त्रिका देवायानिवेद्य नोपजीव्येत्यानीता । परंतु देवः प्रमाणम्' इति । राजा च नियतमेव वक्ष्यति—'भद्र, प्रीतोऽस्मि ।

पदचन्द्रिका ।

पायश्छिन्नो यः कण्ठस्तस्य यत्प्रतिसंधानं पुनःसंबन्धस्तत्पूर्वस्य प्राणलाभस्य प्राणप्राप्तेर्नेति नास्तीत्यर्थः । किमनेन प्राणत्यागेन । लक्षग्राहिणी लक्षं ग्राहयतीति तथा । कामरूपेषु देशेषु । कामप्रदो मनोरथदाता । अवात्सं वसतिमकरवम् । मत्सरिण्यां मत्सरकारिण्याम् । जरसि वार्धके । भूमिस्वर्ग भूम्यां स्वर्ग इव स्वर्गस्तम् । अत्रोद्देशेऽस्मिन्प्रदेशे । इमां चर्मरत्नभस्त्रिकाम् । मदन्यत्र । मां विहायान्यत्रेत्यर्थः । इयं चर्मरत्नभस्त्रिका । वणिग्भ्यो वैश्येभ्यः । वारमुख्याभ्यो वाराङ्गनाभ्यः । दुग्धे । 'दुह प्रपूरणे' । पूरयतीत्यर्थः । इत्येवम् । तद्गता चर्मभस्त्रिकागता । प्रतीतिः ख्यातिः । **अथेयमिति** । इयं चर्मभस्त्रिका । अर्च्यमाना पूज्यमाना । प्रातःप्रातरिति वीप्सायाम् । प्रतिप्रातःकाले । कल्पः प्रकारः । बद्धाञ्जलये कृतप्रणामाय । ग्रावच्छिद्रं पर्वतच्छिद्रम् । 'अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः' इत्यमरः । देवाय राज्ञे । अनिवेद्याकथयित्वा । नोपजीव्या उपजीवितुमशक्या । प्रमाणं निर्णयकर्ता । 'प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु' इत्यमरः । वक्ष्यति वदिष्यति । इमां

भूषणा ।

ऽर्भके' इति केशवः । अनासाद्याविनाश्य । **मदन्यत्र चेति** । यदि मया गृह्यते चेद्ब्राह्मणत्वेन सत्यपि मह्यं ददातीयं भस्त्रिका । मदन्येभ्यस्तु वणिग्भ्यो वारमुख्याभ्य एव वा नान्येभ्यः । एष कल्प एष प्रकारः । देवः प्रमाणं देवो निर्णायकः ।

लघुदीपिका ।

देवः प्रमाणं देवो निर्णायकः । 'प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु' । वरिवस्य-

पाठा०—१ 'वारयोषिन्मुख्याभ्यः'. २ 'कल्पविधिः'.

गच्छ । यथेष्टमिमामुपभुङ्क्ष्व' इति । भूयश्च ब्रूहि —'यथा न कश्चिदेनां मुष्णाति तथानुगृह्यताम्' इति । तदप्यवश्यमसावभ्युपेष्यति । ततः स्वगृहमेत्य यथोक्तमर्थत्यागं कृत्वा दिने दिने वरिवस्यमानां स्तेयलब्धैरर्थैर्नक्तमापूर्य प्राह्णे लोकाय दर्शयिष्यसि । ततः कुबेरदत्तस्तृणाय मत्वार्थपतिमर्थलुब्धः कन्यकया स्वयमेव त्वामुपस्थास्यति । अथ कुपितोऽर्थपतिर्व्यवहर्तुमर्थगर्वादभियोक्ष्यते । तं च भूयश्चित्रैरुपायैः कौपीनावशेषं करिष्यावः । स्वकं चौर्यमनेनैवाभ्युपायेन सुप्रच्छन्नं भविष्यति' इति । हृष्टश्च धनमित्रो यथोक्तमन्वतिष्ठत् । तदहरेव मन्त्रियोगाद्विमर्दकोऽर्थपतिसेवाभियुक्तस्तस्योदारके वैरमभ्यवर्धयत् । अर्थलुब्धश्च कुबेरदत्तो निवृत्त्यार्थपतेर्धनमित्रायैव तनयां सानुनयं प्रादित्सत । प्रत्यबध्नाच्चार्थपतिः ॥

पदचन्द्रिका ।

भस्त्रिकाम् । मुष्णाति चोरयति । असौ राजा । अभ्युपेष्यत्यङ्गीकरिष्यति । **तत इति** । अर्थत्यागं द्रव्यदानम् । वरिवस्यमानां सेव्यमानाम् । 'वरिवस्या तु शुश्रूषा' इत्यमरः । स्तेयलब्धैश्चौर्यप्राप्तैः । नक्तं रात्रौ । कुबेरदत्तः कन्यापिता । तृणाय मत्वा तृणप्रायं ज्ञात्वा । 'मन्यकर्मण्यनादरे विभाषाऽप्राणिषु' ( ) इति चतुर्थी । उपस्थास्यत्याराधयिष्यति । **अथेति** । अर्थगर्वाद्द्रव्योन्मादात् । अभियोक्ष्यते द्वेषं करिष्यति । 'अभियोगः स्मृतो द्वेषः' इति । तमर्थपतिम् । चित्रैरनेकैः । हृष्टो हर्षः प्राप्तः । **तदिति** । तदहरेव तस्मिन्नेव दिवसे । विमर्दक एतन्नाम्ना ख्यातः । अर्थपतेः सेवायामभियुक्तः संनद्धः । तस्यार्थपतेः । उदारके धनमित्रे । वैरं द्वेषम् । अभ्यवर्धयत् अभिवर्धितवान् । कुबेरदत्तः कन्यापिता । अर्थपतेः सकाशान्निवृत्त्य परावृत्त्य । धनमित्रायैव तनयां कन्याम् । प्रादित्सत दत्तवान् । प्रत्यबध्नात् । प्रतिबन्धं चकारेत्यर्थः ॥

भूषणा ।

(कः) । 'प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु' इति । वरिवस्यमाना शुश्रूषमाणा । 'वरिवस्या तु शुश्रूषा परिचर्याप्युपासना' इत्यमरः । तृणाय तृणवत् । 'मन्यकर्मण्यनादरे-' (२।३।१७) इति चतुर्थी । अभूदित्यध्याहारः । अभियुक्तः संनद्धः । व्यव-

लघुदीपिका ।

मानामुपास्यमानाम् । 'वरिवस्या तु शुश्रूषा परिचर्याप्युपासना' । तृणाय तृणवत् । 'मन्यकर्मण्यनादरे विभाषाऽप्राणिषु' (२।३।१७) इति चतुर्थी । अभियुक्तः संनद्धः ।

पाठा०-१ 'वरिवस्यमाना'.

एष्वेव दिवसेषु काममञ्जर्याः स्वसा यवीयसी रागमञ्जरी नाम पञ्चवीरगोष्ठे [1]संगीतकमनुष्ठास्यतीति सान्द्रादरः समागमन्नागरजनः । स चाहं सह सख्या धनमित्रेण तत्र संन्यधिषि । प्रवृत्तनृत्यायां च तस्यां द्वितीयं रङ्गपीठं ममाभून्मनः । तद्दृष्टिविभ्रमोत्पलवनस[2]त्रापाश्रयश्च पञ्चशरो भावरसानां सामग्र्यात्समुदितबल इव मामतिमात्रमव्यथयत् । अथासौ नगरदेवतेव नगरमोषरोषिता लीलाकटाक्षमालाशृङ्खलाभिर्नीलोत्पलप[3]लाशश्यामलाभिर्मामबध्नात् । नृत्योत्थिता च सा सिद्धिलाभशोभिनी—'किं विला-

पदचन्द्रिका ।

**एष्विति** । तेष्वेव दिवसेषु । पञ्चवीरगोष्ठे जानपदे सदसि । 'तत्पञ्चवीरगोष्ठं तु यत्तु जानपदं सदः' इति कोशसारः । संगीतकं गीतादि । 'गीतं वाद्यं च नृत्यं च त्रिभिः संगीतमुच्यते' इति संगीतसर्वस्वे । नागरजनो नागरिकलोकः । अहमपहारवर्मा । धनमित्रेण । तत्र सभायाम् । रङ्गपीठं नृत्यस्थानम् । सत्रमाच्छादनम् । 'सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च' इति विश्वः । तस्मादपगत आश्रयो यस्येति । उत्पलवनसत्रमात्राश्रय इति भावः । पञ्चशरः कामः । भावरसानाम्, भावा विभावादयः । रसाः शृङ्गारादयः तेषाम् । सामग्र्यं समग्रस्य भावस्तेन । समुदितबल इव मिलितबल इव । अतिमात्रं निर्भरम् । 'अतिमात्रोद्गाढनिर्भरम्' इत्यमरः । **अथेति** । असौ रागमञ्जरी । नगरमोषो नगरचौर्यं तेन रोषितेव रुष्टा । लीलाकटाक्षमाला एव शृङ्खलास्ताभिः । नीलोत्पलपलाशानि नीलोत्पलपत्राणि । 'पत्त्रं पलाशं छदनं दलं पर्णं छदः पुमान्' इत्यमरः । तद्वच्छ्यामलाः । 'कालश्यामलमेचकाः' इत्यमरः । अबध्नात् । बबन्धेत्यर्थः । सिद्धिलाभशोभिनी समृद्धिफलप्राप्तिशोभिनी ।

भूषणा ।

हर्तुं विवाहं निरोद्धुमिति भावः । **विमर्दक इति** । द्यूतप्रकरणे यः सभिकः । पञ्चवीरगोष्ठे । 'तत्पञ्चवीरगोष्ठं तु यत्तु जानपदं सदः' । संगीतम् । 'नृत्यं गीतं च वाद्यं च संगीतं त्वत्र भाषितम्' इति भागुरिः । सत्रमाच्छादनम् । 'सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च' इति वैजयन्ती । भावरसानाम् । 'बाह्यार्थालम्बनो यस्तु विकारो मानसो भवेत् । स भावः कथ्यते सद्भिस्तस्योत्कर्षो रसः स्मृतः ॥' इति

लघुदीपिका ।

पञ्चवीरगोष्ठे । 'तत्पञ्चवीरगोष्ठं तु यत्तु जानपदं सदः' । संगीतम् । 'नृत्यं गीतं च वाद्यं च संगीतं त्वत्र भाषितम्' इति भागुरिः । सत्रमाच्छादनम् । 'सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च' इति वैजयन्ती । भावरसानाम् । 'बाह्यार्थालम्बनो यस्तु विकारो मानसो भवेत् । स भावः कथ्यते सद्भिस्तस्योत्कर्षो रसः स्मृतः ॥'

पाठा०—१ 'संगीतम्'. २ 'सत्त्रापाश्रयश्च'. ३ 'पलाशदाम'.

सात्, किमभिलाषात्, किमकस्मादेव वा, न जाने,—असकृन्मां सखीभिरप्यनुपलक्षितेनापाङ्गप्रेक्षितेन सविभ्रमारेचितभ्रूलतमभिवीक्ष्य, सापदेशं च किंचिदाविष्कृतदशनचन्द्रिकं स्मित्वा, लोकलोचनमानसानुयाता प्रातिष्ठत । सोऽहं स्वगृहमेत्य दुर्निवारयोत्कण्ठया दूरीकृताहारस्पृहः शिरःशूलस्पर्शनमपदिशन्विविक्ते तल्पे मुक्तैरवयवैरशयिषि । अतिनिष्णातश्च मदनतन्त्रे मामभ्युपेत्य धनमित्रो रहस्यकथयत्—'सखे, सैव धन्या गणिकादारिका, यामेवं

---

पदचन्द्रिका ।

अनुपलक्षितेनाज्ञातेन । आरेचितभ्रूलतं वक्रीकृतभ्रूलतमिति क्रियाविशेषणम् । सापदेशं सव्याजम् । 'व्याजोऽपदेशः' इत्यमरः । आविष्कृता दशनचन्द्रिका दन्तज्योत्स्ना यत्र तदिति । लोकानां लोचनानि नेत्राणि मानसानि चित्तानि तैरनुयातानुगता । **सोऽहमिति** । दूरीकृता त्यक्ता आहारस्पृहा भक्षणेच्छा येनेति तथा । शिरःशूलस्पर्शनं शिरोवेदनाप्राप्तिम् । अपदिशन् ख्यापयन् । विविक्ते विजने । अशयिषि । 'शीङ् स्वप्ने' । लुङ्यात्मनेपद उत्तमपुरुषैकवचनम् । शयितवान् । अतिनिष्णातोऽतिनिपुणः । 'निष्णातो निपुणोऽभिज्ञः' इति वैजयन्ती । मदनतन्त्रे मदनशास्त्रे । 'तन्त्रं कुटुम्बकृत्ये स्यात्करणे च परिच्छदे । शास्त्रे प्रधाने सिद्धान्ते' इति विश्वः । दारिका कन्या । 'कुमारी दारिका कन्या' इति वैजयन्ती । एव-

भूषणा ।

हलायुधः । **नृत्योत्थितेत्यादि** । अनुपलक्षितेन परकीयात्वाद्गुप्तचेष्टा । आरेचितभ्रूलतम् । कन्यकात्वादिति भावः । 'स्वानूढा स्वानुरक्ता स्त्री परकीया निगद्यते । परोढा कन्यका भेदाद्द्विविधा' इति रसरत्नहारः । यत्तु रसमञ्जर्याम्—'अप्रकटपरपुरुषानुशया परकीया । सा च द्विविधा । परोढा कन्यका च' इति कन्यकायाः परपुरुषासंभवात् । यत्तु व्यङ्ग्यार्थकौमुद्याम्—'भाविपुरुषापेक्षया परत्वमवसेयम्' इत्यर्थवर्णनम्, तदपि न, भाविविवाहापेक्षया परोढात्वेन द्वितीयभेदस्यैवासंभवात् । सापदेशं सव्याजम् । 'व्याजोऽपदेशो लक्ष्यं च' इत्यमरः । **लोकलोचनेति** । लोकलोचनमानसैरनुयाता । लोकानां लोचनमानसान्यनुगच्छन्ती तस्याः पृष्ठत इति यावत् । विविक्त आस्तीर्णरहिते । अतिनिष्णातोऽतिनिपुणः । 'प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः' इत्यमरः । 'निनदीभ्यां स्नातेः कौशले' (८।३।८९) इति षत्वम् । तन्त्रं शास्त्रम् । दारिका । 'कुमारी दारिका कन्या' इति

लघुदीपिका ।

इति हलायुधः । सापदेशं सव्याजम् । 'व्याजोऽपदेशो लक्ष्यं च' । अतिनिष्णातोऽतिनिपुणः । 'निष्णातो निपुणोऽभिज्ञः' इति वैजयन्ती । तन्त्रं शास्त्रम् । 'तन्त्रं प्रधाने सिद्धान्ते' । दारिका । 'कुमारी दारिका कन्या' इति वैजयन्ती । भा-

भवन्मनोऽभिनिविशते । तस्याश्च मया सुलक्षिता भाववृत्तिः । तामप्यचिरादयुग्मशरः शरशयने शाययिष्यति । स्थानाभिनिवेशिनोश्च वामयत्नसाध्यः समागमः । किंतु सा किल वारकन्यका गणिकास्वधर्मप्रतीपगामिना भद्रोदारेणाशयेन समगिरत—'गुणशुल्काहम्, न धनशुल्का । न च पाणिग्रहणादृतेऽन्यभोग्यं यौवनम्' इति । तच्च मुहुः प्रतिषिध्याकृतार्थां तद्भगिनी काममञ्जरी माता च माधवसेना राजानमश्रुकण्ठ्यौ व्यजिज्ञपताम्—'देव, युष्मद्दासी रागमञ्जरी रूपानुरूपशीलशिल्पकौशला पूरयिष्यति मनोरथानित्यासीदस्माकमतिमहत्याशा, साद्य मूलच्छिन्ना । यदियमतिक्रमः स्वकुलधर्ममर्थनिरपेक्षा गुणेभ्य एव स्वं यौवनं विचिक्रीषते । कुलस्त्रीवृत्तमेवाच्युतमनुतिष्ठासति । सा चेदियं देवपादाज्ञयापि तावत्प्रकृतिमापद्येत तदा पेशलं भवेत्' इति । राज्ञा च तदनुरोधात्तथानुशिष्टा सत्यप्यनाश्रवैव सा यदासीत्, तदास्याः स्वसा माता च रुदितनिर्बन्धेन राज्ञे समगिरताम्—'यदि कश्चिद्भुजङ्गोऽस्मदिच्छया विनैनां बालां विप्रलभ्य नाशयिष्यति स

पदचन्द्रिका ।

ममुना प्रकारेण । भवन्मनस्त्वदीयं चेतः । कर्तुः । भाववृत्तिश्चित्तवृत्तिः । अयुग्मशरो विषमबाणः । शरशयने बाणशयने । शाययिष्यति स्वापयिष्यति । णिजन्तम् । स्थानाभिनिवेशिनोर्युक्ताभिनिवेशिनोः । 'युक्ते द्वे सांप्रतं स्थाने' इत्यमरः । अयत्नसाध्यः सुखसाध्यः । किंत्विति पदं विशेषसूचकम् । गणिकानां वेश्यानां यः स्वधर्मः शुल्कादिग्रहणरूपस्तेन प्रतीपगामिना विरुद्धवर्तिना । 'वामं प्रसव्यं प्रतीपं प्रतीलोममपष्ठु च' इति हैमः । भद्रोदारेण कल्याणोदारेण । आशयेनाभिप्रायेण । समगिरत । अवददित्यर्थः । गुणशुल्का गुणमूल्या । ऋत इत्यव्ययं विनेत्यर्थम् । अकृतार्थाऽसिद्धार्था । व्यजिज्ञपतां विज्ञापयामासतुः । शिल्पं शिल्पकर्म । कुशलस्य भावः कौशलम् । साशा । मूलच्छिन्ना मूलभ्रष्टा । स्वकुलधर्मं धनग्रहणादि । विचिक्रीषते विक्रेतुमिच्छति । वृत्तमाचरणम् । अच्युतं बद्धमूलम् । अनुतिष्ठासति अनुष्ठातुमिच्छति । प्रकृतिः स्वभावः । पेशलं सुकुमारम् । अनाश्रवा । 'वचने स्थित आश्रवः' इत्यमरः । तथा न भवतीत्यर्थः । **यदीति** । भुजङ्गो विटः । 'भुजङ्गः

भूषणा ।

वैजयन्ती । याम् । 'अभिनिविशश्च' (१।४।४७) इति कर्मत्वम् । समगिरतोक्तवती । पेशलं कुशलम् । अनाश्रवैवानङ्गीकृताज्ञैव । 'वचने स्थित आश्रवः' इत्यमरः । भुजङ्गो

लघुदीपिका ।

वृत्तिश्चित्तवृत्तिः । अत्यन्तमित्यव्ययम् । भृशमित्यर्थः । आश्रवोक्तकारिणी अना-

तस्करवद्वध्यः' इति। तदेवं स्थिते धनाहते न तत्स्वजनोऽनुमन्यते। न तु धनदायासावभ्युपगच्छतीति विचिन्त्योऽत्राभ्युपायः' इति। अथ मयोक्तम्—'किमत्र चिन्त्यम्। गुणैस्तामावर्ज्य गूढं धनैस्तत्स्वजनं तोषयावः' इति।

ततश्च कांचित्काममञ्जर्याः प्रधानदूतीं धर्मरक्षितां नाम शाक्यभिक्षुकीं चीवरपिण्डदानादिनोपसंगृह्य तन्मुखेन तया बन्धक्या पणबन्धमकरवम्—'अजिनरत्नमुदारकान्मुषित्वा मया तुभ्यं देयम्, यदि प्रतिदानं रागमञ्जरी' इति। सोऽहं संप्रतिपन्नायां च तस्यां तथा तमर्थं संपाद्य मद्गुणोन्मादिताया रागमञ्जर्याः करकिसलयमग्रहीषम्। यस्यां च निशि चर्मरत्नस्तेयवादस्तस्याः प्रारम्भे कार्यान्तरापदेशेनाहूतेषु शृण्वत्स्वेव नागरमुख्येषु मत्प्रणिधिर्विमर्दकोऽर्थपतिगृह्यो नाम भूत्वा धनमित्रमुल्लङ्घ्य बहु-

पदचन्द्रिका।

खिङ्गसर्पयोः' इति विश्वः। विप्रलभ्य प्रतार्य। तत्स्वजनस्तन्मात्रादिः। धनदाय वित्तदायिने। तां कन्यकां गुणैरावर्ज्य वशीकृत्य। तत्स्वजनं तन्मात्रादिकम्। गूढं गुप्तम्। धनैर्वित्तैः॥

**ततश्चेति**। प्रधानदूतीं मुख्यदूतीम्। शाक्यभिक्षुकीं बौद्धसिद्धान्ततपस्विनीम्। 'शाक्यस्तु बौद्धेष्वन्यतमः' इति। चीवरपिण्डदानादिना वस्त्रखण्डान्नदानादिना। उपसंगृह्य वशीकृत्य। तन्मुखेन दूतीमुखेन। तया बन्धक्या कुलटया। 'बन्धकी कुलटेत्वरी' इत्यमरः। अकरवं कृतवानस्मि। प्रतिदानं प्रत्याम्नायदानम्। संप्रतिपन्नायां सम्यगङ्गीकृतायाम्। तमर्थं चर्मभस्त्रिकादानरूपम्। मद्गुणैरुन्मादितायाः। करकिसलयं पाणिपल्लवम्। अग्रहीषं गृहीतवान्। **यस्यां चेति**। कार्यान्तरापदेशेन कार्यान्तरव्याजेन। आहूतेष्वाकारितेषु। मत्प्रणिधिर्गूढपुरुषो विमर्दको नाम। अर्थपतिगृह्यस्तत्पक्षस्थो भूत्वा। धनमित्रमुदारकनामानम्।

भूषणा।

विलासी। 'भुजङ्गोऽहिविलासिनोः' इति विश्वः। शाक्यभिक्षुकी बौद्धभिक्षुकी भिक्षामटति सा। एतादृशी दूती प्रशस्ता। उपसंगृह्य वशीकृत्य। बन्धक्याऽसत्या। 'बन्धक्यासती कुलटेत्वरी' इत्यमरः। मरीचिकोपोदये मुक्तिर्गणिकानीचलद्योतनाय(?)। प्रणिधिश्चरः। 'प्रणिधिरपसर्पश्चरः स्पशः' इत्यमरः। उल्लङ्घ्य मर्यादां

लघुदीपिका।

श्रवा तद्विपरीता। 'वचने स्थित आश्रवः'। शाक्यभिक्षुकीं शाक्यसिद्धान्ततपस्विनीम्। 'शाक्यस्तु बौद्धेष्वन्यतमः'। उपसंगृह्य वशीकृत्य। परस्य हेतोः। परार्थ-

तर्जयत् । उक्तं च धनमित्रेण—'भद्र, कस्तवार्थो यत्परस्य हेतोर्मामाक्रोशसि । न स्मरामि स्वल्पमपि तवापकारं मत्कृतम्' इति । स भूयोऽपि तर्जयन्निवाब्रवीत्—'स एष धनगर्वो नाम, यत्परस्य भार्यां शुल्कक्रीतां पुनस्तत्पितरौ द्रव्येण विलोभ्य स्वीचिकीर्षसि । ब्रवीषि च—'कस्तवापकारो मत्कृतः' इति । ननु प्रतीतमेवैतत् 'सार्थवाहस्यार्थपतेर्विमर्दको बहिश्चराः प्राणाः' इति । सोऽहं तत्कृते प्राणानपि परित्यजामि । ब्रह्महत्यामपि न परिहरामि । 'ममैकरात्रजागरप्रतीकारस्तवैष चर्मरत्नाहंकारदाहज्वरः' इति । तथा ब्रुवाणश्च पौरमुख्यैः सामर्ष [1]निषिध्यापवाहितोऽभूत् । इयं च वार्ता कृत्रिमार्तिना धनमित्रेण चर्मरत्ननाशमादावेवोपक्षिप्य पार्थिवाय निवेदिता । स चार्थपतिमाहूयोपह्वरे पृष्टवान्—'अङ्ग, किमस्ति कश्चिद्विमर्दको नामात्रभवतः?' इति । तेन च मूढात्मना—'अस्ति देव, परं मित्रम् । कश्च तेनार्थः?' इति कथिते राज्ञोक्तम्—'अपि शक्नोषि तमाह्वातुम्' इति । 'बाढमस्मि शक्तः' इति निर्गत्य स्वगृहे वेशवाटे द्यूतसभायामापणे च निपुणमन्विष्य-

पदचन्द्रिका ।

उल्लङ्घ्यातिक्रम्य । परस्य हेतोः । परार्थमित्यर्थः । 'षष्ठी हेतुप्रयोगे' (२।३।२६) । आक्रोशसि निन्दसि । प्रतीतं प्रसिद्धम् । न परिहरामि । अङ्गीकरोमीति भावः । जागरो जागरणम्, स एव प्रतीकारो यस्येति । एकेनैव जागरेण चर्मरत्नापहाराद्दाहज्वरं दूरीकरोमीति भावः । अपवाहितो निराकृतः । कृत्रिमार्तिः पीडा यस्येति तेन । चर्मरत्ननाशं चर्मरत्नचोरणरूपम् । आदावेव प्रथममेव । उपक्षिप्य प्रस्ताव्य । 'प्रस्तावः स्यादुपक्षेपः' इति वैजयन्ती । स चेति राजा । अर्थपतिं श्रेष्ठिकम् । उपह्वर एकान्ते । अङ्गेत्यामन्त्रणेऽव्ययम् । शक्नोषि । शक्तोऽसीत्यर्थः । 'शक्ल शक्तौ' बाढमित्यङ्गीकारे । वेशवाटे वेश्यागृहमार्गे । 'वेशो वेश्यागृहम्' इति । आपणे

भूषणा ।

परित्यज्य । परस्य हेतोः । परार्थमित्यर्थः । 'षष्ठी हेतुप्रयोगे' (२।३।२६) इति षष्ठी । उपह्वरे रहसि । उपक्षिप्य प्रस्तावं कृत्वा । 'प्रस्तावः स्यादुपक्षेपे' इति वैजयन्ती । अङ्ग इत्यामन्त्रणेऽव्ययम् । 'स्युः प्याट् पाडङ्ग हे है भोः' इत्यमरः । अप्यव्ययं संभावनायाम् । प्रत्याख्याय विपरीतं कथयित्वा । स्वगृहम् । अगमयदिति

लघुदीपिका ।

क्षित्यर्थः । 'षष्ठी हेतुप्रयोगे' (२।३।२६) आक्रुश्य निन्दयित्वा । उपक्षिप्य प्रस्ताव्य । 'प्रस्तावः स्यादुपक्षेपः' इति वैजयन्ती । अङ्गेत्यामन्त्रणेऽव्ययम् । 'अङ्गेत्यामन्त्रणेऽव्ययम्'

पाठा०-१ 'आक्रुश्य'.

न्नोपलब्धवान् । कथं वोपलभ्येत स वराकः । स खलु विमर्दको मद्ग्राहितत्वदभिज्ञानचिह्नो मन्नियोगा[1]त्त्वदन्वेषणायोज्जयिनीं तदहरेव प्रातिष्ठत । अर्थपतिस्तु तमदृष्ट्वा तत्कृतमपराधमात्मसंबद्धं मत्वा मोहाद्भयाद्वा प्रत्याख्याय पुनर्धनमित्रेण विभा[2]विते कुपितेन राज्ञा निगृह्य निगडबन्धनमनीयत ।

तेष्वेव दिवसेषु विधिना कल्पोक्तेन चर्मरत्नं दोग्धुकामा काममञ्जरी पूर्वदुग्धं क्षपणीभूतं विरूपकं रहस्युपसृत्य ततोऽपहृतं सर्वमर्थजातं तस्मै प्रत्यर्प्य सप्रश्रयं च बह्वनुनीय प्रत्यागमत् । सोऽपि कथंचिन्नि[3]र्ग्रन्थिकग्रहान्मोचितात्मा मदनुशिष्टो हृष्टतमः स्वधर्ममेव प्रत्यपद्यत । काममञ्जर्यपि कतिपयैरेवाहोभिरश्मन्तकशेषमजिनरत्नदोहाशया स्वमभ्युदयमकरोत् । अथ मत्प्रयुक्तो धनमित्रः पार्थिवं

पदचन्द्रिका ।

निषद्यायाम् । 'आपणस्तु निषद्यायां विपणिः पण्यवीथिका' इत्यमरः । नोपलब्धवान् । न प्रापेत्यर्थः । स वराकस्तुच्छोऽर्थपतिः । **मद्ग्राहितेति** । मयापहारवर्मणा ग्राहितमङ्गीकारितं त्वदभिज्ञानचिह्नं तव राजवाहनस्याभिज्ञानचिह्नं यस्येति स तथा । मन्नियोगान्ममाज्ञावशात् । तदहरेव तस्मिन्नेव दिवसे । प्रातिष्ठत प्रस्थितवान् । अर्थपतिस्तं विमर्दकम् । तत्कृतं विमर्दककृतम् । आत्मसंबद्धमात्मीयमेव । मत्वा ज्ञात्वा । प्रत्याख्याय विपरीतमुक्त्वा । 'प्रत्याख्यानं निरसने विपरीतविजल्पिते' इत्यजयः । विभावित आविष्कृते । प्रकटीकृत इत्यर्थः । 'आविष्कारो विभावनम्' । निगडबन्धनं पादबन्धनम् ॥

**तेष्विति** । सप्रश्रयं सविनयम् । 'सप्रत्ययम्' इति पाठे सशपथम् । सोऽपि क्षपणकवेशधारी विरूपकनामा । निर्ग्रन्थिकग्रहात्क्षपणकसिद्धान्तात् । 'निर्ग्रन्थोऽर्हन्क्षपणकः श्रमणो जिन इत्यपि' इति वैजयन्ती । मदनुशिष्टो मया बोधितः । कतिपयैरल्पैः । अश्मन्तकं चुल्लिः । 'अश्मन्तमुद्धानमधिश्रयणी चुल्लिरन्तिका' इत्यमरः । **अथेति** । मत्प्रयुक्तो मदुपदिष्टः । लोकोपक्रोश-

भूषणा ।

शेषः । 'प्रत्याख्यानं निरसने विपरीते तु जल्पिते' इत्यजयः । निर्ग्रन्थिकाग्रहाच्छ्रमणिकासिद्धान्तात् । 'निर्ग्रन्थोऽर्हन्क्षपणकः श्रमणो जिन इत्यपि' इति कोशः । अश्मन्तकशेषं चुल्लिशेषम् । 'अश्मन्तमुद्धानमधिश्रयणी चुल्लिरन्तिका'

लघुदीपिका ।

इति वैजयन्ती । अयीत्यव्ययमनुनये । प्रत्याख्याय विपरीतं कथयित्वा । 'प्रत्याख्यानं निरसने विपरीतविजल्पिते' इत्यजयः । विभावित आविष्कृते । 'आविष्कारो विभावनम्' । सप्रत्ययं सशपथम् । निर्ग्रन्थिकग्रहाच्छ्रमणकसिद्धान्तात् । 'निर्ग्रन्थोऽर्हन्क्षपणकः श्रवणो जिन इत्यपि' इति वैजयन्ती । अश्मन्तकम् । अश्म-

पाठा०-१ 'तु श्रमन्'. २ 'विभावितेन'. ३ 'निर्ग्रन्थिकाग्रहात्'.

सिथो व्यज्ञापयत्—'देव, येयं गणिका काममञ्जरी लोभोत्कर्षाल्लोभमञ्जरीति लोकोपक्रोशपात्रमासीत्, साद्य मुसलोलूखलान्यपि निरपेक्षं त्यजति । तन्मन्ये मच्चर्मरत्नलाभं हेतुम् । तस्य खलु कल्पस्तादृशः । वणिग्भ्यो वारमुख्याभ्यश्च दुग्धे नान्येभ्य इति हि तद्गता प्रतीतिः । अतोऽमुष्यामस्ति मे शङ्का' इति । सा सद्य एव राज्ञा सह जनन्या समाहूयत । व्यथितवर्णेनेव मयोपह्वरे कथितम्—'नूनमार्ये, सर्वस्वत्यागादतिप्रकाशादाशङ्कनीयचर्मरत्नलाभा तदनुयोगायाङ्गराजेन समाहूयसे । भूयोभूयश्च निर्बद्धया त्वया नियतमस्मि तदागतित्वेनाहमपदेश्यः । ततश्च मे भावी चित्रवधः । मृते च मयि न जीविष्यत्येव ते भगिनी । त्वं च निःस्वीभूता । चर्मरत्नं च धनमित्रमेव प्रतिभजिष्यति । तदियमापत्समन्ततोऽनर्थानुबन्धिनी[2] । तत्किमत्र प्रतिविधेयम् ?' इति । तया तज्जनन्या चाश्रूणि विसृज्योक्तम्—'अस्त्येवैतदस्मद्बालिश्यान्निर्भिन्नप्रायं रहस्यम् । राज्ञश्च निर्बन्धाद्द्वित्रिश्चतुर्[3]र्निह्नुत्यापि नियतमागतिरपदेश्यैव चोरितस्य त्वयि । त्वयि त्वपदिष्टे सर्वमस्म-

पदचन्द्रिका ।

पात्रम् । लोकनिन्दापात्रमित्यर्थः । तस्य मच्चर्मरत्नस्य । कल्पः प्रकारः । प्रतीतिः ख्यातिः । उपह्वर एकान्ते । व्यथितवर्णेनेवेतीवकारेण कृत्रिमव्यथात्वं सूचितम् । **नूनमिति** । अतिप्रकाशादतिप्रसिद्धेः । चर्मरत्नलाभे । विषयसप्तमीयम् । तदनुयोगाय तत्प्रश्नाय । 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः । निर्बद्धया आग्रहपृष्ट्या । तदागतित्वेन चर्मरत्नप्राप्तिहेतुत्वेन । अपदेश्यः कथनीयः । **तत इति** । भावी भविता । निःस्वीभूता दरिद्रीभूता । तत्तस्मात् । समन्ततः सर्वतः । अनर्थानुबन्धिन्यनर्थकारिणी । अत्रास्मिन्नर्थे । प्रतिविधेयं प्रतिकर्तव्यम् । बालिशस्य भावो बालिश्यं मूर्खत्वम् । 'मूर्खवैधेयबालिशाः' इत्यमरः । निह्नुत्य गोपयित्वा । चोरितस्य पदार्थस्य । त्वयि

भूषणा ।

इत्यमरः । निर्बद्धया संकटं प्रापयेति फलितोऽर्थः । 'द्वित्रिश्चतुर्—' ( ८।३।४३ ) इति सुजन्तः पाठः । द्वित्रिश्चतुर्वारमित्यर्थः । निह्नुत्य गोपयित्वा । 'निह्नवः स्याद-

लघुदीपिका ।

न्तमुद्धानमधिश्रयणी चुल्लिरन्तिका' । निह्नुत्य गोपयित्वा । 'निह्नवः स्यादपह्नवे-

पाठा०—१ 'लाभहेतुस्तस्याः'. २ 'बन्धिनी महत्यापतिता'. ३ 'द्वित्रिचतुरमतिनिह्नुत्य'.

त्कुटुम्बमवसीदेत्। अर्थपतौ च तदपयशो रूढम्। अङ्गपुरप्रसिद्धं च तस्य कीनाशस्यास्माभिः संगतम्। अमुनैव तदस्मभ्यं दत्तमित्यपदिश्य वरमात्मा गोपायितुम्' इति मामभ्युपगमय्य[1] राजकुलमगमताम्। राज्ञानुयुक्ते च 'नैष न्यायो वेशकुलस्य यद्दातुरपदेशः। न ह्यर्थैर्न्यायार्जितैरेव पुरुषा वेशमुपतिष्ठन्ति' इत्यसकृदतिप्रणुद्य कर्णनासाच्छेदोपक्षेपभीषिताभ्यां दग्धबन्धकीभ्यां स एव तपस्वी तस्करत्वेनार्थपतिरग्राह्यत। कुपितेन च राज्ञा तस्य प्राणेषूद्यतो दण्डः। प्राञ्जलिना धनमित्रेणैव प्रत्यषिध्यत—'आर्य, मौर्यदत्त एष वरो वणिजाम्। ईदृशेष्वपराधेष्वसुभिरवियोगः[2]। यदि कुपितोऽसि हृतसर्वस्वो निर्वासनीयः पाप एषः' इति। तन्मूला च धनमित्रस्य कीर्तिरप्रथत। अप्रीयत च भर्ता। पटच्चरच्छेदशेषोऽर्थपतिरर्थमत्तः सर्वपौरजनसमक्षं निरवास्यत। तस्यैव द्रव्याणां तु केनचिदवयवेन सा वराकी काममञ्जरी चर्मरत्नमृगतृष्णिकापविद्धसर्वस्वा सानुकम्पं धनमित्राभिनोदितेन भूपे-

---

पदचन्द्रिका।

भवद्विषये। आगतिरागमनहेतुत्वम्। अपदेश्या। कथनीयेत्यर्थः। अवसीदेन्नश्येत्। तदपयशस्तच्चर्मरत्नचौर्यापयशः। रूढं ख्यातम्। संगतं मैत्री। अमुनैवार्थपतिनैव अनुयुक्ते। पृष्टे सतीत्यर्थः। वेशकुलस्य वेश्याजनस्य। दातुरपदेशो दातुर्न नामग्रहणम्। न्यायार्जितैर्न्यायप्राप्तैः। असकृद्वारंवारम्। अतिप्रणुद्य त्यक्त्वा। 'प्ररुद्य' इति पाठः। कर्णनासस्य च्छेदस्तस्योपक्षेपः प्रस्तावस्तद्भीषिताभ्याम्। **कुपितेनेति**। प्रत्यषिध्यत प्रत्यवार्यत। मौर्यो राजनीतिकर्ता। असुभिः प्राणैः। अवियोगो वियोगाभावः। हृतसर्वस्वो हृतद्रव्यः। निर्वासनीयो बहिष्कार्यः। तन्मूला तत्प्राणरक्षणमूला। अप्रथत। ख्याता बभूवेत्यर्थः। **अप्रीयतेति**। अप्रीयत। प्रीतोऽभूदित्यर्थः। पटच्चरच्छेदशेषो जीर्णवस्त्रखण्डावशेषः। 'पटच्चरं जीर्णवस्त्रम्' इत्यमरः। **तस्यैवेति**। तस्यार्थपतेः अवयवेनांशेन। मृगतृष्णिका मरीचिका,

भूषणा।

पह्नवे' इति वैजयन्ती। अपदेश्या कथनीया। मामुपगमय्य। स्वीकार्येत्यर्थः। उपक्षेपः प्रस्तावः। 'पटच्चरं जीर्णवस्त्रम्'। यतः। यस्माद्धेतोरित्यर्थः। 'यत्तद्यतस्ततो

लघुदीपिका।

इति वैजयन्ती। अपदेश्या कथनीया। उपक्षेपः प्रस्तावः। पटच्चरं जीर्णवस्त्रम्।

---

पाठा०—१ 'मामुपगमय्य'. २ 'अपराधेषु नास्त्यसुभिरभियोगः'.

नान्वगृह्यत । धनमित्रश्चाहनि गुणिनि कुलपालिकामुपायंस्त । तदेवं सिद्धसंकल्पो रागमञ्जरीगृहं हेमरत्नपूर्णमकरवम् ।

अस्मिंश्च पुरे लुब्धसमृद्धवर्गस्तथा मुषितो यथा कपालपाणिः स्वैरेव धनैर्मद्विश्राणितैः समृद्धीकृतस्यार्थिवर्गस्य गृहेषु भिक्षार्थमभ्रमत् । न ह्यलमतिनिपुणोऽपि पुरुषो नियतिलिखितां लेखामतिक्रमितुम् । यतोऽहमेकदा रागमञ्जर्याः प्रणयकोपप्रशमनाय सानुनयं [1]पायितायाः पुनःपुनः प्रणयसमर्पितमुखमधुगण्डूषमास्वादमास्वादं मदेनास्पृश्ये । शीलं हि मदोन्मादयोरमार्गेणाप्यु[2]चितकर्मस्वेव प्रवर्तनम् । यदहमुपोढमदः 'नगरमिद[3]मेकयैव शर्वर्या निर्धनीकृत्य

पदचन्द्रिका ।

तयापविद्धं दत्तं सर्वस्वं ययेति तथा । अभिनोदितेन प्रेरितेन । धनमित्रो गुणिन्यहनि । गुणवद्दिवस इत्यर्थः । उपायंस्त परिणीतवान् । सिद्धसंकल्पोऽहमपहारवर्मा । अकरवं कृतवानस्मि । **अस्मिन्निति** । लुब्धसमृद्धवर्गो लुब्धाश्च ते समृद्धाश्च तेषां वर्गः समूहः । कपालं खर्परं पाणौ यस्येति तथा । स्वैरेव धनैरात्मीयैरेव धनैः । मद्विश्राणितैर्मद्दत्तैः । अभ्रमत् । भ्रमति स्मेत्यर्थः । अतिनिपुणोऽप्यतिकुशलोऽपि । नियतिरदृष्टम् । 'भाग्यं स्त्री नियतिर्विधिः' इत्यमरः । **यत इति** । एकदैकस्मिन्काले । 'एकादाकिनिच्च–' (५।३।५२) इति साधुः । प्रणयकोपः प्रीतिकलहस्तत्प्रशमनाय तन्नाशाय । पायितायाः पानं कारितायाः । मुखमधु मुखमद्यं तद्गण्डूषं पीत्वोज्झितम् । 'पीतशेषं तु गण्डूषम्' इति हलायुधः । आस्वादमास्वादम् । आस्वाद्यास्वाद्येत्यर्थः । णमुल् । अस्पृश्ये स्पृष्टवानस्मि । शीलं स्वभावः । उचितकर्मस्वभ्यस्तकर्मसु । 'अभ्यस्तेऽप्युचिते न्याय्यम्' इति वैजयन्ती । प्रवर्तनमनुष्ठानम् । **यदहमिति** । उपोढमदोऽधिकमदः । शर्वर्या रात्र्या । 'अथ शर्वरी । निशा

भूषणा ।

हेतौ' इत्यमरः । पायितायाः पानविषयं कारितायाः । गण्डूषं मुखे पीत्वोज्झितम् । 'पीत्वोज्झितं तु गण्डूषम्' इति हलायुधः । अहनि गुणिनि मुहूर्तादिगुणयुक्ते अहन्युपायंस्त । कुलपालिकाया विवाहं कृतवानित्यर्थः । शीलं स्वभावः । 'शीलं स्वभावे सद्वृत्ते' इत्यमरः । उपचितकर्मस्वभ्यस्तकर्मसु । 'न्याय्येऽभ्यस्तेऽप्युप-

लघुदीपिका ।

यतः । तत इत्यर्थः । 'यत्तद्यतस्ततो हेतौ' । गण्डूषं पीतशिष्टजलम् । 'पीतशेषं तु गण्डूषम्' इति हलायुधः । उचितकर्मस्वभ्यस्तकर्मसु । 'अभ्यस्तेऽप्युचितं

पाठा०–१ 'पाययितायाः'. २ 'उपचित'. ३ 'इदमनयैकया'.

त्वद्भवनं पूरयेयम्' इति प्रव्यथितप्रियतमाप्रणामाञ्जलिशपथशताति-वर्ती मत्तवारण इव रभसच्छिन्नशृङ्खलः कयापि धात्र्या शृगालिकाख्ययानुगम्यमानो नातिपरिकरोऽसिद्वितीयो रंहसा परेणोद्-चलम् । अभिपततोऽपि नागरिकपुरुषानशङ्कमेव विगृह्य तस्कर इति तैरभिहन्यमानोऽपि नातिकुपितः क्रीडन्निव मदावसन्नहस्त-पतितेन निस्त्रिंशेन द्वित्रानेव हत्वावघूर्णमानताम्रदृष्टिरपतम् । अनन्तरमार्तरवान्विसृजन्ती शृगालिका ममाभ्याशमगमत् । अबध्ये चाहमरिभिः । आपदा तु मदापहारिण्या सद्य एव बोधित-स्तत्क्षणोपजातया प्रतिभया व्यचीचरम्—'अहो, ममेयं मोह-मूला महत्यापदापतिता । प्रसृततरं च सख्यं मया सह धन-मित्रस्य, मत्परिग्रहत्वं च रागमञ्जर्याः । मदेनसा च तौ प्रोर्णुतौ

पदचन्द्रिका ।

निशीथिनी रात्रिः' इत्यमरः । निर्धनीकृत्य । निर्द्रव्यं कृत्वेत्यर्थः । शपथशतमतिक्रम्य वर्तत इति तथा । मत्तवारण इव मत्तगज इव । रभसेन वेगेन छिन्ना त्रोटिता शृङ्खला येनेति तथा । धात्र्युपमाता । 'धात्री स्यादुपमातापि क्षितिरप्यामलक्यपि' इत्य-मरः । परिकरः परिवारः । रंहसा वेगेन । उदचलम् । उच्चलित इत्यर्थः । अभि-पततः संमुखमागच्छतः । अशङ्कं निःशङ्कम् । विगृह्य युद्धं कृत्वा । तस्कर इति चोर इति । अभिहन्यमानस्ताड्यमानः । मदेनावसन्नः शिथिलो यो हस्तस्तस्मात्प-तितेन । निस्त्रिंशेन खड्गेन । 'नृशंसखड्गौ निस्त्रिंशौ' इत्यमरः । अवघूर्णमाना विह्वला । **अनन्तरमिति** । अभ्याशं समीपम् । अबध्ये । बद्ध इत्यर्थः । मदापहा-रिणा मदनाशकर्त्र्या । प्रतिभया प्रज्ञया । 'प्रज्ञा नवनवोल्लासशालिनी प्रतिभा मता' इति भरतः । व्यचीचरं विचारितवान् । मोहमूलाऽज्ञानमूला । महत्यतिशयिता आपतितागता । प्रसृततरं ख्याततरम् । मत्परिग्रहत्वं मत्पत्नीत्वम् । 'परिग्रहस्तु

भूषणा ।

चितम्' इति वैजयन्ती । प्रवर्तनमनुष्ठानम् । **व्यथितप्रियतमेति** । अनेन मधुपानं कृतम्, अतोऽयमुन्मत्त इत्येतदर्थं तया शपथादिकं कृतमिति भावः । अभिपतत इति संमुखं पतता । विगृह्यापि नातिकुपित इत्यन्वयः । निस्त्रिंशः खड्गः । 'कर-वालनिस्त्रिंशकृपाणखड्गाः' इति हेमचन्द्रः । व्यचीचरं विचारं कृतवान् । मत्प-

लघुदीपिका ।

न्याय्ये' इति वैजयन्ती । प्रवर्तनमनुष्ठानम् । 'निस्त्रिंशः क्रूरखड्गयोः' । मत्परिग्रहत्वं

पाठा०–१ 'व्यथित'. २ 'धूर्तया धात्र्या'. ३ 'संप्रोर्णुतौ'.

श्वो नियतं निग्रहीष्येते[1] । तदीयमिह प्रतिपत्तिर्ययानुष्ठीयमानया मन्नियोगतस्तौ परित्रास्येते । मां च कदाचिदनर्थादितस्तारयिष्यत' इति कमप्युपायमात्मनैव निर्णीय शृगालिकामगादिषम्—'अपेहि जरतिके, या तामर्थलुब्धां दग्धगणिकां रागमञ्जरिकामजिनरत्नमत्तेन शत्रुणा मे मित्रच्छद्मना धनमित्रेण संगमितवती, सा हतासि । तस्य पापस्य चर्मरत्नमोषाद्दुहितुश्च ते साराभरणापहारादहमद्य निःशल्यमुत्सृजेयं जीवितम्' इति । सा पुनरुद्घटितज्ञा परमधूर्ता साश्रुगद्गदमुदञ्जलिस्तान्पुरुषान्सप्रणाममासादितवती । सामपूर्वं मम पुरस्तादयाचत—'भद्रकाः, प्रतीक्ष्यतां कंचित्कालं यावदस्मादस्मदीयं सर्वं मुषितमर्थजातमवगच्छेयम्' इति । तथेति तैः प्रतिपन्ने पुनर्मत्समीपमासाद्य 'सौम्य, क्षमस्वास्य दासीजनस्यैकमपराधम् । अस्तु स कामं त्वत्[2]कलत्राभिमर्शी

पदचन्द्रिका ।

स्वीकारे शापे पत्न्यां परिच्छदे' इति महीपः । मदेनसा मत्पापेन । 'कलुषं वृजिनैनोऽघम्' इत्यमरः । तौ रागमञ्जरीधनमित्रौ । प्रोर्णुतावभिभूतौ । श्व आगामिनि दिवसे । निग्रहीष्येते । निगृहीतौ भविष्यत इत्यर्थः । इयं वक्ष्यमाणा । प्रतिपत्तिः कर्तव्यम् । यया प्रतिपत्त्या । नियोगतो नियमात् । परित्रास्येते परिरक्षितौ भविष्यतः । कदाचित्पक्षान्तरेण । अगादिषमवदम् । जरतिका वृद्धा । अपेहि । गच्छेत्यर्थः । **यातामिति** । मित्रच्छद्मना कपटमित्रेण । संगमितवती संबन्धं कारितवती । तस्य पापस्य धनमित्रस्य । साराभरणानामपहारात्स्तेयात् । सा शृगालिका । उद्घटितज्ञा सूचितज्ञा । 'सूचनमुद्घटनं बोधिः' इत्यजयः । उदञ्जलिर्बद्धाञ्जलिः । अयाचत प्रार्थितवती । भद्रकाः कल्याणरूपाः । मुषितं चोरितम् । अवगच्छेयं ज्ञास्ये । तैः पुरुषैः प्रतिपन्नेऽङ्गीकृते । क्षमस्व सहस्वेत्यर्थः । स धनमित्रः । त्वत्कलत्रा-

भूषणा ।

रिग्रहत्वं मत्पत्नीत्वम् । 'पत्नीपरिजनादानमूलशापाः परिग्रहाः' इत्यमरः । मदेनसा मत्पापेन । संप्रोर्णुतावभिभूतौ । 'ऊर्णुञ् आच्छादने' । इहास्मिन्नवसरे ।

लघुदीपिका ।

मत्पत्नीत्वम् । 'पत्नीपरिजनादानमूलशापाः परिग्रहाः' । मदेनसा मत्पापेन । प्रोर्णुतावभिभूतौ । 'ऊर्णुञ् आच्छादने' । इहास्मिन्नवसरे । अपेहि जरतिके, अपगच्छ

पाठा०–१ 'निग्राहयिष्ये'. २ 'त्वम्'.

वैरास्पदं धनमित्रः । स्मरंस्तु चिरकृतां ते परिचर्यामनुग्रहीतुमर्हसि दासीं रागमञ्जरीम् । आकल्पसारो हि रूपाजीवाजनः । तद्ब्रूहि क्व निहितमस्या भूषणम्' इति पादयोरपतत् । ततो दयमान इवाहमब्रवम्—'भवतु, मृत्युहस्तवर्तिनः किं ममामुष्या वैरानुबन्धेन' इति । तद्ब्रुवन्निव कर्ण एवैनामशिक्षयम्—'एवमेवं प्रतिपत्तव्यम्' इति । सा तु प्रतिपन्नार्थेव—'जीव चिरम्, प्रसीदन्तु ते देवताः, देवोऽप्यङ्गराजः पौरुषप्रीतो मोचयतु त्वाम्, एतेऽपि भद्रमुखास्तव दयन्ताम्' इति क्षणादपासरत् । आनीये चाहमारक्षिकनायकस्य शासनाचारकम् ।

---

पदचन्द्रिका ।

भिमर्शी त्वत्स्त्रीगामी । वैरास्पदं वैरस्थानम् । **स्मरन्निति** । चिरकृतां बहुकालकृताम् । त इति । तवेत्यर्थः । आकल्पसारो भूषणसारः । 'आकल्पवेषौ नेपथ्यम्' इत्यमरः । रूपाजीवा वेश्या । 'वारस्त्री गणिका वेश्या रूपाजीवा' इत्यमरः । क्व निहितं क्व स्थापितम् । दयतेऽसौ दयमानः कृपयन्निव । भवतु श्रूयताम् । संवादे वर्तमानमिदमव्ययम् । 'भवत्वन्तरसंवादे निर्दोषस्मरणेऽपि च' इत्यजयः । मृत्युहस्तवर्तिनो यमकरगतस्य । अमुष्या रागमञ्जर्याः । वैरानुबन्धेन वैरसंबन्धेन । एनां शृगालिकाम् । अशिक्षयं शिक्षितवान् । प्रतिपत्तव्यं कर्तव्यम् । सा शृगालिका । प्रतिपन्नार्थेव प्राप्तार्थेव । प्रसीदन्तु । प्रसन्ना भवन्त्वित्यर्थः । पौरुषप्रीतः पुरुषार्थसंतुष्टः । एतेऽपि पुरोवर्तिनः । दयन्तां दयां कुर्वन्तु । रक्षन्त्वित्यर्थः । 'दय दानगतिहिंसारक्षणेषु' इति धातोः । तवेति । त्वामित्यर्थः । 'अधीगर्थदयेशां–' ( २।३।५२ ) इति कर्मणि षष्ठी । अपासरदपसृता । आरक्षिका रक्षणकारस्तेषां नायकस्य कोष्टपालस्य । शासना-

भूषणा ।

अनुबन्धः अनुबन्धोऽनुवृत्तिः । **स्मरन्त्विति** । परिचर्यामुपासनां स्मरन्नुग्रहीतुमित्यन्वयः । आकल्पो वेषः । 'आकल्पवेषौ नेपथ्यम्' इत्यमरः । रूपाजीवाजनो वेश्याजनः । 'वारस्त्री गणिका वेश्या रूपाजीवा' इत्यमरः । तव दयन्तां त्वां रक्षन्तु । 'दय दानगतिहिंसारक्षणेषु' । 'अधीगर्थदयेशां कर्मणि' (२।३।५२) इति कर्मणि षष्ठी । 'आरक्षकास्तु बन्दिनः' इति । वैजयन्ती ।

लघुदीपिका ।

वृद्धे । उद्घटितं सूचनम् । 'सूचनमुद्घटनं बोधिः' इत्यजयः । भवतु श्रूयताम् । संवादे वर्तमानमिदमव्ययम् । 'भवत्वन्तरसंवादे निर्दोषस्मरणेऽपि वा' इत्यजयः । अनुबन्धोऽनुवृत्तिः । तव दयन्तां त्वां रक्षन्तु । 'दय दानगतिहिंसारक्षणेषु' । 'अधीगर्थदयेशां कर्मणि' ( २।३।५२ ) इति कर्मणि षष्ठी । 'आरक्षकास्तु बन्दिनः' इति वैजयन्ती ।

---

पाठा०–१ 'आरक्षक'.

अथोत्तरेद्युरागत्य दृप्ततरः सुभगमानी सुन्दरंमन्यः पितुरत्ययादचिराधिष्ठिताधिकारस्तारुण्यमदादनतिपक्कः कान्तको नाम नागरिकः[1] किंचिदिव भर्त्सयित्वा मां समभ्यधत्त—'न चेद्धनमित्रस्याजिनरत्नं प्रतिप्रयच्छसि, न चेद्वा नागरिकेभ्यश्चोरितकानि प्रत्यर्पयसि, द्रक्ष्यसि पारमष्टादशानां कारणानामन्ते च मृत्युमुखम्' इति । मया तु स्मयमानेनाभिहितम्—'सौम्य, यद्यपि दद्यामाजन्मनो मुषितं धनं न त्वर्थपतिदारापहारिणः शत्रोर्मे मित्रमुखस्य धनमित्रस्य चर्मरत्नप्रत्याशां पूरयेयम् । अदत्त्वैव तद्युत-

पदचन्द्रिका ।

न्नियोगात् । चारकं बन्धनालयम् ॥

**अथेति ।** उत्तरेद्युः परदिवसे । 'सद्यः परुत्–' (५।३।२२) इति निपातः । दृप्ततरो गर्वितत्तरः । 'गर्वितो दृप्त उद्धतः' इति वैजयन्ती । सुभगमानी सुभगमात्मानं मन्यमानः । 'सर्वोन्नतत्वं सौभाग्यं तद्वान्सुभग उच्यते' इति दिवाकरः । सुन्दरंमन्यः सौन्दर्याभिमानी । पितुरत्ययात् पितृनाशात् । अचिराधिष्ठिताधिकारोऽल्पकालप्राप्ताधिकारः । अनतिपक्कोऽनतिपरिगणतः । नागरिकः कारापतिः । 'कारापतिर्नागरिकः' इति वैजयन्ती । समभ्यधत्तोक्तवान् । **न चेदिति ।** प्रतिप्रयच्छसि प्रत्यर्पयसि । नागरिकेभ्यो नगरवासिलोकेभ्यः । कारणानां यातनानाम् । 'कारणा तु यातना तीव्रवेदना' इत्यमरः । अन्ते यातनावसाने । स्मयमानेन स्मितमुखेन । आजन्मनः । जन्म मर्यादीकृत्येत्यर्थः । मे मम शत्रोर्वैरिणः । मित्रमुखस्य मित्रच्छद्मनः । 'मुखं तु वदने मुख्ये ताम्रे छद्मनि वा पुमान्'

भूषणा ।

दृप्ततरो गर्वितः । 'गर्वितो दृप्त उद्धतः' इति वैजयन्ती । सुभगमानी सुभगमात्मानं मन्यमानः । 'सर्वोन्नतत्वं सौभाग्यं तद्वान्सुभग उच्यते' इति दिवाकरः । अचिराधिष्ठितोऽभिनवावलम्बितः । तारुण्यं यौवनम् । कारापतिर्नागरिकः । कारणानां यातनानाम् । 'कारणा तु यातना तीव्रवेदना' इत्यमरः । मित्रमुखस्य मित्रव्याजस्य । 'मुखं तु वदने मुख्ये ताम्रे छद्मनि वा पुमान्' इति भागुरिः ।

लघुदीपिका ।

दृप्ततरो गर्विततरः । 'गर्वितो दृप्त उद्धतः' इति वैजयन्ती । सुभगमानी सुभगमात्मानं मन्यमानः । 'सर्वोन्नतत्वं सौभाग्यं तद्वान्सुभग उच्यते' इति दिवाकरः । अचिराधिष्ठितोऽभिनवावलम्बितः । 'तारुण्यं यौवनं समे' । कारापतिर्नागरिकः । कारणानां यातनानाम् । 'कारणा यातनावृत्त्योः' । मित्रमुखस्य मित्रव्याजस्य । 'मुखं तु वदने मुख्ये ताम्रे छद्मनि वा पुमान्' इति भागुरिः । 'प्रत्याशा पुनराशी-

पाठा०—१ 'कारापतिः'.

मपि यातनानामनुभवेयम्। इयं मे साधीयसी संधा' इति। तेनैव क्रमेण वर्तमाने सान्त्वनतर्जनप्राये प्रतिदिनमनुयोगव्यतिकरेऽनुगुणान्नपानलाभात्कतिपयैरेवाहोभिर्विरोपितव्रणः प्रकृतिस्थोऽहमासम्।

अथ कदाचिदच्युताम्बरपीतातपत्विषि क्षयिणि वासरे हृष्टवर्णा शृगालिकोज्ज्वलेन वेषेणोपसृत्य दूरस्थानुचरा मामुपश्लिष्याब्रवीत्—'आर्य, दिष्ट्या वर्धसे। फलिता तव सुनीतिः। तथा त्वयादिश्ये तथा धनमित्रमेत्याब्रवम्—'आर्य, तवैवमापन्नः सुहृदित्युवाच—'अहमद्य वेशसंसर्गसुलभात्पानदोषाद्बद्धः। त्वया पुनरविशङ्कमद्यैव राजा विज्ञापनीयः—'देव, देवप्रसादादेव पुरापि तदजिनरत्नमर्थपतिमुषितमासादितम्। अथ तु भर्ता रागमञ्जर्याः कश्चिदक्षधूर्तः कलासु कवित्वेषु लोकवार्तासु

पदचन्द्रिका।

इति भागुरिः। प्रत्याशां पुनःप्राप्तीच्छाम्। 'प्रत्याशा पुनराप्तीच्छा' इति वैजयन्ती। अनुभवेयमनुभविष्यामि। साधीयसी दृढतरा। संधा प्रतिज्ञा। 'संधा स्थितौ प्रतिज्ञायाम्' इति विश्वः। अनुयोगव्यतिकरे प्रश्नप्रकारे। 'संपर्के च व्यतिकरः प्रकारव्रातयोरपि' इत्यजयः। अनुगुणान्नपानलाभादनुकूलाशनपानप्राप्तेः। विरोपितव्रण उपशान्तक्षतः। 'विरोपित उपशान्तश्चिकित्सितः' इति बोपालितः। **अथेति**। अच्युतो विष्णुस्तस्याम्बरं वस्त्रं तद्वत्पीता पिशङ्गातपत्विड्द्युतिप्रभा यस्येति। 'प्रकाशो द्योत आतपः' इत्यमरः। क्षयिणि क्षीणे। वासरे दिवसे। उपश्लिष्य संनिकृष्य। आदिश्य आदिष्टम्। आपन्न आपत्तिं प्राप्तः। 'आपन्न आपत्प्राप्तः स्यात्' इत्यमरः॥

**अथ त्विति**। अक्षधूर्तोऽक्षनिपुणः। समसृज्यत। संगतोऽभूदित्यर्थः। असावक्षधूर्तः। निकृष्टाशयः क्षुद्रान्तःकरणः। कुपितेन क्रुद्धेन। तस्या

भूषणा।

प्रत्याशां पुनःप्राप्तीच्छाम्। 'प्रत्याशा पुनराप्तीच्छा' इति वैजयन्ती। साधीयसी दृढतरा। संधा प्रतिज्ञा। 'संधा प्रतिज्ञा मर्यादा' इत्यमरः। अनुयोगव्यतिकरे प्रश्नप्रकारे। 'संपर्के च व्यतिकरः प्रकारव्रातयोरपि' इत्यजयः। विरोपितव्रणः उपशान्तक्षतः। 'विरोपित उपशान्तश्चिकित्सितः' इति बोपालितश्चापि। दिष्ट्येत्यव्ययमानन्दे। 'दिष्ट्या समुपजोषं चेत्यानन्दे' इत्यमरः। उपश्लिष्य संनिकृष्य। अन्ववर्ते स्वसंबन्धिवर्गवत्सादरमाचरामीति फलितोऽर्थः। सम-

लघुदीपिका।

च्छा' इति वैजयन्ती। साधीयसी दृढतरा। अनुयोगव्यतिकरे प्रश्नप्रकारे। 'संपर्के च व्यतिकरः प्रकारव्रातयोरपि' इत्यजयः। विरोपितव्रणः उपशान्तक्षतः। 'विरोपित उपशान्तश्चिकित्सितः' इति बोपालितः। उपश्लिष्य संनिकृष्य। समु-

पाठा०—१ 'आपन्नसुहृदामुना चैवमादिष्टोऽसि'.

चातिवैचक्षण्यान्मया समसृज्यत । तत्संबन्धाच्च वस्त्राभरणप्रेषणादिना तद्भार्यां प्रतिदिनमन्ववर्ते । तदसावशङ्किष्ट निकृष्टाशयः[1] कितवः । तेन च कुपितेन हृतं तच्चर्मरत्नमाभरणसमुद्गकश्च तस्याः । स तु भूयः स्तेयाय भ्रमन्नगृह्यत नागरिकपुरुषैः । आपन्नेन चामुनानुसृत्य रुदत्यै रागमञ्जरीपरिचारिकायै[2] पूर्वप्रणयानुवर्तिना तद्भाण्डनिधानोद्देशः कथितः । ममापि चर्मरत्नमुपायोपक्रान्तो यदि प्रयच्छेदिह देवपादैः प्रसादः कार्यः' इति । तथा 'निवेदितश्च नरपतिरसुभिर्मामवियोज्योपच्छन्दनैरेव स्वं ते दापयितुं प्रयतिष्यते । तन्नः पथ्यम्' इति । श्रुत्वैव च त्वदनुभावप्रत्ययादनतित्रस्नुना तेन तत्तथैव संपादितम् । अथाहं त्वदभिज्ञानप्रत्यायिताया रागमञ्जर्याः सकाशाद्यथेप्सितानि वसूनि[3] लभमाना राजदुहितुरम्बालिकाया धात्रीं माङ्गलिकां त्वदादिष्टेन

पदचन्द्रिका ।

रागमञ्जर्याः । समुद्गकः संपुटकः । तथैवामरः । सोऽक्षनिपुणः । स्तेयाय चौर्याय । नागरिकपुरुषैः । कारापतिपुरुषैरित्यर्थः । आपन्नेनापत्प्राप्तेन । रुदत्यै रोदनपरायै । तस्या यद्भाण्डं भूषणम् । 'भाण्डं भूषणमात्रेऽपि भाण्डं मूलवणिग्धने । नदीमात्रे तुरङ्गाणां भूषणे भाजनेऽपि च ॥' इति विश्वः । तस्य निधानोद्देशः स्थापनप्रदेशः । उपायैरुपक्रान्तो वशीकृतः । 'उपक्रमो वशीकारे समारम्भे चिकित्सने' इति वैजयन्ती । उपच्छन्दनैः उपसान्त्वनैः । 'सान्त्वनोपच्छन्दने च समावनुनयेऽपि च' इति केशवः । स्वं चर्मरत्नम् । ते तुभ्यम् । नोऽस्माकम् । पथ्यमनुगुणम् । त्वदनुभावप्रत्ययात्त्वत्प्रभावज्ञानात् । अनतित्रस्नुना अतिशयितत्रासरहितेन । 'त्रसिगृधि–' (३।१।१४०) इति क्नुप्रत्ययः । तेन धनमित्रेण । **अथेति ।**

भूषणा ।

द्गकः संपुटकः । एवमेवामरः । उपक्रान्तो वशीकृतः । 'उपक्रमो वशीकारे समारम्भे चिकित्सने' इति वैजयन्ती । उपच्छन्दनमुपसान्त्वनम् । 'सान्त्वनोपच्छन्दने च समावनुनये' इति केशवः । अनुभावप्रत्ययात्प्रभावज्ञानात् ।

लघुदीपिका ।

द्गकः संपुटकः । उपक्रान्तो वशीकृतः । 'उपक्रमो वशीकारे समारम्भे चिकित्सने' इति वैजयन्ती । उपच्छन्दतमुपसान्त्वनम् ॥ 'सान्त्वनोपच्छन्दने च समावनुनयेऽपि च' इति केशवः । अनुभावप्रत्ययात्प्रभावज्ञानात् । प्रत्या-

पाठा०–१ 'निकृष्टाशयतया'. २ 'परिचारिकायै शृगालिकायै'. ३ 'वस्तूनि'.

मार्गेणान्वरञ्जयम् । तामेव च संक्रमीकृत्य रागमञ्जर्याश्चाम्बालिकायाः सख्यं परमवीवृधम् । अहरहश्च नवनवानि प्राभृतान्युपहरन्ती कथाश्चित्राश्चित्तहारिणीः कथयन्ती तस्याः परं प्रसादपात्रमासम् । एकदा च हर्म्यगतायास्तस्याः[1] स्थानस्थितमपि कर्णकुवलयं स्रस्तमिति समादधती प्रमत्तेव प्रच्याव्य पुनरुत्क्षिप्य भूमेस्तेनोपकन्यापुरं कारणेन केनापि भवनाङ्गणं प्रविष्टस्य कान्तकस्योपरि प्रवृत्तकुहर[2]पारावतत्रासनापदेशात्प्रहसन्ती प्राहार्षम् । सोऽपि तेन धन्यंमन्यः किंचिदुन्मुखः स्मयमानो मत्कर्मप्रहासितया[3] राजदुहितुर्विलासप्रायमाकरमात्माभिलाषमूलमिव यथा संकल्प-

### पदचन्द्रिका ।

त्वदभिज्ञानप्रत्यायितायास्त्वत्प्रत्यायकवस्तुविश्वासितायाः । संक्रमीकृत्योपायीकृत्य । 'प्रत्युपाये संक्रमे च निश्रेण्यां संक्रमो मतः' इत्युत्पलिनी । अम्बालिका राजकन्या । अवीवृधम् । अवर्धयमित्यर्थः । प्राभृतान्युपायनानि । 'प्राभृतं तु प्रदेशनम् । उपायनमुपग्राह्यम्' इत्यमरः । चित्तहारिणीर्मनोहराः । तस्या अम्बालिकायाः । **एकदेति ।** हर्म्यगताया गृहगतायाः । स्थानस्थितमपि यथास्थितमपि । स्रस्तमिति गलितमिति । समादधती सज्जयती । प्रमत्तेवानवहितेव । प्रच्याव्य पातयित्वा । तेन कर्णकुवलयेन । उपकन्यापुरं कन्यान्तःपुरसमीपे । कान्तस्य कारापतेः । प्रवृत्तकुहर आरब्धसुरतः । 'कुहरं सुषिरे दम्भे नागलोके रतेऽपि च' इत्यजयः । पारावतः कपोतः । 'पारावतः कलरवः कपोतः' इत्यमरः । तस्य त्रासनापदेशाद्भयोत्पादनमिषात् । प्राहार्षम् । 'हन हिंसागत्योः' इति धातोः । सोऽपि कान्तकः । तेन कर्णकुवलयप्रहारेण । स्मयमानः स्मयतेऽसौ तथा ।

### भूषणा ।

प्रत्यायिताया विश्वस्तायाः संक्रमीकृत्योपायीकृत्य । 'प्रत्युपाये संक्रमे च निश्रेण्यां संक्रमः स्मृतः' इत्युत्पलिनी । प्राभृतान्युपायनानि । 'प्राभृतं तु प्रदेशनम्' इत्यमरः । प्रमत्तानवहिता । 'प्रमादोऽनवधानता' इत्यमरः । प्रच्याव्य पातयित्वा । तेन कुवलयेन । प्रसक्तकुहर आरब्धसुरतः । 'कुहरं सुषिरे दम्भे

### लघुदीपिका ।

यिताया विश्वस्तायाः । संक्रमीकृत्योपायीकृत्य । 'प्रत्युपाये संक्रमे च निश्रेण्यां संक्रमः स्मृतः' इत्युत्पलः । प्रमत्तानवहिता । 'प्रमादोऽनवधानता' । प्रच्याव्य प्रच्युतं कृत्वा । प्रसक्तकुहर आरब्धसुरतः । 'कुहरं सुषिरे दम्भे नागलोके रतेऽपि च'

पाठा०—१ 'हर्म्याङ्गणगतायाः'. २ 'प्रसक्तकुहरः'. ३ 'प्रहसितायाः'.

येत्तथा मयापि संज्ञयैव किमपि चतुरमाचेष्टितम् । आकृष्टधन्वना च मनसिजेन विद्धः सन्दिग्धफलेन पत्त्रिणातिमुग्धः कथंकथमप्यपासरत् । सायं च राजकन्याङ्गुलीयकमुद्रितां वासताम्बूलपट्टांशुकयुगलभूषणावयवगर्भां च वेङ्गेरिकां[1] कयाचिद्बालिकया ग्राहयित्वा रागमञ्जर्या इति नीत्वा कान्तकस्यागारमगाम् । अगाधे च रागसागरे मग्नो नावमिव मामुपलभ्य परमहृष्यत् । अवस्थान्तराणि च राजदुहितुः सुदारुणानि व्यावर्णयन्त्या मया स दुर्मतिः सुदूरमुदमाद्यत । तत्प्रार्थिता चाहं त्वत्प्रियाप्रहितमिति ममैव मुखताम्बूलोच्छिष्टानुलेपनं निर्माल्यं मलिनांशुकं चान्येद्युरुपाहरम् । तदीयानि च राजकन्यार्थमित्युपादाय च्छन्नमेवापोढानि[2]।

पदचन्द्रिका।

आत्मनि योऽभिलाषः स मूलं कारणं यत्रेति तथा । संकल्पयेच्चिन्तयेत् । चतुरमाचेष्टितम् । कृतमित्यर्थः । आकृष्टधन्वनाकर्षितधनुषा । विद्धो भिन्नः । दिग्धं विषलिप्तम् । 'दिग्धलिप्तौ विषाक्ते च' इति वैजयन्ती । फलं शल्यं यस्येति स तथा तेन । **सायं चेति** । राजकन्याया अङ्गुलीयकं मुद्रिका तया मुद्रितां कृतमुद्राम् । वासताम्बूलं सहकारतैलकर्पूरादिभिः सुगन्धीकृतं ताम्बूलम् । 'घनसारादिभिर्यत्तु वासितं वासमुच्यते' इति वैजयन्ती । पट्टांशुकयुगलं पट्टवस्त्रयुगलम् । भूषणावयवाः कतिपयभूषणानि तद्गर्भाम् । वङ्गेरिकां वेत्रपुटिकाम् । 'झांपी' इति भाषायाम् । 'वङ्गेरी वेत्रपुटिका' इति वैजयन्ती । **अगाधे चेति** । अगाधेऽतलस्पर्शे । अहृष्यद्धर्षं प्राप । सुदारुणान्यसह्यानि । स दुर्मतिः कान्तकः । सुदूरमत्यन्तम् । उदमाद्यत । उन्ममादेत्यर्थः । तत्प्रार्थिता तेन कान्तकेन प्रार्थिता । त्वत्प्रियाप्रहितमिति प्रेषितमिति । उच्छिष्टानुलेपनं स्वभुक्तावशिष्टाङ्गरागम् ।

भूषणा।

नागलोके रतेऽपि च' इत्यजयः । संकल्पयेच्चिन्तयेत् । दिग्धं विषलिप्तम् । 'विषाक्ते दिग्धलिप्तकौ' इत्यमरः । वासताम्बूलमेलालवङ्गकर्पूरादिसुगन्धीकृतम् । 'घनसारादिभिर्यत्तु वासितुं वासमुच्यते' इति वैजयन्ती । भूषणावयवं कानिचिद्भूषणानि । पेटिकाम् । 'पिटकः पेटकः पेटा' इत्यमरः । रागमञ्जर्या इत्युक्त्वा । नीत्वा स्वगृहे स्थापयित्वा । एकाकिनी (?) । कान्तकस्येति शेष-

लघुदीपिका।

इत्यजयः । संकल्पयेच्चिन्तयेत् । दिग्धं विषलिप्तम् । 'दिग्धलिप्तौ विषाक्ते च' इति वैजयन्ती । वासताम्बूलं सहकारतैलकर्पूरादिभिः सुगन्धीकृतम् । 'घनसारादिभिर्यत्तु वासितं वासमुच्यते' इति वैजयन्ती । वङ्गेरिका । वङ्गेरी वेत्रपुटिका ।

पाठा०–१ 'पेटिकाम्'. २ 'अपाविध्य प्राक्षिपम्', 'च्छन्नमेवप्राक्षिपम्'.

इत्थं च संधुक्षितमन्मथाग्निः स एवैकान्ते मयोपमन्त्रितोऽभूत्—'आर्य, लक्षणान्येव तवाविसंवादीनि । तथा हि मत्प्रातिवेश्यः कश्चित्कार्तान्तिकः 'कान्तकस्य हस्ते राज्यमिदं पतिष्यति, तादृशानि तस्य लक्षणानि' इत्यादिक्षत् । तदनुरूपमेव च त्वामियं राजकन्यका कामयते । तदेकापत्यश्च राजा तया त्वां समागतमुपलभ्य कुपितोऽपि दुहितुर्मरणभयान्नोच्छेत्स्यति । प्रत्युत प्रापयिष्यत्येव यौवराज्यम् । इत्थं चायमर्थोऽर्थानुबन्धी । किमिति तात, नाराध्यते । यदि कुमारीपुरप्रवेशाभ्युपायं नावबुध्यसे ननु बन्धनागारभित्तेर्व्याममत्रयमन्तरालमारामप्राकारस्य केनचित्तु हस्तवतैकागारिकेण तावतीं सुरङ्गां कारयित्वा प्रविष्टस्योपवनं तवोपरिष्टा-

---

**पदचन्द्रिका ।**

तदीयानि कान्तकसंबन्धीनि । उपादाय गृहीत्वा । छन्नमेव गुप्तमेव । अपोढानि त्यक्तानि । 'अपोढमपविद्धं च विसृष्टं त्यक्तमित्यपि' इति वैजयन्ती ॥

**इत्थमिति ।** संधुक्षितो वृद्धिं प्रापितः । स एव कान्तक एव । उपमन्त्रित उपदिष्टः । अविसंवादीनि विसंवादरहितानि । 'प्रतिवेशे चरति यः प्रातिवेश्यः स उच्यते' इति वैजयन्ती । 'कार्तान्तिको लक्षणज्ञः' इति वैजयन्ती । आदिक्षदवोचत् । तदनुरूपं तदनुकूलम् । कामयते प्रार्थयते । तदेकापत्यः सैवैकमपत्यं यस्येति स तथा । समागतं संगतम् । नोच्छेत्स्यति नोच्छेदं करिष्यति । अर्थानुबन्धी राजरूपार्थसंबन्धी । तातेत्यात्मीयतासूचकं संबोधनम् । व्यामत्रयम् । व्यामः परिमाणविशेषः । भाषया 'वांव' इति प्रसिद्धः । 'व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम्' इत्यमरः । आराम उपवनम् । प्राकारो वरणः । 'प्राकारो वरणः सालः' इत्यमरः । हस्तवता शिक्षितहस्तेन । ऐकागारिकेण चौरेण । 'चौरैकागारिकस्तेनदस्युतस्करमोषकाः' इत्यमरः । तावतीं तत्प्रमाणाम् । सुरङ्गा भूम्यन्तर्गतखनितमार्गविशेषः । अस्मदा-

**भूषणा ।**

पूरणम् । अत एवाग्रे 'अन्येद्युः' इति संगच्छते । अपोढान्यपविद्धानि । 'अपोढमपविद्धं च विकृष्टं त्यक्तमित्यपि' इति वैजयन्ती । प्रातिवेश्यः । 'प्रतिवेशे चरति यः प्रातिवेश्यः स उच्यते' इति वैजयन्ती । आदिक्षदवोचत् । व्यामो बाह्वोरन्तरालम् । 'व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम्' इत्यमरः । ऐकागारिकश्चौरः । 'चौरैकागारिकस्तेनदस्युतस्करमोषकाः' इत्यमरः । निरदि-

**लघुदीपिका ।**

अपोढान्यपविद्धानि । 'अपोढमपविद्धं च विकृष्टं त्यक्तमित्यपि' इति वैजयन्ती । प्रातिवेश्यः । 'प्रतिवेशे चरति यः प्रातिवेश्यः स उच्यते' इति वैजयन्ती । आदिक्षदवोचत् । 'व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम् ।' ऐकागारिकश्चौरः । 'चौरैकागारिकस्तेन दस्युतस्करमोषकाः' । निरदिक्षन्निर्दिष्टवान् । उपक्रान्तश्चि-

दस्मदायत्तैव रक्षा । रक्ततरो हि तस्याः परिजनो न रहस्यं भेत्स्यति' इति । सोऽब्रवीत्—'साधु भद्रे, दर्शितम् । अस्ति कश्चित्तस्करः खननकर्मणि सगरसुतानामिवान्यतमः । स चेल्लब्धः क्षणेनैतत्कर्म साधयिष्यति' इति । 'कतमोऽसौ, किमिति न लभ्यते ?' इति मयोक्ते 'येन तद्धनमित्रस्य चर्मरत्नं मुषितम्' इति त्वामेव निरदिक्षत् । 'यद्येवमेहि, त्वयास्मिन्कर्मणि साधिते चित्रै-रुपायैस्त्वामहं मोचयिष्यामी'ति शपथपूर्वं तेना[1]भिसंधाय सिद्धेऽर्थे भूयोऽपि निगडयित्वा 'योऽसौ चोरः स सर्वथोपक्रान्तः, न तु धार्ष्ट्यभूमिः प्रकृष्टैरस्तदजिनरत्नं दर्शयिष्यति' इति राज्ञे विज्ञाप्य 'चित्रमेनं [2]हनिष्यसि । तथा च सत्यर्थः सिद्ध्यति, रहस्यं च न स्रवति' इति मयोक्ते सोऽतिहृष्टः प्रतिपद्य 'मामेव त्वदुपप्रलो-भने नियुज्य बहिरवस्थितः । प्रा[3]प्तमितः परं चिन्त्यताम्' इति । प्रीतेन च मयोक्तम्—'मदुक्तमल्पम्, त्वन्नय एवात्र भूयान् । आनयैनम्' इति । अथानीतेनामुना मन्मोचनाय शपथः कृतः, मया च रहस्यानिर्भेदाय । विनिगडीकृतश्च स्नानभोजनविलेप-

---

पदचन्द्रिका ।

यत्तास्मदधीना । 'अधीनो निघ्न आयत्तः' इत्यमरः । परिजनः सेवकलोकः । रहस्यं गोप्यम् । न भेत्स्यति न प्रकटं करिष्यति । **अस्तीति** । अन्यतम एकः । किमिति न लभ्यते किमिति न प्राप्यते । निरदिक्षन्निर्दिष्टवान् । तेन चौरेण सह । अभिसंधाय । प्रतिज्ञायेत्यर्थः । सिद्धेऽर्थे कार्ये संपन्ने । निगडयित्वा बद्ध्वा । उपक्रान्तश्चिकित्सितः । धार्ष्ट्यभूमिर्धृष्टतरः । चित्रमनेकप्रकारम् । हनिष्यसि मारयि-ष्यसि । न स्रवति न प्रकटीकरोति । प्रतिपद्याभ्युपगम्य । त्वदुपप्रलोभने त्वद्वशी-करणे । प्राप्तं कर्तव्यम् । 'प्राप्तं युग्यं च कर्तव्यम्' इति वैजयन्ती । त्वन्नय एव त्वन्नीतिरेव । **आनयैनमिति** । एनं कान्तकम् । रहस्यानिर्भेदाय गोप्यस्याप्रक-

भूषणा ।

क्षन्निर्दिष्टवान् । **यद्येवमेहीति** । तस्यैव प्रलोभनायेति शेषः । तत्प्रकारमाह—**त्वयेत्यादिना** । उपक्रान्तश्चिकित्सितः । प्रतिपद्याभ्युपगम्य । मदुक्तमिति शेषः । प्राप्तरूपं च कर्तव्यम् । 'प्राप्तं युग्यं च कर्तव्यम्' इति वैजयन्ती । त्वन्नय-

लघुदीपिका ।

कित्सितः । प्रतिपद्याभ्युपगम्य । प्राप्तं कर्तव्यम् । 'प्राप्तं युग्यं च कर्तव्यम्' इति

---

पाठा०–१ 'संधाय'. २ 'घातयिष्यसि'. ३ 'प्राप्तरूपम्'.

नान्यनुभूय नित्यान्धकारात्काराभित्तिकोणादारभ्योरगास्येन सुरङ्गामकरवम्। अचिन्तयं चैवम्—'हन्तुमनसैवामुना मन्मोचनाय शपथः कृतः। तदेनं हत्वापि नासत्यवाददोषेण स्पृश्ये' इति। निष्पततश्च मे निगडनाय प्रसार्यमाणपाणेस्तस्य पादेनोरसि निहत्य पतितस्य तस्यैवासिधेन्वा शिरो न्यकृन्तम्। अकथयं च शृगालिकाम्—'भण भद्रे, कथंभूतः कन्यापुरसंनिवेशो[1] महानयं प्रयासो मा वृथैव भूत्। अमुत्र किंचिच्चोरयित्वा निवर्तिष्ये' इति। तदुपदर्शितविभागे[2] चावगाह्य कन्यान्तःपुरं प्रज्वलत्सु मणिप्रदीपेषु नैकक्रीडाखेदसुप्तस्य परिजनस्य मध्ये महितमहार्घरत्नप्रसुप्तसिंहा[3]कारदन्तपादे हंसतूलगर्भशय्योपधानशालिनि[4] कुसुमलवच्छुरित-

---

पदचन्द्रिका।

टीकरणाय विनिगडीकृतः। मुक्त इत्यर्थः। नित्यान्धकारादखण्डतमसः। उरगास्येन फणिमुखाकारखननसाधनेन। अचिन्तयं चैवमेवं वक्ष्यमाणं चिन्तितवान्। हन्तुमनसैव मन्मारणनिश्चितचेतसा। एनं कान्तकम्। निष्पततो निर्गच्छतः। तस्यैव कान्तकस्यैव। असिधेन्वा छुरिकया। 'छुरिका चासिधेनुका' इत्यमरः। न्यकृन्तं कृत्तवानस्मि। भण। कथयेत्यर्थः। संनिवेशः। संस्थानम्। 'संस्थानं संनिवेशे च स्वरूपे च निगद्यते' इति वररुचिः। अयं प्रयासः सुरङ्गकरणक्लेशः। मा भूत्। 'न माङ्योगे' (६।४।७४) इत्यडागमाभावः। अमुत्र कन्यापुरे। तदुपदर्शितविभागे शृगालिकाकथितप्रदेशे। नैकक्रीडा बहुक्रीडा। महितानि स्थूलानि महार्घाणि बहुमूल्यानि रत्नानि तद्युक्ताः प्रसुप्तसिंहाकारा दन्तपादा यस्येति तस्मिन्। हंसतूलः पक्षिपक्ष्माणि गर्भे यस्या एवंविधा शय्यास्तरणम्। उपधानमुपबर्हः। एवमेवामरः। 'उशी' इति भाषाप्रसिद्धम्। कुसुमलवैश्छुरितो मिश्रितः पर्यन्तो य-

भूषणा।

एवात्र भूयान्। नयो नीतिर्भूयसीत्यर्थः। उरुगास्येन फणिमुखेन। निष्पततो निर्गच्छतः। असिधेन्वा छुरिकया। 'छुरिका चासिधेनुका' इत्यमरः। संस्थानं संनिवेशः। 'संस्थानं संनिवेशे च स्वरूपे च निगद्यते' इति वररुचिः।

लघुदीपिका।

वैजयन्ती। उरगास्येन फणिमुखेन। निष्पततो निर्गच्छतः। असिधेन्वा छुरिकया, संस्थानं संनिवेशः। 'संस्थानं संनिवेशे च स्वरूपे च निगद्यते' इति वररुचिः।

---

**पाठा०—१ 'कन्यापुरसंस्थानम्'. २ 'विभागम्'; 'विभागः'. ३ 'महार्हरत्नप्रत्युप्त', 'महति महार्हरत्नप्रत्युप्त'. ४ 'गर्भकोमलशय्या'.**

पर्यन्ते पर्यङ्कतले दक्षिणपादपार्ष्ण्यधोभागानुवलितेतरचरणाग्रपृष्ठम्, ईषद्विवृतमधुरगुल्फसंधि, परस्पराश्लिष्टजङ्घाकाण्डम्, आकुञ्चितकोमलोभयजानु, किंचिद्वेल्लितोरुदण्डयुगलम्, अधिनितम्बस्रस्तमुक्तैकभुजलताग्रपेशलम्, अपाश्रयान्तनिमिताकुञ्चितेतरभुजलतोत्तानतलकरकिसलयम्, आभुग्नश्रोणिमण्डलम्, अतिश्लिष्टचीनांशुकान्तरीयम्, अनतिवलिततनुतरोदरम्, अतनुतरनिः-

### पदचन्द्रिका।

स्येति। पर्यङ्कः पल्यङ्कः। 'शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः' इत्यमरः। पार्ष्णिः पादमूलम्। 'पार्ष्णिः पाश्चात्यभागेऽपि पादमूलोन्मदस्त्रियोः' इति विश्वः। अनुवलितं संवृत्तम्। 'संवृत्तः स्यात्संवलितो भिन्नोऽनुवलितोऽपि च' इति बोपालितः। इतरचरणो वामचरणः। गुल्फं घुटिका। 'तद्ग्रन्थी घुटिके गुल्फौ' इत्यमरः। जङ्घा प्रसिद्धा। काण्डं स्तम्भः। 'कुस्थिते रहसि स्तम्भे काण्डं वर्गेऽप्युदाहृतम्' इति विश्वः। आकुञ्चितं संकुचितम्। वेल्लितं वक्रितम्। एवमेव वैजयन्ती। अपाश्रयः शिरोभागः। तथैव वैजयन्ती। निमितं निक्षिप्तम्। 'डुमिञ् प्रक्षेपणे'। आभुग्नमीषत्कुटिलम्। चीनांशुकस्य चीनदेशीयवस्त्रस्य। अन्तरीयमधोवस्त्रम्। 'अन्तरीयोपसंव्यानपरिधानान्यधोंशुके' इत्यमरः। अनतिवलितं नातिप्रह्वम्।

### भूषणा।

विभागः प्रदेशः। छुरितः शोभितः। पर्यङ्कः शयनम्। 'शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः' इत्यमरः। पार्ष्णिः। 'तद्ग्रन्थी घुटिके गुल्फौ पुमान्पार्ष्णिस्तयोरधः' इत्यमरः। अनुवलितं संवृत्तम्। 'संवृत्तः स्यात्संवलितो भिन्नोऽनुवलितोऽपि च' इति बोपालितः। ग्रन्थिके घुटिके। 'तद्ग्रन्थी घुटिके गुल्फौ'। वेल्लितं वक्रितम्। 'वेल्लितं वक्रितं समे' इति वैजयन्ती। अधिनितम्बम्। विभक्त्यर्थेऽव्ययीभावः। निमितं निक्षिप्तम्। 'डुमिञ् प्रक्षेपणे'। आभुग्नमीषत्कुटिलम्। 'आभुग्नं कुटिलं भुग्नम्' इत्यमरः। चीनांशुकं वस्त्रम्। अन्तरीयमधोंशुकम्। 'अन्तरीयोपसंव्यानपरिधानान्यधोंशुके' इत्यमरः। नातिवलितमीषद्वलितम्।

### लघुदीपिका।

विभागः प्रदेशः। पर्यङ्कः। 'शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः'। अनुवलितं संवृत्तम्। 'संवृत्तः स्यात्संवलितो भिन्नोऽनुवलितोऽपि च' इति बोपालितः। 'वेल्लितं वक्रितं समे' इति वैजयन्ती। निमितं निक्षिप्तम्। 'डुमिञ् प्रक्षेपणे'। आभुग्नमीषत्कुटिलम्। 'भुज कौटिल्ये'। 'अन्तरीयोपसंव्यानपरिधानान्यधोंशुके'। अन'

**पाठा०**–१ 'अनुवेल्लित'. २ 'विवृत्त'. ३ 'मधुरग्रन्थिके'. ४ 'निहित'. 'निमित्त'. ५ 'उत्तरीयम्'. ६ 'नातिवलित'. ७ 'अणुतर'.

श्वासारम्भकम्पमानकठोरकुचकुड्मलम्, आतिरश्चीनबन्धुरशिरोधरोद्देशदृश्यमाननिष्टप्ततपनीयसूत्रपर्यस्तपद्मरागरुचकम्, अर्धलक्ष्याधरकर्णपाशनिभृतकुण्डलम्, उपरिपरावृत्तश्रवणपाशरत्नकर्णिकाकिरणमञ्जरीपिञ्जरितविषमव्याविद्धाशिथिलशिखण्डबन्धम्, आत्मप्रभापटलदुर्लक्ष्यपाटलोत्तराधरविवरम्, गण्डस्थलीसंक्रान्तहस्तपल्लवदर्शितकर्णावतंसकृत्यम्, उपरिकपोलादर्शतलनिषिक्तचित्रवितानपत्रजातिजनितविशेषकक्रियम्, आमीलितलोचनेन्दीवरम्, अविभ्रान्तभ्रूपताकम्, उद्भिद्यमानश्रमजलपुलकभिन्नशिथिलचन्दनतिलकम्,

पदचन्द्रिका ।

तनुतरमतिकृशम् । अतनुतरो महान् । आ ईषत्तिरश्चीनो वक्रः । बन्धुरः सुन्दरः । निष्टप्तं तापितम् । तपनीयं सुवर्णम् । 'तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्वुरम्' इत्यमरः । सूत्रं तन्तुः । रुचकोऽङ्गुलिकामणिः । एवमेव वैजयन्ती । अधरोऽधः 'अधस्तादपि चाधरः' इत्यमरः । परावृत्तः समुत्तानः । एवमेव वैजयन्ती । कर्णिका कर्णभूषणम् । 'कर्णिका तालपत्रं स्यात्कुण्डलं कर्णवेष्टनम्' इत्यमरः । पिञ्जरीतं पिङ्गीकृतम् । विषममयथार्थकम् । व्याविद्धो बद्धः । शिखण्डः केशकलापः । पाटलः श्वेतरक्तः । उत्तराधर उत्तरौष्ठः । गण्डस्थली गल्लप्रदेशस्तत्र संक्रान्तो मिलितो हस्तपल्लवः करपल्लवः । कपोल एवादर्शतलम् । निषिक्तं प्रतिबिम्बितं यच्चित्रवितानमुल्लोचः । 'अस्त्री वितानमुल्लोचः' इत्यमरः । स एव पत्रजातिः पत्रक्रिया तया जनितोत्पादिता विशेषकक्रिया तिलकादिक्रिया । 'तमालपत्रतिलकचित्रकाणि विशेषकम्' इत्यमरः । अविभ्रान्ता निश्चला । उद्भिद्यमानं

भूषणा ।

श्वासारम्भः श्वासावृत्तिः । रुचकः । 'रुचको मङ्गलद्रव्ये ग्रीवाभरणदन्तयोः' इति विश्वप्रकाशः । अधरकर्णपाशः शय्यालग्नः कर्णः । अधस्ताद्भूतः कर्णपाशः । 'अधस्तादपि चाधरः' । इदानीं द्वितीयकर्णविषयकमाह—**उपरीति** । परावृत्तः । समुत्तानः । कर्णिका कर्णभूषणम् । एवमेवामरः । विषममयथार्थकम् । व्याविद्धं बद्धम् । सम्यक्तया न बद्धः तादृशः शिखण्डबन्धः । संक्रान्तो बिम्बितः । 'संक्रान्तो बिम्बितः समौ' इति वैजयन्ती । निषिक्तं प्रतिबिम्बितम् ।

लघुदीपिका ।

तिवलितमनतिप्रह्वम् । निःश्वासारम्भो निःश्वासावृत्तिः । रुचकः । 'रुचको गुलिकामणिः' । अधरकर्णपाशोऽधस्ताद्भूतकर्णपाशः । 'अधस्तादपि चाधरः' । 'परावृत्तः समुत्तानः' इति वैजयन्ती । कर्णिका कर्णभूषणे । विषममयथार्थकम् । 'संक्रान्तो बिम्बितः समौ' इति वैजयन्ती । पत्रक्रिया पत्रजातिः । पुलकः । 'पुलको बिन्दुरो-

पाठा०—१ 'शिरोद्देश'. २ 'किरणं'. ३ 'व्याविद्धाशिथिल'. ४ 'कपोलादेशतलनिषक्त'. ५ 'पत्रक्रिया'.

आननेन्दुसंमुखालकलतं च विश्रब्धप्रसुप्तामतिधवलोत्तरच्छदनिर्मग्न[1]-प्रायैकपार्श्वतया चिरविलसनखेदनिश्चलां शरदम्भोधरोत्सङ्गशायिनी-मिव सौदामिनीं राजकन्यामपश्यम् । दृष्ट्वैव स्फुरदनङ्गरागश्चकित-श्चोरयितव्यनिःस्पृहस्तयैव तावच्चौर्यमाणहृदयः किंकर्तव्यतामूढः क्षणमतिष्ठम् । अतर्कयं च—'न चेदिमां वामलोचनामाप्नुयां न मृष्यति मां जीवितुं वसन्तबन्धुः । असंकेतितपरामृष्टा चेयमति[2]-बाला व्यक्तमार्तस्वरेण निहन्यान्मे मनोरथम् । ततोऽहमेवाघ्नीये[3] ।

---

पदचन्द्रिका ।

जायमानम् । श्रमजलं घर्मस्तस्य पुलका बिन्दवः । 'पुलको बिन्दुरोमाञ्चयोरपि' इति वैजयन्ती । अलकलता केशवल्लिः । इत्येतानि क्रियाविशेषणानि । विश्रब्ध-प्रसुप्तां विश्वासकृतनिद्राम् । अतिधवलोऽतिश्वेतो य उत्तरच्छद आस्तरणपटः । निमग्नप्रायः । निमग्न इवेत्यर्थः । 'मन्ये शङ्के ध्रुवं प्राय इति नानार्थवाचकाः' इत्य-भिधानात् । विलसनं स्फुरणम् । शरदम्भोधरः शरन्मेघः । उत्सङ्गो मध्यम् । 'मध्योन्नतिः समुत्सङ्गः' इति वैजयन्ती । सौदामिनी विद्युत् । 'तडित्सौदामिनी विद्युत्' इत्यमरः । **दृष्ट्वैवेति** । स्फुरद्द्विगुणीभूतोऽनङ्गरागो यस्येति । **किंकर्तव्य-**तामूढोऽग्रे किं कर्तव्यमिति ज्ञानरहितः । **अतर्कयमिति** । मृष्यति सहते । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् । वसन्तबन्धुर्मदनः । असंकेतितपरामृष्टा-कृतसंकेता सती परामृष्टा स्पृष्टा । आर्तस्वरेण पीडितस्वरेण । निहन्यात् । दूरी-करिष्यतीत्यर्थः । आघ्नीये हतो भविष्यामि । लिङ्युत्तमपुरुषैकवचनम् । 'आङो

भूषणा ।

पत्रक्रिया पत्रजातिः । विस्रब्धं विश्वस्तम् । 'समौ विश्रम्भविश्वासौ' इत्यमरः । विलसनं स्फुरणम् । उत्सङ्गो मध्यः । 'मध्योर्ध्वदेशावुत्सङ्गौ' इति वैजयन्ती । मृष्यति सहते । 'वर्तमानसामीप्ये वर्तमानवद्वा' (३।३।१३१) इति लट् । वसन्तबन्धुः कामः । असंकेतितपरामृष्टा सूचितैरस्पृष्टा । अतिवेलं गाढम् । 'अतिबाला' इति पाठे-ऽतिपदमधिकं तस्यां रसानुत्पत्तेः । आघ्नीये । लिङ्युत्तमपुरुषैकवचनम् ।

लघुदीपिका ।

माञ्चयोरपि' । विस्रब्धं विश्वस्तम् । निर्भयमित्यर्थः । विलसनं स्फुरणम् । उत्सङ्गो मध्यः । 'मध्योन्नतौ समुत्सङ्गौ' इति वैजयन्ती । मृष्यति सहते । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् । असंकेतितपरामृष्टाकृतसंकेतैव स्पृष्टा । 'संपर्कक्रिया तु संकेतः' इत्यजयः । आघ्नीये । लिङ्युत्तमपुरुषैकवचनम् । 'आङो यमहनः' (१।३।१२८)

---

पाठा०–१ 'निमग्नां'. २ 'अतिवेलम्'. ३ 'आघ्नीय'.

तदियमत्र प्रतिपत्तिः' इति नागदन्तलग्ननिर्यासकल्कवर्णितं फलकमादाय मणिसमुद्गकाद्वर्णवर्तिकामुद्धृत्य तां तथाशयानां तस्याश्च मामाबद्धाञ्जलिं चरणलग्नमालिखमार्यां चैताम्—

'त्वामयमाबद्धाञ्जलि दासजनस्तमिममर्थमर्थयते ।
स्वपिहि मया सह सुरतव्यतिकरखिन्नैव मा मैवम् ॥'

हेमकरण्डकाच्च वासताम्बूलवीटिकां कर्पूरस्फुटिकां पारिजातकं चोपयुज्यालक्तकपाटलेन तद्रसेन सुधाभित्तौ चक्रवाकमिथुनं निरष्ठीवम् ।

पदचन्द्रिका ।

यमहनः' (१।३।१२८) इत्यात्मनेपदम् । तदियमत्र प्रतिपत्तिः । इदमत्र कर्तव्यमित्यर्थः । नागदन्तोऽवलम्बनकाष्ठम् 'खुंटी' इति भाषायां प्रसिद्धम् । 'नागदन्तो द्विपरदे गृहान्निर्गतदारुणि' इति विश्वः । तत्र लग्नं संस्थापितम् । निर्यासकल्केन चिक्कणद्रव्यक्काथेन वर्णितम् । वर्णो रक्तादिः स संजातो यस्मिन्निति तम् । फलकं काष्ठपट्टिकाम् । हिङ्गुलरक्तपट्टिकमिति यावत् । मणिसमुद्गकात् रत्नसंपुटकात् । 'समुद्गकः संपुटकः' इत्यमरः । वर्तिकां तूलिकाम् । 'तूलिका वर्णवर्तिका' इति वैजयन्ती । तथाशयनां पूर्वोक्तप्रकारेण निद्रां कुर्वाणाम् । चरणलग्नं पादलग्नम् । अलिखमार्यां च । आर्यालक्षणं मात्रावृत्तरत्नाकरोक्तम्—'लक्ष्मैतत्सप्तगणा गोपेता भवति नेह विषमे जः' इति । **त्वामयमिति** । अयं दासजनो मद्रूपः सेवकजनः । आबद्धाञ्जलि कृताञ्जलीति क्रियाविशेषणम् । त्वामिममर्थम् । अर्थयते प्रार्थयते । द्विकर्मकोऽयम् । सुरतस्य व्यतिकरः संसर्गस्तेन खिन्नेव मया सह स्वपिहि निद्रां कुरु । एवं सुरतखेदं विना । मामेति । 'अमानोनाः प्रतिषेधे' इति वचनात् । आदरे वीप्सा । हेमकरण्डकात्सुवर्णपेटकात् । वासताम्बूलवीटिकां सुवासितनागवल्लीपत्रवीटिकाम् । कर्पूरस्फुटिकां कर्पूरखण्डम् । पारिजातकं सुगन्धखदिरसारम् । उपयुज्य भुक्त्वा । अलक्तकपाटलेन यावकरक्तेन । तद्र-

भूषणा ।

'आङो यमहनः' (१।३।१२८) इत्यात्मनेपदम् । 'हन्तेर्हिंसायां वा ध्नीभावो वाच्यः' (वा. ४६२१) इति ध्नीभावः । नागदन्ता दन्तकाः । 'नागदन्तास्तु दन्तकाः' इति हैमः । चूलिका वर्णपट्टिका । वर्तिका लेखनसाधनम् । करण्डः पेटकः । वासताम्बूलवीटिकाम् । 'नागवल्लीपलाशानां तैलाक्तानां रसालतः । वेष्टनं वीटिका प्रोक्ता चन्द्रमन्दारवर्णयुक्' इति वात्स्यायनः । कर्पूरस्फुटिकां कर्पूरकर्णिकाम् । अलक्तकपाट-

लघुदीपिका ।

इत्यात्मनेपदम् । 'नागदन्तो विलम्बनम्' इति वैजयन्ती । 'तूलिका वर्णपट्टिका' । करण्डः पेटकः । पेटका वासताम्बूलवीटिका । 'नागवल्लीपलाशानां तैलाक्तानां रसालतः । वेष्टनं वीटिका प्रोक्ता चन्द्रमन्दारवर्णयुक् ॥' इति वात्स्यायनः । व्यति-

पाठा०—१ 'निर्यासवालुकाकल्कवर्णितफलकं'. २ 'चूलिकावर्तिकाम्'. ३ 'मदन'. ४ 'करण्डात्'.

अङ्गुलीयकविनिमयं च कृत्वा कथंकथमपि निरगाम् । सुरङ्गया च प्रत्येत्य बन्धागारं तत्र बद्धस्य नागरिकवरस्य सिंहघोषनाम्नस्तेष्वेव दिनेषु मित्रत्वेनोपचरितस्य 'एवं मया हतस्तपस्वी कान्तकः, तत्त्वया प्रतिभिद्य रहस्यं लब्धव्यो मोक्षः' इत्युपदिश्य सह शृगालिकया निरक्रामिषम् । नृपतिपथे च समागत्य रक्षिकपुरुषैरगृह्ये । अचिन्तयं च—'अलमस्मि जवेनापसर्तुमनामृष्ट एवैभिः । एषा पुनर्वराकी गृह्येत । तदिदमत्र प्राप्तरूपम्' इति तानेव चपलमभिपत्य स्वपृष्ठसमर्पितकूर्परः पराङ्मुखः स्थित्वा 'यद्यहमस्मि तस्करः, भद्राः, बध्नीत माम् । युष्माकमयमधिकारः, न पुनरस्या वर्षीयस्याः' इत्यवादिषम् । सा तु तावतैवोन्नीतमदभिप्राया तान्स-

पदचन्द्रिका ।

सेन ताम्बूलवीटिकारसेन । सुधाभित्तौ चूर्णकुड्ये । चक्रवाकमिथुनं निरष्ठीवमम्बूकृतवान् । विनिमयो व्यत्ययः । बन्धनागारं प्रत्येत्य आगत्य । नागरिकवरस्य नागरिकश्रेष्ठस्य । उपचरितस्य सेवितस्य । तपस्वी शोच्यः । लब्धव्यः प्राप्तव्यः । मोक्षो मोचनम् । समागत्यागत्य । अचिन्तयं च चिन्तितवानस्मि । अपसर्तुं पलाय्य गन्तुम् । अलं समर्थः । एभी रक्षकैः । अनामृष्टोऽस्पृष्टः । एषा वराकी दीना शृगालिका । गृह्येत धृता भविष्यति । तदिदमत्र प्राप्तरूपं तस्मादिदं वक्ष्यमाणं प्रशस्तं कर्तव्यम् । तानेव । रक्षकान्प्रतीत्यर्थः । चपलं शीघ्रम् । 'सत्वरं चपलं तूर्णम्' इत्यमरः । स्वपृष्ठे समर्पितौ निहितौ कूर्परौ येनेति सः । युष्माकं भवताम् । अयमधिकारस्तस्करबन्धनरूपः । वर्षीयस्या वृद्धायाः । **सा त्विति** । सा शृगालिका । तावतैव तावन्मात्रेणैव । उन्नीतस्तर्कितः मद-

भूषणा ।

·लमलक्तं पाटलं यस्मात् । अत्यन्तरक्तमित्यर्थः । 'श्वेतरक्तस्तु पाटलः' इत्यमरः । सुधाभित्तौ सुधासंस्कृतभित्तौ । 'सुधा लेपोऽमृतं स्नुही' इत्यमरः । व्यतिकरो विनिमयः । तपस्वी शोच्यः । प्रतिभिद्य प्रकाश्य । समापत्य संगम्य । अनामृष्टोऽस्पृष्टः । कूर्परः कफोणिः । 'स्यात्कफोणिस्तु कूर्परः' इत्यमरः । वर्षीयस्या वृद्धायाः । उन्नीतमुन्नमितम् । अनाहतं नवीनवस्त्रम् । 'अनाहतं निष्प्रवाणि

लघुदीपिका ।

करो विनिमयः । 'सुरङ्गा तु स्थलान्तरम्' । तपस्वी शोच्यः । प्रतिभिद्य प्रकाश्य । अनामृष्टोऽस्पृष्टः । उन्नीतमुन्नमितम् । 'अनाहतं निष्प्रवाणि तन्त्रकं च

पाठा०–१ 'व्यतिकरम्'. २. 'समापत्य'.

प्रणाममभ्येत्य 'भद्रमुखाः, ममैष पुत्रो वायुग्रस्तश्चिरं चिकित्सितः। पूर्वेद्युः प्रसन्नकल्पः प्रकृतिस्थ एव जातः । जातास्थया मया बन्धनान्निष्क्रमय्य स्नापितोऽनुलेपितश्च परिधाप्य निष्प्रवाणियुगलमभ्यवहार्य परमान्नमौशीरेऽद्य कामचारः कृतोऽभूत् । अथ निशीथे भूय एव वायुनिघ्नः 'निहत्य कान्तकं नृपतिदुहित्रा रमेयम्' इति रंहसा परेण राजपथमभ्यपतत् । निरूप्य चाहं पुत्रमेवंगतमस्यां वेलायामनुधावामि । तत्प्रसीदत । बद्ध्वैनं मह्यमर्पयत' इति यावदसौ क्रन्दति तावदहं 'स्थविरे, केन देवो मातरिश्वा बद्धपूर्वः ? किमेते काकाः शौङ्गेयस्य मे निग्रहीतारः ? शान्तं पापम्' इत्यभ्यधावम् । असावप्यमीभिः 'त्वमेवोन्मत्ता यातुन्मत्त इत्यु-

पदचन्द्रिका ।

भिप्रायो मदाशयः । अभ्येत्य संमुखमेत्य । वायुग्रस्तो वातुलः । प्रकृतिस्थः स्वभावस्थः । जातास्थया जातादरया । निष्प्रवाणियुगलमनाहतवस्त्रयुगलम् । 'अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरे' इत्यमरः । अभ्यवहार्य भोजयित्वा । परमान्नं पायसम् । एवमेवामरः । औशीरे शयनासने । 'औशीरं शयनासनम्' इति हलायुधः । कामचारः स्वेच्छाचारित्वम् । **अथेति** । निशीथेऽर्धरात्रे । 'अर्धरात्रनिशीथौ द्वौ' इत्यमरः । वायुनिघ्नो वातायत्तः । 'अधीनो निघ्न आयत्तः' इत्यमरः । रमेयं क्रीडां करोमीति । रंहसा वेगेन । बद्ध्वा बन्धनं कृत्वा । मातरिश्वा वायुः । 'मातरिश्वा सदागतिः' इत्यमरः । बद्धपूर्वः पूर्वं बद्ध इति तथा । शौङ्गेयस्य । 'तिलच्छदस्तु शौङ्गेयो विहंगारातिरित्यपि' इति वैजयन्ती । 'ससाणा' इति प्रसिद्धः । तद्बन्धने काकानामसामर्थ्यमिति भावः । **असाविति** ।

भूषणा ।

तन्त्रकं च नवाम्बरे' इत्यमरः । परमान्नं पायसम् । 'परमान्नं तु पायसम्' इत्यमरः । औशीरं शयनासनम् । एवमेवामरः । कामचारो यथेष्टसंचारः । निघ्नः अधीनः । 'अधीनो निघ्न आयत्तः' इत्यमरः । **निहत्येत्यादि** । सत्यभाषणेन न मे पापम् । अनयैवास्य बन्धुना या(वा)स्मान्क्षोभयितुमुच्यत इत्यहमपि वायुनिघ्नैवैतन्मते भविष्यामीति मां नैव घ्नीयुरिति भावः । 'तिलच्छदस्तु शौङ्गेयो वि-

लघुदीपिका ।

नवाम्बरे' । 'औशीरं शयनासनम्' । कामचारो दृतचारः । निघ्नः परवशः शौङ्गेयः । 'तिलच्छदस्तु शौङ्गेयो विहंगारातिरित्यपि' इति वैजयन्ती । कदर्थिता

पाठा०-१ 'अनाहतयुगलम्'.

न्मत्तं मुक्तवती । कस्त्वमिदानीं बध्नाति' इति निन्दिता कदर्थिता रुदत्येव मामन्वधावत् । गत्वा च रागमञ्जरीगृहं चिरविरहखेदवि-[1]ह्वलामिमां बहुविधं समाश्वास्य तं निशाशेषमनयम् । प्रत्यूषे पुनरुदारकेण च समगच्छे ।

अथ भगवन्तं मरीचिं वेशकृच्छ्रादुत्थाय पुनः [2]प्रतिततप्ततपःप्रभावप्रत्यापन्नदिव्यचक्षुषमुपसंगम्य तेनास्म्येवंभूतत्वद्दर्शनमवगमितः । सिंहघोषश्च कान्तकापचारं निर्भिद्य तत्पदे प्रसन्नेन राज्ञा प्रतिष्ठापितः । तेनैव चारकसुरङ्गापथेन कन्यापुरप्रवेशं भूयोऽपि मे समपादयत् । समगंसि चाहं शृगालिकामुखविसृतवार्तानुरक्तया राजदुहित्रा । तेष्वेव दिवसेषु चण्डवर्मा सिंहवर्मावधूतदुहितृप्रार्थनः कुपितोऽभियुज्य पुरमवारुणत् । अमर्षणश्चाङ्गराजो यावदरिः [3]पार-

पदचन्द्रिका ।

असौ शृगालिका । कदर्थिता निन्दिता । 'निन्दिता क्लेशने चैव वर्णने च कदर्थने' इति सज्जनः । **गत्वा चेति** । चिरं बहुकालं यो विरहखेदो वियोगदुःखं तेन विह्वलाम् । बहुविधं बहुप्रकारम् । निशाशेषं रात्रिशेषम् । प्रत्यूषे प्रातःकाले । 'प्रत्यूषोऽहर्मुखम्' इत्यमरः । उदारकेण मित्रेण ॥

**अथेति** । वेशकृच्छ्राद्वेश्याकष्टात् प्रतिततं यत्तपस्तस्य प्रभावात्सामर्थ्यात्प्रत्यापन्नं प्राप्तं दिव्यं चक्षुर्येनेति तथा तम् । उपसंगम्य मिलित्वा । तेन मरीचिना । एवंभूतममुना प्रकारेण । त्वद्दर्शनम् । तच्छब्देन राजवाहनस्योपस्थितिः । अवगमितो बोधितः । सिंहघोषः कारागृहमित्रम् । कान्तकापचारं कारापलपकारम् । निर्भिद्य प्रकटीकृत्य । तत्पदे कान्तकस्थाने । तेनैव मत्कृतमार्गेण । समगंसि मिलित इत्यर्थः । शृगालिकामुखविसृतवार्तया शृगालिकावदननिर्गतगोष्ठ्या । अनुरक्तयासक्तया । **तेष्वेवेति** । चण्डवर्मा राजवाहनबन्धनकर्ता । सिंहवर्मणाङ्गदेशस्थचम्पानगरराज्ञा । अभियुज्याभिभूय । 'अभियोगस्त्वभिभवः' इति । अवारुणत् । रुरोधेत्यर्थः ।

भूषणा ।

हञ्जारातिरित्यपि' इति वैजयन्ती । शान्तं पापमित्यनाकाङ्क्षं । कदर्थिता निन्दिता । 'निन्दितः क्लेशने चैव वर्णने न कदर्थिते' इत्यजयः । विक्लवो विह्वलः । 'विक्लवो विह्वलः स्यात्' इत्यमरः । उपसंगम्येत्यस्यावगमित इत्यवगमेऽन्वयः । अतः समानकर्तृकत्वम् । अभियुज्य । 'अभियोगस्त्वभिभवः' । अवारुणद्रुद्धवान् । प्राकारं

लघुदीपिका ।

'निन्दिता क्लेशने चैव वर्णने च कदर्थिता' इति सज्जनः । 'विक्लवो विह्वलः स्यात्तु' । अभियुज्य । 'अभियोगस्त्वभिभवः' । अवारुणद्रुद्धवान् । सालः प्राकारः ।

पाठा०—१ 'विक्लवाम्'. २ 'प्रतिपन्न'. ३ 'पारिग्रामिकं'.

ग्रामिकं विधिमाचिकीर्षति तावत्स्वयमेव प्राकारं[1] निर्भिद्य प्रत्यासन्नानपि सहायानप्रतीक्षमाणो निर्गत्याभ्यधिकबलेन विद्विषा महति संपराये भिन्नवर्मा[2] सिंहवर्मा बलादगृह्यत । अम्बालिकां[3] च बलवदभिगृह्य चण्डवर्मणा हठात्परिणेतुमात्मभवनमनीयत । कौतुकं च स किल क्षपावसाने विवाह इत्यबध्नात् । अहं च धनमित्रगृहे तद्विवाहायैव पिनद्धमङ्गलप्रतिसरस्तमेवमवोचम्—'सखे, समापतितमेवाङ्गराजाभिसरं राजमण्डलम् । सुगूढमेव संभूय पौरवृद्धैस्तदुपावर्तय । उपावृत्तश्च कृत्तशिरसमेव[4] शत्रुं द्रक्ष्यसि' इति । 'तथा' इति तेनाभ्युपगते गतायुषोऽमुष्य भवनमुत्सवाकुलमुपसमाधीयमानपरिणयोपकरणमितस्ततः प्रवेशनिर्गमप्रवृत्तलोकसंबाधमलक्ष्यशस्त्रिकः सह प्रविश्य मङ्गलपाठकैरम्बालिकापाणिपल्लवमग्नौ

## पदचन्द्रिका ।

अमर्षणः सकोपः । अङ्गराजः सिंहवर्मा । प्राकारमावरणभित्तिम् । निर्भिद्य भेदयित्वा । प्रत्यासन्नान् समीपवर्तिनः । अभ्यधिकबलेन बहुतरबलेन । विद्विषा चण्डवर्मणा । संपराये सङ्ग्रामे । भिन्नवर्मा भिन्नतनुत्रः । 'तनुत्रं वर्म दंशनम्' इत्यमरः । सिंहवर्मागृह्यत गृहीतः । अम्बालिकां सिंहवर्मदुहितरम् । कौतुकं मङ्गलसूत्रम् । स किल चण्डवर्मा । अबध्नात् । बबन्धेत्यर्थः । अहमपहारवर्मा । तद्विवाहायाम्बालिकाविवाहाय । पिनद्धमङ्गलप्रतिसरो बद्धमङ्गलहस्तसूत्रः । 'हस्तसूत्रं प्रतिसरः' इति वैजयन्ती । तं धनमित्रम् । सखे मित्र । समापतितं समागतम् । अङ्गराजाभिसरमङ्गराजसहायीभूतम् । सुगूढं सुगुप्तम् । तद्राजमण्डलमुपावर्तय । उपावृत्तश्च पुनरागतः सन् । शत्रुं चण्डवर्माणम् । तेन धनमित्रेण । तथेत्यभ्युपगतेऽङ्गीकृते । गतायुषोऽल्पायुषः । अमुष्य चण्डवर्मणः । उपसमाधीयमानपरिणयोपकरणं संपाद्यमानविवाहोपयुक्तवस्तुजातम् । इतस्ततः सर्वतः । प्रवेशनिर्गमा गतागतानि तत्र प्रवृत्त उपक्रान्तो यो लोकस्तेन संबाधं संकटम् । 'संकटं ना तु संबाधः' इत्यमरः । अलक्ष्यादृश्या शस्त्रिका च्छुरिका यस्येति स तथा । मङ्गलपाठकैर्ब्राह्मणैः

## भूषणा ।

निर्भिद्य निर्गम्याप्रतीक्ष्यमाण इत्यन्वयः । पारग्रामिकम् । 'ग्रामात्पर्यनुपूर्वात्' (४।३।६१) इति ठञ्, 'अव्ययीभावात्' (४।३।५९) इत्येव । सालः प्राकारः । 'प्राकारो वरणः सालः' इत्यमरः । प्रतिसरो हस्तसूत्रम् । 'हस्तसूत्रं प्रतिसरः' । समापतितं समागतम् ।

## लघुदीपिका ।

'प्राकारो वरणः सालः' । 'हस्तसूत्रं प्रतिसरः' । समापतितं समागतम् । अभि-

पाठा०–१ 'सालम्'. २ 'भिन्नमर्मा'. ३ 'अम्बालिका'. ४ 'कृतकृत्यकृत्तशिरसमेव'.

साक्षिण्याथर्वणेन विधिनार्प्यमाणमादित्समानस्यायामिनं बाहुदण्डमाकृष्य च्छुरिकयोरसि प्राहार्षम् । स्फुरतश्च कतिपयानन्यानपि यमविषयमगमयम् । हतविध्वस्तं च तद्गृहमनुविचरन्वेपमानमधुरगात्रीं विशाललोचनामभिनिशाम्य तदालिङ्गनसुखमनुबुभूपुस्तामादाय गर्भगृहमविक्षम् । अस्मिन्नेव क्षणे तवास्मि नवाम्बुवाहस्तनितगम्भीरेण स्वरेणानुगृहीतः' इति ।

श्रुत्वा च स्मित्वा च देवोऽपि राजवाहनः 'कथमसि कार्कश्येन कर्णीसुतमप्यतिक्रान्तः' इत्यभिधाय पुनरवेक्ष्योपहारवर्माणम् 'आचक्ष्व, तवेदानीमवसरः' इत्यभाषत । सोऽपि सस्मितं प्रणम्यारभताभिधातुम्—

इति श्रीदण्डिनः कृतौ दशकुमारचरितेऽपहारवर्मचरितं नाम द्वितीय उच्छ्वासः ।

---

पदचन्द्रिका ।

सह समम् । अग्नौ साक्षिणि सति । अग्निसाक्षिकमित्यर्थः । आथर्वणेन पुरोधसा । 'आथर्वणः पुरोधा स्याच्छान्तिपुष्टिकरो द्विजः' इति कामन्दकः । विधिना विध्युक्तप्रकारेण । अर्प्यमाणं दीयमानम् । आदित्समानस्य ग्रहीतुकामस्य । आयामिनं दैर्घ्यवन्तम् । प्राहार्षं हतवान् । यमविषयं यमदेशम् । 'विषयो देशे' इति निपातः । 'नीवृज्जनपदो देशविषयौ तूपवर्तनम्' इत्यमरः । तद्गृहं चण्डवर्मगृहम् । वेपमानमधुरगात्रीं कम्पमानसुन्दरशरीराम् । अभिनिशाम्य संमुखं दृष्ट्वा । अनुबुभूपुरनुभवितुमिच्छुः । गर्भगृहं वासगृहम् । 'गर्भागारं वासगृहम्' इत्यमरः । **अस्मिन्निति ।** क्षणे समये । नवाम्बुवाहो नूतनमेघस्तस्य स्तनितं गर्जितम् । 'स्तनितं गर्जितं मेघनिर्घोषे रसितादि च' इत्यमरः । कार्कश्येन कर्कशस्य भावस्तेन काठिन्येन । कर्णीसुतः स्तेयशास्त्रकर्ता । सोऽप्युपहारवर्मा । अभिधातुं वक्तुम् ॥

**इति श्रीदशकुमारटीकायां पदचन्द्रिकाभिधायां द्वितीय उच्छ्वासः ॥**

---

**भूषणा ।**

अनभिसरमसहायीभूतम् । 'अनुप्लवः सहायश्चानुचरोऽभिचरः समाः' इत्यमरः । उपावर्तयोपसमीप आवर्तयानय । संभूय संगत्य । आथर्वणः पुरोहितः । 'आथर्वणः पुरोधा स्याच्छान्तिपुष्टिकरो द्विजः' इति कामन्दके । अर्प्यमाणं दीयमानम् । यमविषयं यमदेशम् । 'विषयो देशे' इति निपातः । अभिनिशाम्य दृष्ट्वा ॥

**इति श्रीदशकुमारटीकायां भूषणाभिधायां द्वितीय उच्छ्वासः ॥**

**लघुदीपिका ।**

सरं सहायीभूतम् । संभूय संगत्य । आथर्वणः पुरोहितः । 'आथर्वणः पुरोधा स्याच्छान्तिपुष्टिकरो द्विजः' इति कामन्दके । अर्प्यमाणं दीयमानम् । यमविषयं यमदेशम् । 'विषयो देशे' इति निपातः ॥ **इति द्वितीय उच्छ्वासः ॥**

# तृतीयोच्छ्वासः ।

एषोऽस्मि पर्यटन्नेकदा गतो विदेहेषु । मिथिलामप्रविश्यैव बहिः क्वचिन्मठिकायां विश्रमितुमेत्य कयापि वृद्धतापस्या दत्त-पाद्यः क्षणमलिन्दभूमाववास्थिषि । तस्यास्तु मद्दर्शनादेव किम-प्याबद्धधारमश्रु प्रावर्तत । 'किमेतदम्ब, कथय कारणम्' इति पृष्टा सकरुणमाचष्ट—'जैवातृक, ननु श्रूयते पतिरस्या मिथिलायाः प्रहारवर्मा नामासीत् । तस्य खलु मगधराजो राजहंसः परं मित्रमासीत् । तयोश्च वल्लभे बलशम्बलयोरिव वसुमतीप्रियंवदे सख्यमप्रतिममधत्ताम् । अथ प्रथमगर्भाभिनन्दितां तां च प्रिय-सखीं दिदृक्षुः प्रियंवदा वसुमतीं सह भर्त्रा पुष्पपुरमगमत् ।

---

### पदचन्द्रिका ।

इदानीमुपहारवर्मचरितमभिधातुमुपक्रमते—**एषोऽस्मीति** । पर्यटन्नितस्ततो गच्छन् । एकदैकस्मिन्दिवसे मठिकाल्पमठः । 'मठश्छात्रादिनिलयः' इत्यमरः । दत्तपाद्यो दत्तपादोदकः । 'पाद्यं पादाय वारिणि' इत्यमरः । अलिन्दभूमौ । 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके' इत्यमरः । अवास्थिषि । आबद्धधारमविच्छि-न्नधारम् । अम्ब मातः । सकरुणं करुणासहितम् । जैवातृक आयुष्मन् । 'जैवा-तृकः स्यादायुष्मान्' इत्यमरः । तयो राजहंसप्रहारवर्मणोः । वल्लभे स्त्रियौ । बलश्च शम्बलश्च द्वावप्यसुरौ तयोरिव । एका वसुमती, अपरा प्रियंवदा इत्युभे । अप्रतिममसदृशम् । अधत्तां दधतुः । **अथेति** । तां प्रियसखीं वसुमतीम् । प्रियं-

### भूषणा ।

आलिन्दभूमिर्बहिर्द्वाराग्रवर्तिचतुष्कम् । 'ओटा' इति भाषायां प्रसिद्धम् । 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके' इत्यमरः । **अवास्थिषीति** । 'समवप्रवि–' (१।३।२२) इत्यात्मनेपदम् । किमप्यवशं भृशं वा । जैवातृक आयुष्मन् । 'जैवातृकः स्यादायुष्मान्' इत्यमरः । **बलशम्बरयोरिवेति** । तयोरित्यस्योपमानमि-दम् । बलः शम्बरश्चेति द्वावप्यसुरौ । पुष्पपुरमेतन्नामकं राजहंसनगरम् । मा-

### लघुदीपिका ।

आलिन्दभूमिः । 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके' । किमप्यवशं भृशं वा । 'जैवातृकः स्यादायुष्मान्' । बलः शम्बरश्चेति द्वावसुरौ । जन्यं युद्धम् । 'युद्धमायो-धनं जन्यम्' । लेशतः किंचित् । 'सर्वविभक्त्यर्थे तसिल्वक्तव्यः' । प्रयत्नप्राणितः

---

पाठा०–१ 'शम्बर'.

तस्मिन्नेव च समये मालवेन मगधराजस्य महज्जन्यमजनि । तत्र लेशतोऽपि दुर्लक्षां[1] गतिमगमन्मगधराजः । मैथिलेन्द्रस्तु[2] मालवेन्द्रप्रयत्नप्राणितः स्वविषयं प्रतिनिवृत्तो ज्येष्ठस्य संहारवर्मणः सुतैर्विकटवर्मप्रभृतिभिर्व्याप्तं राज्यमाकर्ण्य स्वस्रीयात्सुह्मपतेर्दण्डावयवमादित्सुरटवीपथमवगाह्य लुब्धकलुप्तसर्वस्वोऽभूत् । तत्सुतेन च कनीयसा हस्तवर्तिना सहैकाकिनी वनचरशरवर्षभयपलायिता वनमगाहिषि । तत्र च मे शार्दूलनखावलीढनिपतितायाः

पदचन्द्रिका ।

वदा प्रहारवर्मस्त्री । भर्त्रा प्रहारवर्मणा सह । पुष्पपुरं वसुमतीभर्तू राजहंसस्य नगरम् । अगमत् । जगामेत्यर्थः । **तस्मिन्निति** । मालवेनान्येन राज्ञा । मगधराजस्य राजहंसस्य । जन्यं युद्धम् । 'युद्धमायोधनं जन्यम्' इत्यमरः । लेशतः किंचित् । सार्वविभक्तिकस्तसिः । मगधराजो राजहंसः । मैथिलेन्द्रस्तु प्रहारवर्मा । मालवेन्द्रप्रयत्नेन प्राणितो जीवितः । स्वविषयमात्मदेशम् । ज्येष्ठस्य भ्रातुः । स्वस्रीयाद्भगिनीपुत्रात् । 'स्वस्रीयो भागिनेयः स्यात्' इत्यमरः । दण्डावयवं सैन्यैकदेशम् । 'दण्डोऽस्त्री शासने राज्ञां हिंसने दमसैन्ययोः' इति भागुरिः । अटवीपथमरण्यमार्गम् । लुब्धका व्याधाः । 'व्याधो मृगवधाजीवो मृगयुर्मृगलुब्धकः' इत्यमरः । तत्सुतेन प्रहारवर्मपुत्रेण । वनचराणां भिल्लानां शरवर्षाद्भयं तेन पलायिता

भूषणा ।

लवेन मालवदेशराजेन सह । जन्यं युद्धम् । 'युद्धमायोधनं जन्यम्' इत्यमरः । लेशतः किंचित् । कथंचिदिति यावत् । कथंचिदपि ज्ञातुं कठिनमित्यन्वयः । 'आद्यादिभ्य उपसंख्यानम्' ( वा. ३३३९ ) इति तसिः । दुर्लक्षितां ज्ञातुमशक्याम् । लेशेन चिह्नेनापि लक्षितुमवगन्तुमशक्याम् । प्रयत्नप्राणितः प्रयत्नेन रक्षितः । गृहीत्वा यथायं जीवेत्तथापवादित इति यावत् । स्वस्रीयो भागिनेयः । 'स्वस्रीयो भागिनेयः स्यात्' इत्यमरः । 'स्वसुश्छः' (४।१।१४३) । दण्डावयवं सैन्यैकदेशम् । 'दण्डोऽस्त्री शासने राज्ञां हिंसने दमसैन्ययोः' इति भागुरिः । आदित्सुरादातुमिच्छुः । अभ्यलीयत । तदन्तःप्रविष्ट इति यावत् । लुब्धको व्याधः । 'व्याधो मृगवधाजीवो मृगयुर्मृगलुब्धकः' इत्यमरः । कपिलाशवस्य मृतगोशरी-

लघुदीपिका ।

प्रयत्नेन रक्षितः । 'स्वस्रीयो भागिनेयः स्यात्' । दण्डावयवं सैन्यैकदेशम् । 'दण्डोऽस्त्री शासने राज्ञां हिंसने दमसैन्ययोः' इति भागुरिः । लुब्धकः । 'व्याधो मृगवधाजीवो मृगयुर्लुब्धकश्च सः' । इष्वसनं धनुः । वृष्णिपालो गोपालः ।

पाठा०—१ 'दुर्लक्षिताम्'. २. मैथिलस्तु'.

पाणिभ्रष्टः स बालकः कस्यापि कपिलाशवस्य क्रोडमभ्यलीयत । तच्छवाकर्षिणश्च व्याघ्रस्यासूनिषुरिष्वसनयन्त्रमुक्तः क्षणादलिक्षत् । भिल्लदारकैः स बालोऽपाहारि । सा त्वहं मोहसुप्ता केनापि वृष्णिपालेनोपनीय स्वं कुटीरमावेश्य कृपयोपक्रान्तव्रणा स्वस्थीभूय स्वभर्तुरन्तिकमुपतिष्ठासुरसहायतया यावद्व्याकुलीभवामि तावन्ममैव दुहिता सह यूना केनापि तमेवोद्देशमागमत् । सा भृशं रुरोद । रुदितान्ते च सा सार्थघाते स्वहस्तगतस्य राजपुत्रस्य किरातभर्तृहस्तगमनम्, आत्मनश्च केनापि वनचरेण व्रणविरोपणम्, स्वस्थायाश्च पुनस्तेनोपयन्तुं चिन्तिताया निकृष्टजातिसंसर्गवैक्लव्यात्प्रत्याख्यानपारुष्यम्, तदक्षमेण चामुना विविक्ते विपिने स्वशिरःकर्तनोद्यमम्, अनेन यूना यदृच्छया दृष्टेन तस्य दुरात्मनो हननम्, आत्मनश्चोपयमनमित्यकथयत् । स तु पृष्टो मैथिले-

---

### पदचन्द्रिका ।

अगाहिष्यालोडितवती । शार्दूलो व्याघ्रः । कपिलाशवस्य मृतगोः । क्रोडो वक्षःस्थलम् । 'क्रोडोरो हृदयस्थानम्' इति हैमः । तच्छवं कपिलाशवम् । इषुर्बाणः । इष्वसनं धनुः । अलिक्षत् । आच्छादयामासेत्यर्थः । वृष्णिपालेन गोपालेन 'वृष्णिर्यदुषु गोपेषु' इत्यजयः । अविपालेनेति वा । 'मेषवृष्णय एडक' इत्यमरः । कुटीरमल्पगृहम् । 'कुटीशमीशुण्डाभ्यो रः' (५।३।८८) इति रः । उपक्रान्तव्रणा चिकित्सितक्षता । उपतिष्ठासुर्गन्तुमिच्छुः । तमेवोद्देशं कुटीरप्रदेशम् । सा मत्कन्या । सार्थघाते संघभ्रंशे । किरातभर्तुर्भिल्लप्रभोः । व्रणविरोपणं कृतसमीकरणम् । तेन वनचरेण । उपयन्तुं परिणेतुम् । प्रत्याख्याने दूरीकरणे पारुष्यं काठिन्यम् । तदक्षमेण पारुष्यासहेन । विविक्ते विजने । शिरःकर्तनं शिरश्छेदः । अनेन यूना सह स्थितेन तरुणेन । हननं मारणम् । उपयमनं विवाहः । स तु परिणेता । मैथिले-

### भूषणा ।

रस्य । क्रोडरन्ध्रं भुजान्तररन्ध्रम् । व्याघ्रस्यासून् व्याघ्रस्य प्राणान् । इष्वसनं धनुः । 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् । इष्वासोऽपि' इत्यमरः । अलिक्षद्धृतवान् । वृष्णिपालो गोपालः । 'वृष्णिर्यदुषु गोपेषु' इत्यजयः ।

### लघुदीपिका ।

'वृष्णिर्यदुषु गोपेषु' इत्यजयः । सार्थघाते संघभ्रंशे । अपारयन्त्यशक्नुवती ।

न्द्रस्यैव कोऽपि सेवकः कारणविलम्बी तन्मार्गानुसारी जातः । सह तेन भर्तुरन्तिकमुपसृत्य पुत्रवृत्तान्तेन श्रोत्रमस्य देव्याः प्रियंवदायाश्चादहाव ।

स च राजा दिष्टदोषाज्ज्येष्ठपुत्रैश्चिरं[1] विगृह्य पुनरसहिष्णुतयातिमात्रं चिरं प्रयुध्य बद्धः । देवी च बन्धनं गमिता । दग्धा पुनरहमस्मिन्नपि वार्धके हतजीवितमपारयन्ती हातुं प्रव्रज्यां किलाग्रहीषम् । दुहिता तु मम हतजीविताकृष्टा[2] विकटवर्ममहादेवीं[3] कल्पसुन्दरीं किलाशिश्रियत् । तौ चेद्राजपुत्रौ निरुपद्रवावेवावर्धिष्येताम्, इयता कालेन तवेमां वयोवस्थामस्प्रक्ष्येताम् । तयोश्च सतोर्न दायादा नरेन्द्रस्य प्रसह्यकारिणो भवेयुः' इति प्रमन्युरभिरुरोद[4] । श्रुत्वा च तापसीगिरमहमपि प्रवृद्धबाष्पो

---

पदचन्द्रिका ।

न्द्रस्य प्रहारवर्मणः कारणविलम्बी प्रयोजनविलम्बितः । भर्तुर्मिथिलेन्द्रस्य । अन्तिकं समीपम् । अस्य प्रहारवर्मणः । अदहाव दहतःस्म ॥

स राजा प्रहारवर्मा । दिष्टं दैवम् । विगृह्य विरोध्य । अतिमात्रमत्यन्तं । देवी प्रियंवदा । हतजीवितं दुष्टजीवितम् । अपारयन्त्यशक्नवती । 'पार तीर कर्मसमाप्तौ' इति धातोः । हातुं त्यक्तुम् । प्रव्रज्यां संन्यासम् । विकटवर्मा प्रहारवर्मज्येष्ठभ्रातृपुत्रः । महादेवीं पट्टमहिषीम् । निरुपद्रवावुपद्रवरहितौ । अस्प्रक्ष्येतां स्पृष्टौ भविष्यतः । तयोः पुत्रयोः । सतोर्विद्यमानयोः । दायादा बान्धवाः । 'दायादौ सुतबान्धवौ' इत्यमरः । प्रसह्यकारिणो बलात्कारकारिणः । प्रमन्युः प्रकृष्टशोका । 'मन्युशोकौ तु शुक्

भूषणा ।

**स्वभर्तुरिति** । मिथिलापतेरित्यर्थः । सार्थघाते संघभ्रंशे । कारणविलम्बी कारणेन प्रयोजनेन, विलम्बी । अपारयन्त्यशक्नुवती । 'पार तीर कर्मसमाप्तौ' । हातुं त्यक्तुम् । हतजीवितमधमं वृथाजीवितं हातुं त्यक्तुमशक्नुवतीत्यन्वयः । आकृष्टारिणा बलात्कारेण स्ववशीकृता । विकटवर्ममहादेवीं विकटवर्मणो मैथिलेन्द्रज्येष्ठभ्रातुः पुत्रस्य पत्नीम् । अस्प्रक्ष्येताम् । 'स्पृश संस्पर्शने' लङ् 'अनुदात्त–' ( ) इत्यात्मनेपदम् । दायादा बान्धवाः । 'दायादौ सुतबान्धवौ' इत्यमरः ।

लघुदीपिका ।

'पार सामर्थ्ये' इति धातुः । हातुं त्यक्तुम् । दायादा बान्धवाः । 'दायादौ सुतबान्धवौ' । प्रमन्युः प्रकृष्टशोका । 'मन्युशोकौ तु शुक्स्त्रियाम्' । अभ्युपपादनं

---

पाठा०–१ 'ज्येष्ठभ्रातृपुत्रैः'. २ 'हतजीविकाकृष्टा'. ३ 'महिषीं'. ४ 'प्रवृद्धमन्युः'.

निगूढमभ्यधाम्—'यद्येवमम्ब, समाश्वसिहि । नन्वस्ति कश्चिन्मुनिस्त्वया तदवस्थया पुत्राभ्युपपादनार्थं याचितस्तेन स लब्धो वर्धितश्च । वार्तेयमतिमहती । किमनया । सोऽहमस्मि । शक्यश्च मयासौ विकटवर्मा यथाकथंचिदुपश्लिष्य व्यापादयितुम् । अनुजाः पुनरतिबहवः, तैरपि घटन्ते पौरजानपदाः । मां तु न कश्चिदिहत्य ईदृक्तया जनो जानाति । पितरावपि [१]तावन्मां न संविदाते, किमुतेतरे । [२]तमेनमर्थमुपायेन साधयिष्यामि' इत्यगादिषम् । सा तु वृद्धा सरुदितं परिष्वज्य मुहुः शिरस्युपाघ्राय प्रस्नुतस्तनी सगद्गदमगदत्—'वत्स, चिरं जीव । भद्रं तव । प्रसन्नोऽद्य भगवान्विधिः । अद्यैव प्रहारवर्मण्यधि विदेहा जाताः, यतः प्रलम्ब-

---

पदचन्द्रिका ।

त्रियाम्' इत्यमरः । निगूढं गुप्तम् । समाश्वसिह्याश्वासनं लभस्वेत्यर्थः । स बालः । लब्धः प्राप्तः । वर्धितो वृद्धिं प्रापितः । सोऽहमस्मीत्यात्मनिरूपणम् । उपश्लिष्य संनिधानं प्राप्य । व्यापादयितुं हन्तुम् । 'व्यापादनं हिंसनं च क्षरणं मारणं तथा' इति भागुरिः । घटन्ते मिलिष्यन्ति । इहत्यः । 'अव्ययात्त्यप्' (४।२।१०४) इति त्यप् । ईदृशस्य भावस्तथा तया । पितरावपि मातापितरावपि । न संविदाते न जानीतः । तमेनमर्थं शत्रुमारणरूपम् । उपायेन प्रकारान्तरेण । परिष्वज्यालिङ्ग्य । उपाघ्रायाघ्राणं कृत्वा । प्रस्नुतस्तनी क्षरद्दुग्धस्तनी । भद्रं कल्याणम् । प्रहारवर्मण्यधि

भूषणा ।

प्रवृद्धमन्युर्बहुलीभूतशोका । 'मन्युशोकौ तु शुक्स्त्रियाम्' इत्यमरः । निगूढं गुप्तम् । अभ्युपपादनं संवर्धनम् । 'संवर्धनं छेदनं वाभ्युपपत्तिश्च पोषणम्' इत्यजयः । व्यापादयितुं हन्तुम् । 'व्यापादनं हिंसनं च क्षरणं मारणं तथा' इति भागुरिः । अनुजा विकटवर्मणः कनिष्ठा भ्रातरः । तैरपि घटन्ते अनुजैः साकं पौरजना घटन्ते मिलन्ति । एवं तस्मिन्हतेऽपि तस्यानुजा राज्यं करिष्यन्ति । तथा च मत्कृतं व्यापादनं व्यर्थमेव भवेदिति भावः । पितरावपि तावत् । 'यावत्तावच्च साकल्ये' इत्यमरः । संविदाते जानीतः । प्रहारवर्मण्यधि

लघुदीपिका ।

संवर्धनम् । 'संवर्धनं छेदनं वाभ्युपपत्तिश्च पोषणम्' इत्यजयः । व्यापादयितुं हन्तुम् । 'व्यापादनं हिंसनं च क्षरणं मारणं तथा' इति भागुरिः । पितरावपि तावत् । 'यावत्तावच्च साकल्ये' । संविदाते जानीतः । प्रहारवर्मण्यधि प्रहारवर्माधीनाः ।

---

पाठा०-१ 'यावन्माम्'. 'तावदित्थम्'. २ 'तदेनम्'.

मानपीनबाहुर्भवानपारमेतच्छोकसागरमंद्योत्तारयितुं स्थितः । अहो, महद्भागधेयं देव्याः प्रियंवदायाः' इति हर्षनिर्भरा स्नानभोजनादिना मामुपाचरत् । अशिश्रियं चास्मिन्मठैकदेशे निशि कटशय्याम् । अचिन्तयं च 'विनोपधिनायमर्थो न साध्यः । स्त्रियश्चोपधीनामुद्भवक्षेत्रम् । अतोऽन्तःपुरवृत्तान्तमस्या अवगम्य तद्द्वारेण किंचिज्जालमाचरेयम्' इति ।

चिन्तयत्येव मयि महार्णवोन्मग्नमार्तण्डतुरंगमश्वासरयावधूतेव व्यावर्तत त्रियामा । समुद्रगर्भवासजडीकृत इव मन्दप्रतापो दिवसकरः प्रादुरासीत् । उत्थायावसायितदिनमुखनियमविधिस्तां

पदचन्द्रिका ।

प्रहारवर्माधीनाः । 'अधिरीश्वरे' । 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' । यतो यस्मात् । प्रलम्बमानौ दीर्घौ पीनौ पुष्टौ बाहू यस्येति स तथा । एतच्छोकसागरं प्रहारवर्मशोकसमुद्रम् । उपाचरदुपचारमकरोत् । अशिश्रियमाश्रितवान् । कटशय्यां तृणास्तरणम् । अचिन्तयं चिन्तितवान् । उपधिना कपटेन । 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे' इत्यमरः । उद्भवक्षेत्रमुत्पत्तिस्थानम् । अस्या वृद्धायाः सकाशात् । जालं कपटम् । 'जालं समूह आनाये गवाक्षे कपटेऽपि च' इति वैजयन्ती ॥

**चिन्तयत्येवेति** । महार्णवोन्मग्नः समुद्रमध्यान्निःसृतो यो मार्तण्डः सूर्यः । 'विकर्तनार्कमार्तण्ड–' इत्यमरः । तत्तुरंगमा अश्वाः । 'घोटके वीतितुरगतुरंगाश्वतुरंगमाः' इत्यमरः । तेषां श्वासरयस्तेनावधूतेव कम्पितेव । त्रियामा रात्रिः । 'त्रियामा क्षणदा क्षपा' इत्यमरः । समुद्रगर्भवासः समुद्रमध्यवसतिः । जडीकृतः शीतलीकृतः । 'तुषारः शीतलो जडः' इति वैजयन्ती । मन्दप्रतापः स्वल्पतापः । दिवसकरः सूर्यः । अवसायितः समापितः । दिनमुखनियमविधिः प्रातः-

भूषणा ।

प्रहारवर्माधीनाः । 'अधिरीश्वरे' (१।४।९७) इति कर्मप्रवचनीयसंज्ञा । 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' (२।३।९) इति सप्तमी । भागधेयं भाग्यम् । 'दैवं दिष्टं भागधेयम्' इत्यमरः । कटशय्यां तृणशय्याम् । 'कटः समयबन्धेऽपि तृणेऽपि मृतकेऽपि च' इति विश्वः । उपधिना कपटेन । 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे' इत्यमरः । जालं कपटम् । 'जालं समूह आनाये गवाक्षे कपटेऽपि च' इति वैजयन्ती । जडीकृत इव शीतलीकृत इव । शिशिरो जडः । 'तुषारः

लघुदीपिका ।

'अधिरीश्वरे' (१।४।९७) । 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' । (२।३।९) उपधिना कपटेन । 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे' । जालं कपटम् । 'जालं समूह आनाये गवाक्षे कपटेऽपि च' इति वैजयन्ती ।

पाठा०–१ 'मद्योत्तारयिता' २ 'चिन्तापन्न एवम्'. ३ 'दिवाकरः'.

मे मातरमवादिषम्—'अम्ब, जाल्मस्य विकटवर्मणः कच्चिदन्तःपुरवृत्तान्तमभिजानासि' इत्यनवसितवचन एव मयि काचिदङ्गना प्रत्यदृश्यत । तां चावेक्ष्य सा मे धात्री हर्षाश्रुकुण्ठितकण्ठमाचष्ट—'पुत्रि पुष्करिके, पश्य भर्तृदारकम् । अयमसावकृपया मया वने परित्यक्तः पुनरप्येवमागतः' इति । सा तु हर्षनिर्भरनिपीडिता चिरं प्ररुद्य बहु विलप्य शान्ता पुनः स्वमात्रा राजान्तःपुरवृत्तान्ताख्याने न्ययुज्यत । उक्तं च तया—'कुमार, कामरूपेश्वरस्य कलिन्दवर्मनाम्नः कन्या कल्पसुन्दरी कलासु रूपे चाप्सरसोऽप्यतिक्रान्ता पतिमभिभूय वर्तते । तदेकवल्लभः स तु बह्ववरोधोऽपि विकटवर्मा' इति । तामवोचम्—'उपसर्पैनां

---

## पदचन्द्रिका ।

कालनियमकृत्यम् । तां वृद्धाम् । अवादिषमवोचम् । जाल्मस्य मूढस्य । 'जडो जाल्मश्च निर्बुद्धौ स्तब्धेऽनालोच्यकारिणि' इति वैजयन्ती । कच्चिदिति प्रश्ने । 'कच्चित्प्रश्नप्रवेदने' इति भागुरिः । अनवसितवचनेऽसमापितवचने । तामङ्गनाम् । धात्र्युपमाता । हर्षाच्चानन्दाश्रु तेन कुण्ठितोऽवरुद्धः कण्ठो यथा तथेति क्रियाविशेषणम् । पुत्रि कन्ये । भर्तुः प्रहारवर्मणो दारकमपत्यम् । 'दारको भेदकेऽपत्ये' इति विश्वः । अकृपया निर्दयया । सा पुष्करिकाख्या विकटवर्मान्तःपुरचारिणी तापसीकन्या । राजान्तःपुरं विकटवर्मान्तःपुरं तस्य वृत्तान्तो वार्ता तदाख्याने तत्कथने । न्ययुज्यत नियोजिता । कलासु चतुःषष्टिकलासु । रूपे कान्तौ । अप्सरसोऽप्यतिक्रान्तोत्कृष्टेत्यर्थः । अभिभूय पराभूय । तदेकवल्लभः सैवैका वल्लभा यस्येति स तथा । बह्ववरोधोऽपि बहुपत्नीकोऽपि । तां पुष्करिकाम् । एनां कल्पसुन्दरीम् ।

## भूषणा ।

शीतलः शीतः' इत्यमरः । अवसायितं समापितम् । जाल्मस्य क्षुल्लकस्य । 'निहीनोऽपसदो जाल्मः क्षुल्लकश्चेतरश्च सः' इत्यमरः । कच्चित्प्रश्ने । 'कच्चित् कामप्रवेदने' इत्यमरः । भर्तृदारकं राजपुत्रम् । राजा भट्टारको देवस्तत्सुता भर्तृदा-

## लघुदीपिका ।

जडीकृतः । 'तुषारः शीतलो जडः' इति वैजयन्ती । अवसायितं समापितम् । जाल्मस्य मूढस्य । 'जडो जाल्मश्च निर्बुद्धौ स्तब्धेऽनालोच्यकारिणि' इति वैजयन्ती । 'कच्चित्प्रश्नप्रवेदने' इति भागुरिः ।

---

पाठ०–१ 'कुण्ठ', 'कुञ्चित'.

मत्प्रयुक्तैर्गन्धमाल्यैः । उपजनय चासमानदोषनिन्दादिना स्वभर्तरि द्वेषम् । अनुरूपभर्तृगामिनीनां च वासवदत्तादीनां वर्णनेन ग्राहयानुशयम् । अवरोधनान्तरेषु च राज्ञो विलसितानि सुगूढान्यपि प्रयत्नेनान्विष्य प्रकाशयन्ती मानमस्या वर्धय' इति पुनरिदमस्वामवोचम्—"इत्थमेव त्वयाप्यनन्यव्यापारया नृपाङ्गनासावुपस्थातव्या । प्रत्यहं च यद्यत्तत्र वृत्तं तदस्मि त्वयैव बोध्यः । मदुक्ता पुनरियमुदर्कस्वादुनोऽस्मत्कर्मणः प्रसाधनाय च्छायेवानपायिनी कल्पसुन्दरीमनुवर्तताम्' इति । ते च तमर्थं तथैवान्वतिष्ठताम् ।

केषुचिद्दिनेषु गतेष्वाचष्ट मां मदम्बा 'वत्स, माधवीव पिचुमन्दाश्लेषिणी यथासौ शोच्यमात्मानं मन्येत तथोपपाद्य

---

पदचन्द्रिका ।

मत्प्रयुक्तैर्मत्प्रेषितैः । उपजनयोत्पादय । असमानोऽतुल्य इति । आदिशब्देन शकुन्तलादमयन्त्यादयो ग्राह्याः । अनुशयं पश्चात्तापम् । अवरोधनान्तरेष्वपरस्त्रीषु । राज्ञो विकटवर्मणः । विलसितानि विलासान् । प्रकाशयन्ती प्रकटयन्ती । अस्याः कल्पसुन्दर्याः । अनन्यव्यापारा त्यक्तसर्वान्यकार्या । असौ नृपाङ्गना । उपस्थातव्या सेवनीया । तत्र वृत्तं तत्र जातम् । अस्मीत्यहमर्थेऽव्ययम् । त्वयैव वृद्धयैव । मदुक्तेयं पुष्करिका । उदर्क उत्तरं फलम् । स्वादु मधुरं यत्कर्म तस्य प्रसाधनाय करणाय । अनपायिनी नाशरहिता । कल्पसुन्दरी राजपत्नी । ते च तापसी तत्कन्या च । माधवी वासन्ती । 'वासन्ती माधवी लता' इत्यमरः । पिचुमन्दो निम्बवृक्षः । 'पिचुमन्दश्च निम्बे' इत्यमरः । शोच्यं शोचनीयम् । उपपाद्य सयुक्तिकं

भूषणा ।

रिका' इत्यमरः । पुंसि भर्तृदारकः । यदत्र वक्तव्यं तदुक्तं प्राक् । अवरोधनम् । 'भूभुजामन्तःपुरं स्यादवरोधनम्' इत्यमरः । तात्स्थ्यात्ताच्छब्द्यम् । मानं कोपम् । 'मानः कोपो मन्युर्द्वेधा प्रणयेर्ष्योत्थ (?) भेदतः । द्वयोः प्रणयमानः स्यात्कोपो यः कारणं विना । यत्पुरः प्रियया सङ्गे दृष्टेर्ष्यानुमितेषु ते । 'ईर्ष्या मानो भवेत्स्त्रीणाम्' इत्यादि रसरत्नहारः । अम्बां मातरम् । 'अम्बा माता' इत्यमरः । उदर्कस्वादुन उत्तरफलस्वादुनः । 'उदर्कः फलमुत्तरम्'

---

पाठा०-१ 'पिचुमर्दो'.

स्थापिता । किं भूयः कृत्यम्' इति । पुनरहमभिलिख्यात्मनः प्रतिकृतिम् 'इयममुष्यै नेया । नीतां चैनां निर्वर्ण्य सा नियतमेवं वक्ष्यति—'नन्वस्ति कश्चिदीदृशाकारः पुमान्' इति । प्रतिब्रूह्येनाम्—'यदि स्यात्ततः किम् ?' इति । तस्य यदुत्तरं सा दास्यति 'तदहमस्मि प्रतिबोधनीया' इति । सा 'तथा' इति राजकुलमुपसंक्रम्य प्रतिनिवृत्ता मामेकान्ते न्यवेदयत्—'वत्स दर्शितोऽसौ चित्रपटस्तस्यै मत्तकाशिन्यै । चित्रीयमाणा चासौ भुवनमिदं सनाथीकृतं यद्देवेऽपि कुसुमधन्वनि नेदृशी वपुःश्रीः संनिधत्ते । चित्रमेतच्चित्रतरम् । न च तमवैमि य ईदृशमिहत्यो निर्मिमीते । केनेदमालिखितम्' इत्यादृतवती व्याहृतवती च । मया च स्मेरयोदीरितम्—'देवि, सदृशमाज्ञापयसि । भगवान्मकरकेतुरप्येवं सुन्दर इति न शक्यमेवं संभावयितुम् । अथ च विस्तीर्णेयमर्णवनेमिः । क्वचिदीदृशमपि रूपं दैवशक्त्या संभवेत् । अथ तु यद्येवंरूपो रूपानुरूपशिल्पशीलविद्याज्ञानकौशलो युवा

---

पदचन्द्रिका ।

संबोध्य । आत्मन उपहारवर्मणः । प्रतिकृतिं स्वरूपम् । इयं प्रतिकृतिः । अमुष्यै राजपत्न्यै । एनां प्रतिकृतिं निर्वर्ण्य । सा राजपत्नी । नियतं नियमेन । एवमुना प्रकारेण । वक्ष्यति वदिष्यति । ईदृश आकारो यस्येति स तथा । प्रतिब्रूहि प्रत्युत्तरं देहि । सा वृद्धा । सनाथीकृतम् । नाथवत्कृतमित्यर्थः । कुसुमधन्वनि मदने । यद्यस्मात् । ईदृश्येतत्सदृशी । वपुः श्रीः शरीरशोभा । न संनिधत्ते । नास्तीत्यर्थः । चित्रतरमतितरामाश्चर्यम् । तं पुरुषम् । नावैमि न जानामि । इहत्योऽत्रत्यः । ईदृशं निर्मिमीते करोति । **मया चेति ।** स्मेरया सहासया । उदीरितमुक्तम् । सदृशं युक्तम् । मकरकेतुर्मदनः । एवं संभावयितुं सुन्दरत्वेन निदर्शयितुम् । अथ चेति तथापि । विस्तीर्णा विशाला । अर्णवनेमिः । पृथिवीत्यर्थः । **अथ त्विति ।** 'तिष्ठत्वित्यभिधेयेऽस्मिन्नास्तामथ तु चाव्ययम्' इत्यजयः । रूपानुरूपं यथानुकू-

भूषणा ।

इत्यमरः । चित्रीयमाणा विस्मयमाना । 'नमोवरिवश्चित्रङः क्यच्' (३।१।१९) इति क्यजन्तादात्मनेपदम् । अथ तु । तिष्ठत्वित्यर्थः । 'तिष्ठत्वित्यभिधेयेऽस्मि-

लघुदीपिका ।

मत्तकाशिन्यै उत्तमस्त्रियै । 'वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी' । अथवा तथापि अथ तु । तिष्ठत्वित्यर्थः । 'तिष्ठत्वित्यभिधेयेऽस्मिन्नास्तामथ तु चाव्ययम्'

---

पाठा०—१ 'असत्प्रतिकृतिरियं'.

महाकुलीनश्च कश्चित्संनिहितः स्यात्, स किं लप्स्यते ?' इति । तयोक्तम्—'अम्ब, किं ब्रवीमि । शरीरं हृदयं जीवितमिति सर्वमिदमल्पमनर्हं च । ततो न किंचिल्लप्स्यते । न चेदयं विप्रलम्भस्तस्यामुष्य दर्शनानुभवेन यथेदं चक्षुश्चरितार्थं भवेत्तथानुग्रहः कार्यः' इति । भूयोऽपि मया दृढतरीकर्तुमुपन्यस्तम्—'अस्ति कोऽपि राजसूनुर्निगूढं चरन् । अमुष्य वसन्तोत्सवे सहसखीभिर्नगरोपवनविहारिणी रतिरिव विग्रहिणी यदृच्छया दर्शनपथं गतासि । गतश्चासौ कामशरैकलक्ष्यतां मामन्ववर्तिष्ट । मया च वामन्योन्यानुरूपैरन्यदुर्लभैराकारादिभिर्गुणातिशयैश्च प्रेर्यमाणया तद्रचितैरेव कुसुमशेखरस्रगनुलेपनादिभिश्चिरमुपासितासि । सादृश्यं च स्वमनेन स्वयमेवाभिलिख्य त्वत्समाधिगाढत्वदर्शनाय प्रेषितम् । एष चेदर्थो निश्चितस्तस्यामुष्याति-

पदचन्द्रिका ।

लम् । शिल्पं चातुर्यम् । शीलं स्वभावः । विद्याश्चतुर्दशाष्टादश वा । ज्ञानं लिप्यादि । युवा तरुणः । तयोक्तं वृद्धयोक्तम् । अनर्हमयोग्यम् । किंचिल्लप्स्यते प्राप्यते । अमुष्य पुरुषस्य । चरितार्थं कृतकृत्यम् । उपन्यस्तम् । उक्तमित्यर्थः । **अस्तीति** । निगूढं गुप्तम् । नगरोपवनं नगरारामः । विग्रहिणी विरोधिनी । यदृच्छया स्वेच्छया । दर्शनपथं दर्शनमार्गम् । **गतश्चेति** । असौ राजपुरुषः । लक्ष्यतां वेध्यताम् । **मया चेति** । वां युवयोः । अन्योन्यानुरूपैः परस्परानुरक्तैः । प्रेर्यमाणयोद्योजितया । तद्रचितैस्तन्निर्मितैः । शेखर आपीडः । स्रड्माला । अनुलेपनमुद्वर्तनम् । उपासितासि । सेवितासीत्यर्थः । सादृश्यं सदृशरूपम् । अनेन पुरुषेण स्वयमेव स्वहस्तेनैवेत्यर्थः । त्वत्समाधिगाढं त्वद्ध्यानदृढम् । एष चेदिति पूर्वोक्तोऽयमर्थः । निश्चितो नियतः । अतिमानुषो मनुष्यमतिक्रान्तः । प्राणो बलम् । सत्त्वं पराक्रमः ।

भूषणा ।

न्नास्तामथ तु चाव्ययम्' इत्यजयः । विप्रलम्भः प्रतारणम् । अवरुद्धो गूढः । समाधिश्चित्तवृत्तिनिरोधः । गाढत्वदर्शनाय दृढत्वज्ञानाय । 'गाढबाढदृढानि च' इत्यमरः । प्राणो बलम् । सत्त्वं पराक्रमः । 'सत्त्वोऽस्त्री जन्तुषु क्लीबे

लघुदीपिका ।

इत्यजयः । विप्रलम्भः प्रतारणम् । उपरुद्धो गूढः । समाधिश्चित्तवृत्तिनिरोधः । गाढदर्शनाय दृढज्ञानाय । 'गाढबाढदृढानि च' । प्राणो बलम् । सत्त्वं पराक्रमः ।

पाठा०—१ 'स्यात् तस्या अमुष्य'. २ 'अवरुद्धः'. ३ 'त्वत्समाधिगमाय गाढं त्वद्दर्शनाय'.

मानुषप्राणसत्त्वप्रज्ञाप्रकर्षस्य न किंचिद्दुष्करं नाम। तमद्यैव दर्शयेयम्। संकेतो देयः' इति। तया तु किंचिदिव ध्यात्वा पुनरभिहितम्—'अम्ब, तव नैतदिदानीं गोप्यतमम्। अतः कथयामि। मम तातस्य राज्ञा प्रहारवर्मणा सह महती प्रीतिरासीत्। मातुश्च मे मानवत्याः प्रियवयस्या देवी प्रियंवदासीत्। ताभ्यां पुनरजातापत्याभ्यामेव कृतः समयोऽभूत्—'आवयोः पुत्रवत्याः पुत्राय दुहितृमत्या दुहिता देया' इति। तातस्तु मां जातां प्रनष्टापत्या प्रियंवदेति प्रार्थयमानाय विकटवर्मणे दैवाद्दत्तवान्। अयं च निष्ठुरः पितृद्रोही नात्युपपन्नसंस्थानः कामोपचारेष्वलब्धवैचक्षण्यः कलासु काव्यनाटकादिषु मन्दाभिनिवेशः शौर्योन्मादी दुर्विकत्थनोऽनृतवादी चास्थानवर्षी। नातिरोचते म एष

---

### पदचन्द्रिका।

आधिक्यं यस्येति स तथा तस्य न किंचिद्दुष्करम्। सर्वं सुकरमेवेति भावः। नामेति निश्चयार्थे। तं पुरुषम्। **अद्यैवेति**। स्वस्यैतत्कार्यघटनापटुत्वद्योतनार्थमेवकारः। ध्यात्वा विचार्य। गोप्यतममतिशयेन गोप्यमिति तथा। मम तातस्य मत्पितुः। प्रहारवर्मणा राज्ञा। महत्यतिश्रेष्ठा। प्रियवयस्या प्रियसखी अजातापत्याभ्यामनुत्पन्नापत्याभ्याम्। समयः शपथः। आवयोर्द्वयोः। तातो मत्पिता। प्रनष्टापत्या हृतापत्या। अयं विकटवर्मा। निष्ठुरः कठिनः। उपपन्नसंस्थानः। 'उपपन्नं समृद्धे च संपन्नेऽनुगुणेऽपि च' इति केशवः। 'संस्थानं मरणे गात्रे संनिवेशे च वर्तते' इति भागुरिः। कामोपचारेषु मदनतन्त्रेषु। अलब्धमप्राप्तं वैचक्षण्यं विचक्षणस्य भावः कौशलं येनेति स तथा। कलासु चतुःषष्टिषु। काव्येषु श्राव्यरूपेषु। नाटकादिषु दृश्यरूपेषु। आदिशब्देन रूपकाख्यायिकाचम्पूरूपेषु। मन्दो निश्चलोऽभिनिवेश आग्रहो यस्येति। शौर्योन्मादी शौर्योन्मत्तः। दुर्विकत्थनो दुष्टश्चासौ विकत्थनश्चेति

### भूषणा।

व्यवसाये पराक्रमे' इति वैजयन्ती। उपपन्नसंस्थानोऽनुगुणावयवः। 'उपपन्नं समृद्धे च संपन्नेऽनुगुणेऽपि च' इति केशवः। 'संस्थानं मरणे गात्रे संनिवेशे च वर्तते' इति भागुरिः। दुर्विकत्थनः। 'विकत्थनं स्तवः श्लाघा' इति हलायुधः।

### लघुदीपिका।

'सत्त्वोऽस्त्री जन्तुषु क्लीबे व्यवसाये पराक्रमे। आत्मभावे पिशाचादौ द्रव्ये सत्तास्वभावयोः' इति वैजयन्ती। उपपन्नसंस्थानोऽनुगुणावयवः। 'उपपन्नं समृद्धे च

भर्ता विशेषतश्चैषु वासरेषु यदयमुद्याने मदन्तरङ्गभूतां पुष्करिकामप्युपान्तवर्तिनीमनादृत्य मयि बद्धसापत्न्यमत्सरामनात्मज्ञामात्मनाटकीयां रमयन्तिकां नामापत्यनिर्विशेषं मत्संवर्धितायाश्चम्पकलतायाः स्वयमवचिताभिः सुमनोभिरलमकार्षीत् । मदुपभुक्तमुक्ते चित्रकूटगर्भवेदिकागते रत्नतल्पे तया सह व्यहार्षीत् । अयोग्यश्च पुमानवज्ञातुं च प्रवृत्तः । तत्किमित्यपेक्ष्यते । परलोकभयं चैहिकेन दुःखेनान्तरितम् । अविषह्यं हि योषितामनङ्गशरनिषङ्गीभूतचेतसामनिष्टजनसंवासयन्त्रणादुःखम् । अतो-

पदचन्द्रिका ।

तथा । आत्मश्लाघावान् । 'विकत्थनं स्तवः श्लाघा' इति हलायुधः । अनृतवाग्यसत्यवक्ता । आस्थानवर्ष्यपात्रदाता । नातिरोचते न रुचिपदं भवतीत्यर्थः । म इति मह्यम् । 'रुच्यर्थानां–' (२।३।५४) इति चतुर्थी । **विशेषत इति** । अयं भर्ता विकटवर्मा । उद्यान उपवने । मदन्तरङ्गभूतामाप्तभूताम् । उपान्तवर्तिनीं समीपवर्तिनीम् । अनादृत्य तिरस्कृत्य । 'अनादरः परिभवः परीभावस्तिरस्क्रिया' इत्यमरः । बद्धः सपत्न्या भावः सापत्न्यं तस्य मत्सरोऽसह्यता ययेति तथा । 'अथ मत्सरः । असह्यपरसंपत्तौ' इति विश्वः । नाटकीयां नर्तकीम् । 'नाटकीयो नृत्तकरः' इत्यजयः । अपत्यनिर्विशेषमपत्यतुल्यमिति क्रियाविशेषणम् । मत्संवर्धिताया मत्पालितायाः । चम्पकलतायाः । अल्पचम्पकस्येत्यर्थः । स्वयमात्मनैव । अवचिताभिर्लूनाभिः । सुमनोभिः पुष्पैः । 'स्त्रियः सुमनसः पुष्पम्' इत्यमरः । अलमकार्षीत्पूर्णमकरोत् । अलंकृतवानिति वा । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः । मदुपभुक्तमुक्ते मयादौ भुक्ते पश्चान्मुक्ते । चित्रकूटः क्रीडापर्वतः । तद्गर्भवेदिकागते । रत्नतल्पे रत्नमञ्चके । तया रमयन्तिकया । सह साकम् । व्यहार्षीद्विहारं कृतवान् । अयोग्यो मूर्खः । अवज्ञातुमवमानितुम् । ऐहिकेनेह भवं तथा तेन । अन्तरितं व्यवधानीकृतम् । अविषह्यं सोढुमशक्यम् । योषितां स्त्रीणाम् । 'स्त्री योषिदबला' इत्यमरः । अनङ्गशरा मदनबाणास्तेषां निषङ्गीभूतं तूणीभूतम् । स्थानतां

भूषणा ।

नाटकीयां नृत्तकरीम् । 'नाटकीयो नृत्तकरः' इत्यजयः । रमयन्तिकामेतन्नाम्नीम् । प्रमदवनं क्रीडावनम् । 'विज्ञेयं प्रमदवनं पुरोपकण्ठे शुद्धान्तैः सह रमते नृपस्तु

लघुदीपिका ।

संपन्नेऽनुगुणेऽपि च' इति केशवः । 'संस्थानं मरणे गात्रे संनिवेशे च वर्तते' इति भागुरिः । 'विकत्थनः स्तवः श्लाघा' इति हलायुधः । नाटकीयां नृत्तकरीम् । 'नाटकीयो नृत्तकरः' इत्यजयः । रमयन्तिकेति नाम्ना । प्रमदवनं क्रीडावनम् ।

पाठा०–१ 'नामाप्यपत्य'.

ऽमुना पुरुषेण मामद्योद्यानमाधवीगृहे समागमय । तद्वार्ताश्रवणमात्रेणैव हि ममातिमात्रं मनोऽनुरक्तम् । अस्ति चायमर्थराशिः । अनेनामुष्य पदे प्रतिष्ठाप्य तमेवात्यन्तमुपचर्य जीविष्यामि' इति । मयापि तदभ्युपेत्य प्रत्यागतम् । अतः परं भर्तृदारकः प्रमाणम्' इति ।

ततस्तस्या एव सकाशादन्तःपुरनिवेशमन्तर्वंशिकपुरुषस्थानानि प्रमदवनप्रदेशानपि विभागेनावगम्य, अस्तगिरिकूटपातक्षुभितशोणित इव शोणीभवति भानुबिम्बे, पश्चिमाम्बुधिपयःपातनिर्वापितपतङ्गाङ्गारधूमसंभार इव भरिततमसि नभसि विजृम्भिते, परदारपरामर्शोन्मुखस्य ममाचार्यकमिव कर्तुमुत्थिते गुरु-

पदचन्द्रिका ।

प्राप्तमिति भावः । चेतश्चित्तं यासामिति तथा तासाम् । अनिष्टजनः शत्रुलोकस्तत्संवासस्तत्समागमः स एव यन्त्रणा निर्बन्धस्तद्दुःखमिति । अमुना पुरुषेण त्वत्कथितेन । अद्यास्मिन्दिवसे । उद्यानमाधवीगृह उपवनवासन्तिकागृहे । समागमय । मिलापयेत्यर्थः । तद्वार्ता तस्य पुरुषस्य वार्ता गोष्ठी । अतिमात्रमत्यन्तम् । **अस्तीति** । अर्थराशिर्द्रव्यराशिः । अमुष्य विकटवर्मणः । तमेव पुरुषमेव । उपचर्याराध्य । मयापि वृद्धतापस्या । भर्तृदारको राजपुत्रः ॥

**तत इति** । तस्या एव वृद्धाया एव । अन्तःपुरनिवेशमन्तःपुरप्रदेशम् । अन्तर्वंशिकपुरुषाः । 'अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः' इत्यमरः । प्रमदवनप्रदेशान् क्रीडावनप्रदेशान् । 'विज्ञेयं प्रमदवनं पुरोपकण्ठे शुद्धान्तैः सह रमते नृपस्तु यस्मिन्' इति हलायुधः । विभागेन विवेकेन । अस्तगिरिरस्ताचलस्तस्य कूटं शिखरं तस्माद्यः पातः पतनं तेन क्षुभितं निःसृतं शोणितं रक्तं यस्येति तथा तस्मिन् शोणीभवति सति रक्तीभवति सति । भानुबिम्बे सूर्यबिम्बे । पश्चिमाम्बुधिः । पश्चिमसमुद्रस्तस्य पय उदकं तत्र पातः पतनं तेन निर्वापितो दूरीकृतः पतङ्ग एव सूर्य एवाङ्गारः प्रदीप्तकाष्ठावयवस्तस्य धूमस्तस्य संभारो यस्मिन्निति तथा तस्मिन् । भरितं पूर्णीकृतं तमो यस्मिन्निति तथा तस्मिन् । नभस्याकाशे । विजृम्भिते विकाशं प्राप्ते । परदारा परस्त्री । परामर्शो गमनम्, तत्रोन्मुखस्योत्कण्ठितस्य । आचार्य-

भूषणा ।

यस्मिन्' इति हलायुधः । आचार्यकमाचार्यभावम् । गुरुपरिग्रहो बृहस्पतिपत्नी ।

लघुदीपिका ।

'विज्ञेयं प्रमदवनं नृपस्तु यस्मिन् शुद्धान्तैः सह रमते पुरोपकण्ठे' इति हलायुधः । आचार्यकमाचार्यभावम् । गुरुपरिग्रहो बृहस्पतिपत्नी । 'अभिसंधिः समुद्योगे' इति

**पाठा०–१ 'अद्य श्वो वा'. २ 'अमुं स्वे पदे'. ३ 'संनिवेश'. ४ 'भरितनभसि तमसि'. ५ 'उपस्थिते.'**

परिग्रहश्लाघिनि ग्रहाग्रेसरे क्षपाकरे, कल्पसुन्दरीवदनपुण्डरीकेणेव मद्दर्शनातिरागप्रथमोपनतेन स्मयमानेन चन्द्रमण्डलेन संधुक्षमाणतेजसि भुवनविजिगीषोद्यते देवे कुसुमधन्वनि, यथोचितं शयनीयमभजे । व्यचीचरं च—'सिद्धप्राय एवायमर्थः । किंतु परकलत्रलङ्घनाद्धर्मपीडा भवेत्, साप्यर्थकामयोर्द्वयोरुपलम्भे शास्त्रकारैरनुमतैवेति । गुरुजनबन्धमोक्षोपायसंधिना मया चैष व्यतिक्रमः कृतः, तदपि पापं निर्हृत्य कियत्यापि धर्मकलया मां समग्रयेदिति । अपि त्वेतदाकर्ण्य देवो राजवाहनः सुहृदो वा किं नु वक्ष्यन्ति' इति चिन्तापराधीन एव निद्रया परामृश्ये । अदृश्यत च स्वप्ने हस्तिवक्त्रो भगवान् । आह स्म च—'सौम्य उपहारवर्मन्, मा स्म ते दुर्विकल्पो भूत् । यत-

पदचन्द्रिका ।

कमिवाचार्यभावम् । 'मन्त्रव्याख्याकृदाचार्यः' इत्यमरः । इवशब्दोऽत्रोत्प्रेक्षायाम् । गुरुपरिग्रहो गुरुपत्न्यभिलाषस्तच्छ्लाघिनि श्लाघतेऽसौ तथा तस्मिन् । ग्रहाग्रेसरे ग्रहमुख्ये । क्षपाकरे चन्द्रे । 'नक्षत्रेशः क्षपाकरः' इत्यमरः । कल्पसुन्दर्या राजपत्न्याः वदनपुण्डरीकं मुखकमलम् । मद्दर्शनातिरागो मद्दर्शनेच्छा तेन प्रथमोपनतेन प्रागेव प्राप्तेन । संधुक्षमाणतेजसि प्रवृद्धतेजसि । भुवनविजिगीषा जगद्विजेतुमिच्छा तत्रोद्यते । कुसुमधन्वनि मदने । यथोचितं यथायोग्यम् । शयनीयं शय्याम् । अभजेऽधिष्ठितवान् । क्रियाबलादहमिति पदमध्याहार्यम् । **व्यचीचरं चेति** । सिद्धप्राय ईषन्न्यूनः सिद्धः । **किंत्विति** । परकलत्रलङ्घनं परस्त्रीगमनम् । धर्मपीडा धर्मनाशः । सापि धर्मपीडा । अर्थकामयोरुपलम्भे प्राप्तौ । शास्त्रकारैर्मन्वादिभिः । अनुमतैवानिषिद्धैव । गुरुजनस्य पितृलोकस्य । मोक्षोपायो मोचनोद्योगस्तत्संधिना । संधिः साधकता । व्यतिक्रमो धर्मनाशरूपः । तदपि पापम् । समग्रयेत् संपूर्णं करिष्यति । **अपि त्विति** । एतत्कर्म । आकर्ण्य श्रुत्वा देवो राजवाहनः । सुहृदोऽन्ये । **किं नु वक्ष्यन्ति** किं नु निन्दां कुर्वन्तीति । **अदृश्यतेति** । हस्तिवक्त्रो गजाननः । दुर्विकल्पो दुर्विचारः । सुरसरिद्गङ्गा ।

भूषणा ।

'पत्नीपरिजनादानमूलशापाः परिग्रहाः' इत्यमरः । धर्मपीडा धर्मबाधा । अभिसंधिरुद्योगः । 'अभिसंधिः समुद्योगः' इति भागुरिः । दुर्विकल्पो दुर्विचारः ।

**पाठा०–१ 'परिग्रहग्रहण'. २ 'अभिसंधिना'. ३ 'धर्मः कलया'. ४ 'समाश्रयेत्'. ५ 'अदृश्य स्वप्ने भगवान्भर्गः'.**

स्त्वमसि मदंशः। शंकर[1]जटाभारलालनोचिता सुरसरिदसौ वरवर्णिनी। सा[2] च कदाचिन्मद्विलोडनासहिष्णुर्मामशपत्—'एहि मर्त्यत्वम्' इति। [3]अशप्यत मया च—'यथेह बहुभोग्या तथा प्राप्यापि मानुष्यकमनेकसाधारणी भव' इति। [4]अभ्यर्थितश्चानया—'एकपूर्वा पुनस्त्वामेवोपचर्य यावज्जीवं रमेयम्' इति। तदयमर्थो भव्य एव भवता निराशङ्क्यः' इति। प्रतिबुध्य च प्रीतियुक्तस्तदहरपि प्रियासंकेतव्यतिकरादिस्मरणेनाहमनैषम्।

अन्येद्युरनन्यथावृत्तिरनङ्गो मय्येवेषुवर्षमवर्षत्। अशुष्यच्च ज्योतिष्मतः प्रभामयं सरः। प्रासरच्च तिमिरमयः कर्दमः।

पदचन्द्रिका।

सैवासौ कल्पसुन्दरी। वरवर्णिनी। 'उत्तमा वरवर्णिनी' इत्यमरः। सा गङ्गा मद्विलोडनं मत्खेलनं तदसहिष्णुस्तदसहनशीला। मर्त्यत्वं मनुष्यत्वम्। यथा येन प्रकारेण। इह बहुभोग्या गङ्गात्वेन। तथा तेनैव प्रकारेण। मानुष्यकं मनुष्यशरीरम्। अनेकसाधारणी बहुभोग्या भवेति। अभ्यर्थितः प्रार्थितः। अनया गङ्गया। एकः पूर्वं यस्या इति तथा। त्वां द्वितीयम्। उपचर्य संसेव्य। यावज्जीवं देहपर्यन्तम्। रमेयं क्रीडां करोमि। **तदयमिति**। अयमर्थः कल्पसुन्दरीभोगरूपः। भव्य एव कुशल एव। निराशङ्क्यः। नाशङ्कनीय इत्यर्थः। प्रतिबुध्य ज्ञात्वा। तदहः तद्दिनम्। अनैषमगमयम्।

अन्येद्युरिति परदिवसे। अनन्यथावृत्तिर्मदेकवृत्तिः। अनङ्गो मदनः। इषुवर्षमिषून्वर्षयित्वेति तथा। णमुल्। अवर्षत्। ववर्षेत्यर्थः। अशुष्यत्। शोषं प्रापेत्यर्थः। ज्योतिष्मतः सूर्यस्य। प्रभामयं दीप्तिरूपं सरः। ताद्रूप्ये मयट्। प्रासरत्। प्रसरति स्मेत्यर्थः। तिमिरमयोऽन्धकारमयः। कर्दमः

पाठा०—१ 'मज्जटा'. २ 'तां च कदाचिद्गजाननो जलक्रीडां कुर्वन्नतिव्यगाहत। सा च सपत्नीतनयविहितां विलोडनामसहमाना तमशपत्'. ३ 'सोऽप्यहेतुकशापप्रदानात्क्रुद्धस्तामशपत्'. ४ 'ततस्तेन प्रतिशप्ता सा विलक्षेव मामुपसृत्य सगद्गदमगदत्—'स्वामिन्, अहमनवरतभवच्चरणवरिवस्याविधायिनी न शापार्हा' इति। तदाकर्ण्य कृपाक्रान्तमनसा मयोक्तम्—'प्रिये, नास्य शापोऽन्यथा भवितुमर्हति। परं त्वदनुग्रहार्थमहमात्मनोंऽशं द्विधा विभज्य विकटवर्मनृपरूपेण मिथिलापतिप्रहारवर्मात्मजोपहारवर्मात्मना च मर्त्यलोकेऽवतरिष्यामि। त्वं च कामरूपाधिपतेः कलिङ्गवर्मनाम्नः कन्या कल्पसुन्दरी नाम भूत्वा ज्यायसा मदंशेन विकटवर्मणा प्रथममल्पीयांसमनेहसं संगता तस्मिन्विकटवर्मणि मन्मूर्तावेव लयमुपगते पुनरुपहारवर्मात्मकं कनीयांसं मदंशमुपलभ्य तेन साकं विविधसुखोपभोगमनुभविष्यसि। तदयमर्थः'.

कार्दमिकनिवसनश्च दृढतरपरिकरः खड्गपाणिरुपहृतप्रकृतोपस्करः स्मरन्मातृदत्तान्यभिज्ञानानि राजमन्दिरपरिखामुदम्भसमुपातिष्ठम् । अथोपखातं मातृगृहद्वारे पुष्करिकया प्रथमसंनिधापितां वेणुयष्टिमादाय तया शायितया च परिखाम्, स्थापितया च प्राकारभित्तिमलङ्घयम् । अधिरुह्य पक्वेष्टकचितेन गोपुरोपरितलाधिरोहेण सोपानपथेन भुवमवातरम् । अवतीर्णश्च बकुलवीथीमतिक्रम्य चम्पकावलिवर्त्मना मनागिवोपसृत्योत्तराहि करुणं

## पदचन्द्रिका ।

पङ्कः कार्दमिकनिवसनः कर्दमेन रक्तं कार्दमिकम् । 'तेन रक्तं रागात्' इत्यधिकारे 'लाक्षारोचना–' (४।२।२) इति सूत्रे 'शकलकर्दमाभ्यामुपसंख्यानम्' (वा. २६७९) इति ठक् । नीलवस्त्रः । दृढतरः परिकरः संनाहो यस्येति सः । 'कक्षाबन्धः परिकरः' इति वैजयन्ती । उपहृतोऽङ्गीकृतः प्रकृतोपस्करो योग्यसामग्री येनेति स तथा 'साधनं स्यादुपस्करे' इति वैजयन्ती । मातृदत्तानि धात्रीदत्तानि । परिखां प्राचीरसंनिकृष्टखनिम् । उदम्भसमुत्कटजलाम् । उपातिष्ठं समीपमगच्छम् । **अथेति** । उपखातं खातस्योपेति तथा । प्रथमसंनिधापितां प्रागेव स्थापिताम् । आदाय गृहीत्वा । तया वेणुयष्टिकया । शायितया प्रसारितया । स्थापितयोर्ध्वीकृतया च । प्राकारभित्तिमलङ्घयम् । लङ्घितवानित्यर्थः अधिरुह्यारोहणं कृत्वा । पक्वेष्टका भर्जितेष्टकास्ताभिश्चितेन कृतेन । 'इष्टकेषीकामालानां–' (६।३।६५) इति ह्रस्वता । गोपुरोपरिद्वारेण पुरद्वारोपरितलं तत्राधिरोहो यस्येति । सोपानपथेन सोपानमार्गेणावातरम् । बकुलवीथीं बकुलावलीम् । 'वीथिर्गृहाग्रे पङ्क्तौ च' इति वैजयन्ती । चम्पकावलीवर्त्मना चम्पकश्रेणिमार्गेण । मनागिवोपसृत्याल्पमिव गत्वा । उत्तराह्युत्तरस्यां दिशि दूरे

## भूषणा ।

कार्दमिकनिवसनः कर्दमेनाक्तं कार्दमिकम् । 'शकलकर्दमाभ्यामुपसंख्यानम्' (वा. २६७९) इति ठक् । परिकरः । 'कक्षाबन्धः परिकरः' इति वैजयन्ती । उपस्करः साधनम् । 'साधनं स्यादुपस्करे' इति वैजयन्ती । अभिज्ञानानि चिह्नानि । उपखातं परिखासमीपे । सामीप्येऽव्ययीभावः । **शायितयेत्यादि** । तथा च कामन्दकः—'पृथुसीममहाखातमुच्चप्राकारके पुरः ॥ समाश्रयेत्पुरं शैलसरिन्मरुवनाश्रयम् ॥' इति । पक्वेष्टकचितेन । 'इष्टकेषीकामालानाम्' इति ह्रस्वः । सोपानपथेनारोहणेन । 'आरोहणं स्यात्सोपानम्' इत्यमरः । उत्तराहि दूरत उदक्प्रदेशम् ।

## लघुदीपिका ।

भागुरिः । दुर्विकल्पो दुर्विचारः । कार्दमिकं कर्दमेन रक्तम् । 'कक्षाबन्धः परिकरः' इति वैजयन्ती । उपस्करः साधनम् । 'साधनं स्यादुपस्करे' इति वैजयन्ती ।

पाठा०–१ 'अहं च कार्दमिकनिवसनः'. २ 'रोहिणा'.

चक्रवाकमिथुनरवमश्रृणवम् । पुनरुदीचा पाटलिपथेन स्पर्शलभ्यविशालसौधकुड्योदरेण[1] शरक्षेपमिव गत्वा पुनः प्राचा पिण्डीपाण्डीरखण्डमण्डितोभयपार्श्वेन सैकतपथेन किंचिदुत्तरमतिक्रम्य[2] पुनरवाचीं चूतवीथीमगाहिषि । ततश्च गहनतरमुदरोपरचितरत्नवेदिकं माधवीलतामण्डपमीषद्विवृतसमुद्गकोन्मिषितभासा[3] दीपवर्त्या न्यरूपयम् । प्रविश्य चैकपार्श्वे फुल्लपुष्पनिरन्तरकुरण्टपोतपङ्क्तिभित्तिपरिगतं गर्भगृहम्, अवनिपतितारुणाशोक-

## पदचन्द्रिका ।

तथा । 'आहि च दूरे' (५।३।३७) इत्याहिप्रत्ययः । अव्ययम् । करुणं दीनम् । चक्रवाकाः कोकाः । 'कोकश्चक्रश्चक्रवाकः' इत्यमरः । रवः शब्दः । उदीचा । उत्तरेणेत्यर्थः । पाटलिपथेन कृष्णवृन्तामार्गेण । 'पाटलिः पाटलामोघा काचस्थाली फलेरुहा । कृष्णवृन्ता कुबेराक्षी' इत्यमरः । स्पर्शेन लभ्यं लक्ष्यम् । विशालं महत् । सौधं राजसदनम् । कुड्यं भित्तिः । शरक्षेपमिव बाणक्षेपभूमिपर्यन्तम् । प्राचा पूर्वेण । पिण्डी तगरः । 'पिण्डी स्यात्तगरेऽलाबुखर्जूरीभेदयोरपि' इति विश्वः । अथवा 'रक्ताशोके तु पिण्डी स्यात्' इति वैजयन्ती । भाण्डीरो मल्लिका । 'भाण्डीरो मल्लिकाचयः' इत्यजयः । खण्डं समूहः । तेन मण्डितावुभौ पार्श्वौ यस्येति तेन । उत्तरमुत्तरप्रदेशम् । अवाचीं दक्षिणाम् । **ततश्चेति** । गहनतरमतिगहनम् । उदरे मध्य उपरचिता कृता रत्नवेदिका यस्मिन्निति । माधवी वासन्ती । ईषदल्पम् । विवृत उद्घाटितः । समुद्गकः संपुटकः । उन्मिषितभासा निःसृतदीप्त्या । न्यरूपयमपश्यम् । एकपार्श्वे एकस्मिन्भागे । फुल्लपुष्पं विकसितप्रसूनम् । निरन्तरमन्तररहितम् । कुरण्टपोता अल्पपीतकुरबकाः । 'कुरण्टस्तु सुपीतकः' इत्य-

## भूषणा ।

'आहि च दूरे' (५।३।३७) इत्याहिप्रत्ययः । पिण्डीखण्डं रक्ताशोकखण्डम् । 'रक्ताशोकस्तु पिण्डी स्यात्' इति वैजयन्ती । भाण्डीरः । 'भाण्डीरो मल्लिकाचयः' इत्यजयः । अवाचीं दक्षिणाम् । कुरण्टः पीतकुरण्टकः । 'पीतपुष्पा सहचरी' । 'तत्र शोणे कुरबकस्तत्र पीते कुरण्टकः' इत्यमरः । दन्तमयस्तालवृन्तः । 'व्यजनं तालवृन्त-

## लघुदीपिका ।

अभिज्ञानानि लक्षणानि । उत्तराहि दूरभूत उदक्प्रदेशे । 'आहि च दूरे' (५।३।३७) इत्याहिप्रत्ययः । अव्ययम् । 'रक्ताशोके तु पिण्डी स्यात्' इति वैजयन्ती । 'भाण्डीरो मल्लिकाचयः' इत्यजयः । अवाचीं दक्षिणाम् । कुरण्टः पीतकुरबकः । कुरण्टस्तु

पाठा०–१ 'विमलसौधकुट्टिमोदरेण'. २ 'अन्तरम्'. ३ 'समुद्गकसंपुटको'.

लतामयमभिनवकुसुमकोरकपुलकलाञ्छितं प्रत्यग्रप्रवालपटलपाटलं कपाटमुद्घाट्य प्राविक्षम्। तत्र चासीत्स्वास्तीर्णं कुसुमशयनम्, सुरतोपकरणवस्तुगर्भाश्च कमलिनीपलाशसंपुटाः, दन्तमयस्तालवृन्तः, सुरभिसलिलभरितश्च भृङ्गारकः। समुपविश्य मुहूर्तं विश्रान्तः परिमलमतिशयवन्तमाघ्रासिषम्। अश्रौषं च मन्दमन्दं पदशब्दम्। श्रुत्वैव संकेतगृहान्निर्गत्य रक्ताशोकस्कन्धपार्श्वव्यवहिताङ्गयष्टिः स्थितोऽस्मि। सा च सुभ्रूः सुषीमकामा शनैरुपेत्य तत्र मामदृष्ट्वा बलवदव्यथिष्ट। व्यसृजच्च मत्तराजहंसीव कण्ठरागवल्गुगद्गदां गिरम्—'व्यक्तमस्मि विप्रलब्धा। नास्त्युपायः प्राणितुम्। अपि हृदय, किमिदमकार्यं

पदचन्द्रिका।

मरः। तेषां पङ्क्तिः सैव भित्तिस्तत्परिगतं तद्युक्तम्। गर्भगृहं गर्भागारम्। अवनिपतिताः पृथिव्यां लग्ना अरुणा आरक्ता अशोकलता अशोकशाखास्तन्मयम्। अभिनवा नूतनाः कुसुमकोरकाः पुष्पमुकुलास्त एव पुलकास्तैर्लाञ्छितं चिह्नितम्। प्रत्यग्रं नूतनं प्रवालपटलं पल्लवसमूहस्तेन पाटलं श्वेतरक्तम्। प्राविक्षमविशम्। **तत्र चेति**। स्वास्तीर्णं सुष्ठ्वास्तरणं यस्मिंस्तत्। कुसुमशयनं पुष्पयुक्तं पर्यङ्कम्। सुरतार्थमुपकरणवस्तूनि गर्भे येषामिति। कमलिनीपलाशानां कमलिनीपत्राणाम्। संपुटा द्रोणाः। सुरभिसलिलं सुगन्धोदकं तेन भरितः पूरितः भृङ्गारकः पात्रम्। 'भृङ्गारः कनकालुका' इत्यमरः। समुपविश्य संप्रविश्य। मुहूर्तं घटिकाद्वयम्। परिमलं गन्धम्। अतिशयवन्तमाधिक्यवन्तम्। आघ्रासिषम्। 'घ्रा गन्धोपादाने'। अश्रौषं श्रुतवान्। पदशब्दं चरणशब्दम्। रक्ताशोकस्कन्धस्य पार्श्वे व्यवहिताङ्गयष्टिर्यस्येति। सुषीमः शिशिरः कामो यस्याः सा। 'सुषीमः शिशिरो जडः' इत्यमरः। शनैर्मन्दम्। तत्र संकेतगृहे बलवदत्यर्थम्। अव्यथिष्ट व्यथां प्रापेत्यर्थः। व्यसृजत्। विससर्जेत्यर्थः। वल्गुः सुन्दरो गद्गदो यस्यां तथा ताम्। गिरं वाचम्। व्यक्तं प्रकटम्। विप्रलब्धा प्रतारिता। प्राणितुं

भूषणा।

कम्' इत्यमरः। भृङ्गारः भाषया 'झारी' इति प्रसिद्धः। 'भृङ्गारः कनकालुका' इत्यमरः। परिमलं जनमनोहरं गन्धम्। 'विमर्दोत्थे परिमलो गन्धे जनमनोहरे' इत्यमरः। असुषीमकामा तीव्रमन्मथा। 'सुषीमः शिशिरो जडः' इत्यमरः। विप्रलब्धा वञ्चिता। 'विप्रलब्धस्तु वञ्चितः' इत्यमरः। विप्रलब्धा प्रियं

पाठा०—१ 'विस्तीर्णम्'. २ 'मदनोपकरण'. ३ 'भृङ्गारः'. ४ 'सुभ्रूरसुषीमकामा'.

कार्यवदध्यवस्य तदसंभवेन किमेवमुत्ताम्यसि । भगवन्पञ्चबाण, कस्तवापराधः कृतो मया यदेवं दहसि, न च भस्मीकरोषि' इति। अथाहमाविर्भूय विवृतदीपभाजनः 'भामिनि, ननु बह्वपराद्धं भवत्या चित्तजन्मनो यदमुष्य जीवितभूता रतिराकृत्या कदर्थिता, धनुर्यष्टिर्भ्रूलताभ्याम्, भ्रमरमालामयी ज्या नीलालकद्युतिभिः, अस्त्राण्यपाङ्गवीक्षितवृष्टिभिः, महारजनध्वजपटांशुकं दन्तच्छदमयूखजालैः, प्रथमसुहृन्मलयमारुतः परिमलपटीयसा निःश्वासपवनेन, परभृतमतिमञ्जुलैः प्रलापैः, पुष्पमयी पताका भुजयष्टिभ्याम्, दिग्विजयारम्भपूर्णकुम्भमिथुनमुरो-

पदचन्द्रिका।

जीवितुम्। अयीति खेदोक्त्या कोमलामन्त्रणे। इदं प्रकृतम्। अकार्यमकृत्यम्। अध्यवस्य निश्चित्य। तदसंभवेन कार्यासंभवेन। उत्तामस्युत्तप्तं भवसि। पञ्चबाण मदन। दहसि दाहमात्रं करोषि। परंतु न भस्मीकरिष्यसीति। भस्मीकरणे दुःखानुभवव्यथा न स्यादिति भावः। **अथाहमिति**। आविर्भूय प्रकटीभूय। विवृतदीपभाजन उद्घाटितदीपपात्रः। भामिनीति सकोपकामिनीसंबोधनम्। 'कोपना सैव भामिनी' इत्यमरः। भवत्या। त्वयेत्यर्थः। चित्तजन्मनो मदनस्य। यद्यस्मात्। अमुष्य चित्तजन्मनः जीवितभूता प्राणभूता। रतिस्तद्भार्या। आकृत्याकारेण। कदर्थिताधिक्षेपिता (क्षिप्ता)। धनुर्यष्टिर्भ्रूलताभ्यां भ्रूवल्लीभ्याम्। भ्रमरमाला भ्रमरपङ्क्तिस्तन्मयी तत्प्रचुरा। ज्या मौर्वी। 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः। नीला श्यामा येऽलकाः कुन्तलास्तेषां द्युतिभिः। कान्तिभिः। अस्त्राणि शस्त्राणि। अपाङ्गवीक्षितं नेत्रप्रान्तदर्शनं तद्दृष्टिभिः। महारजनं कुङ्कुमम्। 'स्यात्कुसुम्भं वह्निशिखं महारजनमित्यपि' इत्यमरः। तद्युक्तो यो ध्वजपटः पताकावस्त्रं तस्यांशुरेवांशुकम्। दन्तच्छद ओष्ठः। प्रथमसुहृन्मुख्यमित्रम्। मलयमारुतो मलयवायुः। 'समीरमारुतमरुत्' इत्यमरः। परिमलपटीयसा सौगन्ध्यसमर्थेन। परभृतं कोकिलम्। अतिमञ्जुलैरतिमनोज्ञैः। 'मनोज्ञं मञ्जु मञ्जुलम्' इत्यमरः। पताकाल्पचिह्नम्। दिग्विजयारम्भे शकुनार्थं पूर्ण-

भूषणा।

तत्रादृष्ट्वा संतापसंकुला' इति रसरत्नहारः। महारजनं कुसुम्भम्। 'स्यात्कुसुम्भं वह्निशिखं महारजनमित्यपि' इत्यमरः। मञ्जुलैर्मनोहरैः। 'मनोज्ञं मञ्जु मञ्जुलम्'

लघुदीपिका।

सपीतकः'। 'भृङ्गारः कनकालुका'। महारजनम्। 'स्यात्कुसुम्भं वह्निशिखं महारजनमित्यपि'। मञ्जुलैर्मनोहरैः। 'मनोज्ञं मञ्जु मञ्जुलम्'। संनाह्यरथो युद्धरथः।

पाठा०-१ 'अध्यवसाय'. २ 'तदसंभवे'. ३ 'वीक्षितैः'.

जकुम्भयुगलेन, क्रीडासरो नाभिमण्डलेन, संनाह्यरथः श्रोणिमण्डलेन, भवनरत्नतोरणस्तम्भयुगलमूरुयुगलेन, लीलाकर्णकिसलयं चरणतलप्रभाभिः । अतः स्थान एव त्वां दुनोति मीनकेतुः । मां पुनरनपराधमधिकमायासयतीत्येष एव तस्य दोषः । तत्प्रसीद सुन्दरि, जीवय मां जीवनौषधिभिरिवापाङ्गैरनङ्गभुजङ्गदष्टम्' इत्याश्लिष्टवान् । अरीरमं च[1]ानङ्गरागपेशलविशाललोचनाम् । अवसितार्थां चारक्त[2]वलितेक्षणामीषत्स्वेदरेखोद्भेदजर्जरितकपोलमूलामनर्गल[3]कलकलप्रलापिनीम[4]रुणदशनकररुहार्पणव्यतिकरामत्यर्थपरिश्लथाङ्गीमार्तामिव लक्षयित्वा मानसीं शारीरीं च धारणां

### पदचन्द्रिका ।

कुम्भमिथुनं पूर्णघटद्वन्द्वम् । उरोजकुम्भौ स्तनकलशौ, तयोर्युगलेन युग्मेन । 'युग्मं तु युगलं युगम्' इत्यमरः । मीनो मत्स्यः क्रीडासरः खेलासरोवरम् । संनाह्यरथः संग्रामार्थं सज्जीकृतो रथः । रत्नयुक्तौ तोरणस्तम्भौ तयोर्युगलम् । कर्णकिसलयं कर्णपल्लवम् । 'पल्लवोऽस्त्री किसलयम्' इत्यमरः । अतो हेतोः । स्थाने । युक्तमित्यर्थः । 'युक्ते द्वे सांप्रतं स्थाने' इत्यमरः । दुनोति दुःखितां करोति । मीनकेतुर्मदनः । अनपराधमपराधरहितम् । अधिकं बहु । आयासयति क्लेशयति । एष मदीयस्वरूपः । तस्य मदनस्य । जीवनौषधिभिरिवापाङ्गैरित्यत्रोपमेयोपमानभावश्चन्द्रमुखवज्ज्ञेयः । अनङ्ग एव भुजङ्गः सर्पस्तेन दष्टम् । मामिति प्रागुदीरितपदेनान्वितम् । आश्लिष्टवान् । आलिलिङ्गेत्यर्थः । **अरीरममिति** । अनङ्गरागेण मदनरागेण पेशले रम्ये विशाले लोचने यस्यास्ताम् । अवसितः समाप्तोऽर्थो रेतःपतनरूपं प्रयोजनं यस्याः । वलितं वक्रितमीक्षणमवलोकनं यस्याः । 'ईक्षणं दर्शने दृष्टौ' इति विश्वः । स्वेदरेखा घर्मराजिस्तस्या उद्भेदः प्रारम्भस्तेन जर्जरितं क्लिष्टं कपोलमूलं यस्यास्ताम् । अनर्गलोऽप्रतिहतः कलकलः कोलाहलस्तं प्रलपतीति प्रलापिनी ताम् । अरुणदशने आरक्तदन्ते कररुहस्य नखस्यार्पणं दानं तद्व्यतिकरो यस्यास्तामिति व्याख्ययाश्चर्यातिशयद्योतनं व्यज्यते । अरुणं यद्दशनकररुहं दन्तनखं तस्यार्पणं करणं तद्व्यतिकरो यस्या इति वा । श्लथाङ्गीं निः-

### भूषणा ।

इत्यमरः । संनाह्यरथो युद्धरथः । अवसितार्थां कृतकृत्याम् । जातरेतःपातामित्यर्थः । चिकुरितं वलितम् । मानसीं शारीरीं च धारणाम् । 'मुष्कशिराया मूलं

### लघुदीपिका ।

अवसितार्थाम् । जातरेतःपातामित्यर्थः । चिकुरितं वलितम् । मानसीं शारीरीं च

पाठा०—१ 'अनङ्गरागावेशपेशलां विशाललोचनाम्'. २ 'चिकुरितेक्षणा'. ३ 'कलप्रलापिनी', 'कलाप्रलापिनी'. ४ 'अकरुण'.

शिथिलयन्नात्मानमपि तया समानार्थमापादयम्। तत्क्षणविमुक्तसंगतौ रतावसानिकं विधिमनुभवन्तौ चिरपरिचिताविवातिगूढविश्रम्भौ क्षणमवातिष्ठावहि। पुनरहमुष्णमायतं च निःश्वस्य किंचिद्दीनदृष्टिः सचकितप्रसारिताभ्यां भुजाभ्यामेनामनतिपीडं परिष्वज्य नातिविशदमचुम्बिषम्। अश्रुमुखी तु सा 'यदि प्रयासि नाथ, प्रयातमेव मे जीवितं गणय। नय मामपि। न चेदसौ दासजनो निष्प्रयोजनः' इत्यञ्जलिमवतंसतामनैषीत्। अवादिषं च ताम्—'अयि मुग्धे, कः सचेतनः स्त्रियमभिकामयमानां नाभिनन्दति। यदि मदनुग्रहनिश्चलस्तवाभिसंधिराचराविचारं मदुपदिष्टम्। आदर्शय रहसि राज्ञे मत्सादृश्यगर्भं चित्र-

पदचन्द्रिका।

सहावयवाम्। लक्षयित्वा दृष्ट्वा। मानसीं शारीरीं च धारणाम्। 'शरीरधारणा यत्तु भौतिकं तु निरीक्षणम्। मानसं तु मुनीनां स्यादाश्रमेषु विसर्पणम्। अभ्यासं धारयेद्रेतो यावत्स्यात्कृतिनिर्वृतिः॥' इति वात्स्यायने कामशास्त्रे। तया नायिकया। समानार्थमापादयं समपादयम्। **तदिति**। विमुक्तौ च तौ संगतौ चेति। अनाश्लिष्टस्थिताविति भावः। रतावसानिकं सुरतान्तसमयोचितम्। विधिं व्यापारम्। अतिगूढविश्रम्भावतिगुप्तविश्वासौ। क्षणं किंचित्कालम्। **अवातिष्ठावहीति**। 'ष्ठा गतिनिवृत्तौ' इत्यस्य रूपम्। आयतं दीर्घम्। एनां नायिकाम्। परिष्वज्यालिङ्ग्य। अश्रु मुखे यस्या इति। प्रयातमेव गतमेव। गणय। जानीहीत्यर्थः। असौ मद्रूपः। निष्प्रयोजनोऽकिंचित्कर इति यावत्। अञ्जलिं प्रसृतिद्वयमेलनम्। 'पाणिर्निकुब्जः प्रसृतिस्तौ युतावञ्जलिः पुमान्' इत्यमरः। अवतंसतां शिरोभूषणताम्। अनैषीत्। 'णीञ् प्रापणे' इत्यस्य द्विकर्मकता। अभिकामयमानामभिकामयतेऽसौ तथा। स्वयमनुरक्तामित्यर्थः। नाभिनन्दति न स्तौति। **यदीति**। अभिसंधिरभिप्रायः। आचर। कुर्वित्यर्थः। अविचारं विचाररहितम्। **आदर्शयेति**। रहस्येकान्ते। मत्सादृश्यगर्भं मत्सदृशरूपयुक्तम्। इयमाकृतिश्चित्र-

भूषणा।

दृढमङ्गुल्या निपीड्य रतिकाले। चिन्तान्तरनिहितमनाः कुम्भितपवनश्च्युतिं जयति॥' इति। अभिकामयमानां नाभिनन्दति। ध्वनितं चैतदभिज्ञानशाकुन्तले—

लघुदीपिका।

धारणाम्। 'शरीरधारणा यत्तु भौतिकं तु निरीक्षणम्। मानसं तु मुनीनां स्यादा-

पाठा०—१ 'अतिरूढ'. २ 'तदावयोर्वियोगकाले समुपायाते पुनरहमुष्णम्'.

पटम् । आचक्ष्व च 'किमियमाकृतिः पुरुषसौन्दर्यस्य पारमारुढा न वा' इति । 'बाढमारूढा' इति नूनमसौ वक्ष्यति । ब्रूहि भूयः—'यद्येवम्, अस्ति कापि तापसी देशान्तरभ्रमणलब्धप्रागल्भ्या मम च मातृभूता । तयेदमालेख्यरूपं पुरस्कृत्याहमुक्ता—'सोऽस्ति तादृशो मन्त्रो येन त्वमुपोषिता पर्वणि विविक्तायां भूमौ पुरोहितैर्हुतमुक्ते सप्तार्चिषि नक्तमेकाकिनी शतं चन्दनसमिधः, शतमगुरुसमिधः, कर्पूरमुष्टीः, पट्टवस्त्राणि च प्रभूतानि हुत्वा भविष्यस्येवमाकृतिः । अथ चालयिष्यसि घण्टाम् । घण्टापुटक्वणिताहूतश्च भर्ता भवत्यै सर्वरहस्यमाख्याय निमीलिताक्षो यदि त्वामालिङ्गेत्, इयमाकृतिरमुमुपसंक्रामेत् । त्वं तु भविष्यसि यथा पुराकारैव । यदि भवत्यै भवत्प्रियाय चैवं रोचेत, न चास्मिन्विधौ विसंवादः कार्यः' इति । 'वपुश्चेदिदं

पदचन्द्रिका ।

पटस्था । पारमुत्कटताम् । काप्यपरिमितशक्तिः । तापसी तपस्विनी । देशान्तरभ्रमणेनानेकदेशगमनेन लब्धं प्रागल्भ्यं प्रगल्भता ययेति सा । तया तापस्या । तादृशः प्रभाववानित्यर्थः । उपोषिताहारवर्जिता । 'उपवासः स विज्ञेयः सर्वाहारविवर्जितः' इति स्मृतेः । पर्वण्यमावास्यादौ । विविक्तायां पूतायां विजनायां वा । 'विविक्तौ पूतविजनौ' इति । पूर्वं हुतः पश्चान्मुक्तस्तस्मिन् । सप्तार्चिष्यग्नौ । 'सप्तार्चिर्दमुनाः शुक्रश्चित्रभानुर्विभावसुः' इत्यमरः । नक्तं रात्रौ । एकाकिनी । 'एकादाकिनिच्चासहाये' (५।३।५२) इत्याकिनिच्प्रत्ययः । अद्वितीयेत्यर्थः । समिध इति द्वितीयाबहुवचनम् । 'काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित्स्त्रियाम्' इत्यमरः । कर्पूरमुष्टीः । बद्धकरपरिमितकर्पूरानित्यर्थः । 'मुष्टिर्बद्धकरे' इति विश्वः । प्रभूतानि प्रचुराणि । **भविष्यसीति** । एवमाकृतिश्चित्रफलकलिखिताकृतिः । क्वणितं प्रतिशब्दः । 'क्वणितं प्रतिशब्दः स्याद्वीणानादः' इति । सर्वरहस्यं समस्तगुप्तविषयम् । उपसंक्रामेत् । संक्रान्ता भविष्यतीत्यर्थः । पुराकारा पूर्वाकृतिः । भवत्यै । तुभ्यमित्यर्थः । भवत्प्रियाय लब्धत्रे । एवं पूर्वोक्तप्रकारोदितम् । अस्मिन्विधावस्मिन्प्रयोजने । विसंवादः । 'विसंवादोऽन्यथाभावः' इति वैजयन्ती । अन्यथाभावो न कार्यः । इदं वपुरन्यथाभूतम्

भूषणा ।

'लभेत वा प्रार्थयिता न वा श्रियं श्रिया दुरापः कथमीप्सितो भवेत्' इति । भवत्यै । 'रुच्यर्थानां–' (१।४।३३) इति चतुर्थी । विसंवादोऽन्यथाभावः । विसंवादोऽन्य-

लघुदीपिका ।

श्रमेषु विसर्पणम् । 'अभ्यासाद्धारयेद्रेतो यावत्स्यात्कृतिनिर्वृतिः ॥' इति वात्स्यायने ।

पाठा०–१ 'शङ्कुः'.

तवाभिमतं सह सुहृन्मन्त्रिभिरनुजैः पौरजानपदैश्च संप्रधार्य[1] तेषामप्यनुमते कर्मण्यभिमुखेन स्थेयम्' इति । स नियतमभ्युपैष्यति । पुनरस्यामेव प्रमदवनवाटी[2]शृङ्गाटिकायामाथर्वणिकेन विधिना संज्ञपितपशुनाभिहुत्य मुक्ते हिरण्यरेतसि तद्धूमशमनेन[3] संप्रविष्टेन मयास्मिन्नेव लतामण्डपे स्थातव्यम् । त्वं पुनः प्रगाढायां प्रदोषवेलायामालपिष्यसि कर्णे कृतनर्मस्मिता विकटवर्माणम्—'धूर्तोऽसि त्वमकृतज्ञश्च । मदनुग्रहलब्धेनापि रूपेण लोकलोचनोत्सवायमानेन मत्सपत्नीरभिरमयिष्यसि । नाहमात्मविनाशाय वेतालोत्थापनमाचरेयम्' इति । श्रुत्वेदं त्वद्वचः स यद्वदिष्यति तन्मह्यमेकाकिन्युपागत्य निवेदयिष्यसि । ततः पर-

## पदचन्द्रिका ।

अभिमतं संमतम् । सुहृद्भिर्बान्धवैः । मन्त्रिभिः प्रधानैः । अनुजैः कनिष्ठभ्रातृभिः । संप्रधार्य निश्चित्य । 'निर्णयः संप्रधारणम्' । तेषां पूर्वोक्तानाम् । अनुमते संमते । कर्मणि कार्ये । शृङ्गाटिकायामल्पचतुष्पथे । 'शृङ्गाटकचतुष्पथे' इत्यमरः । आथर्वणिकेन पुरोहितेन संज्ञपितो मारितो यः पशुस्तेन । 'संज्ञपितं विशसितं समालब्धम्' इति वररुचिः । अभिहुत्य हुत्वा हिरण्यरेतस्यग्नौ । 'हिरण्यरेता हुतभुग्दहनः' इत्यमरः । **त्वं पुनरिति** । प्रगाढायामतिदृढायाम् । 'गाढबाढदृढानि च' इत्यमरः । प्रदोषवेलायां रजनीमुखसमये । आलपिष्यसि वदिष्यसि । कृतं नर्मस्मितं परिहासहसितं ययेति सा । 'द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च' इत्यमरः । धूर्तो वञ्चकः । 'पापो धूर्तस्तु वञ्चकः' इत्यमरः । अकृतज्ञः कृतज्ञतारहितः । मदनुग्रहलब्धेन मत्प्रसादप्राप्तेन । लोकलोचनानां लोकनेत्राणामुत्सववदाचरतीति तथा तेन । आत्मविनाशाय स्वमरणाय । वेतालोत्थापनं भूत-

## भूषणा ।

थाभावः' इति वैजयन्ती । संप्रधार्य । शृङ्गाटिकायां चतुष्पथे । 'शृङ्गाटकचतुष्पथे' इत्यमरः । संज्ञपितं विशसितम् । नर्मस्मितं परिहासस्मितम् । 'द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च' इत्यमरः । धूर्तो वञ्चकः । 'पापो

## लघुदीपिका ।

'विसंवादोऽन्यथाभावः' इति वैजयन्ती । संप्रधार्य निर्णीय । 'निर्णयः संप्रधारणम्' । शृङ्गाटिका । 'शृङ्गाटकचतुष्पथे' । 'संज्ञपितं विशसितं समालब्धम्' । नर्मस्मितं परिहासस्मितम् । 'द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च' । 'पापो धूर्तस्तु वञ्चकः'

पाठा०—१ 'संमन्त्र्य'. २ 'वीथि'. ३ 'धूमपटेन सह'.

महमेव ज्ञास्यामि । मत्पदचिह्नानि चोपवने पुष्करिकया प्रमार्जय' इति । सा 'तथा' इति शास्त्रोपदेशमिव मदुक्तमादृत्यातृप्तसुरतरागैव कथंकथमप्यगादन्तःपुरम् । अहमपि यथाप्रवेशं निर्गत्य स्वमेवावासमयासिषम् ।

अथ सा मत्तकाशिनी तथा तमर्थमन्वतिष्ठत् । अतिष्ठच्च तन्मते स दुर्मतिः । अभ्रमच्च पौरजानपदेष्वियमद्भुतायमाना वार्ता—'राजा किल विकटवर्मा देवीमन्त्रबलेन देवयोग्यं वपुरासादयिष्यति । नूनमेष विप्रलम्भो नातिकल्याणः । कैव कथा प्रमादस्य । स्वस्मिन्नेवान्तःपुरोपवने स्वाग्रमहिष्यैव संपाद्यः किलायमर्थः । तथा हि बृहस्पतिप्रतिमबुद्धिभिर्मन्त्रिभिरप्यभ्यूह्यानुमतः । यद्येवं भावि नान्यदतः परमस्ति किंचिदद्भुतम् । अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः' इति प्रसृतेषु लोकप्रवादेषु प्राप्ते पर्वदिवसे, प्रगाढायां प्रौढतमसि प्रदोषवेलायामन्तःपुरोद्यानादुदैरयद्धूर्जटिकण्ठधूम्रो धूमोद्गमः । क्षीराज्यदधितिल-

पदचन्द्रिका ।

विशेषोत्पादनम् । स विकटवर्मा । **तत इति** । ज्ञास्यामि जानामि । प्रमार्जय प्रोञ्छ । अतृप्तसुरतरागैवासंपूर्णसुरतेच्छा । कथंकथमपि महता प्रबन्धेन । आवासं वसतिस्थानम् । अयासिषं प्रापम् ।

**अथेति** । मत्तकाशिन्युत्तमाङ्गना । 'वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी' इत्यमरः । तमर्थं तदुपदिष्टं प्रयोजनम् । अन्वतिष्ठत् । अकरोदित्यर्थः । स दुर्मतिर्विकटवर्मा । पौरजानपदेषु नागरिकलोकसंघेषु । अद्भुतायमानाश्चर्यायमाणा । वार्ता प्रवृत्तिः । देवी पट्टराज्ञी । 'देवी कृताभिषेकायाम्' इत्यमरः । मन्त्रबलेन मन्त्रसामर्थ्येन । देवयोग्यं देवार्हम् । नातिकल्याणो नातिशुभः । स्वाग्रमहिषी । 'कृताभिषेका महिषी' इत्यमरः । **तथा हीति** । बृहस्पतिप्रतिमा गुरुसमाना बुद्धिर्येषामिति तैः । मन्त्रिभिः प्रधानैः । अभ्यूह्य वितर्क्य । अनुमतोऽनुमोदितः । भावि भविष्यत् । अतःपरमेतदधिकम् । प्रसृतेष्वितस्ततो गतेषु । लोकप्रवादेषु जनवार्तासु । प्राप्ते पर्वदिवसेऽमावास्यायाम् । प्रौढतमसि गाढतमसि । अन्तःपुरस्योद्यानमुपवनम् । उदैरयदुदगमत् । धूर्जटिर्महादेवस्तस्य कण्ठस्तद्वद्धूम्रः कृष्णलोहितः । 'धूम्रधूमलौ कृष्णलोहिते' इत्यमरः । धूमोद्गमो धूमप्रारम्भः । क्षीरं दुग्धम् । 'दुग्धं क्षीरं पयः समम्' इत्यमरः । आज्यं घृतम् । 'घृतमाज्यं हविः सर्पिः' इत्यमरः । दधि प्रसिद्धम् । तिलाश्चागौर-

पाठा०—१ 'अभूदनुमतः'.

गौरसर्षपवसामांसरुधिराहुतीनां च परिमलः पवनानुसारी दिशि दिशि प्रावात्सीत्। प्रशान्ते च सहसा धूमोद्गमे तस्मिन्नहमविशम्। निशान्तोद्यानमगाच्च गजगामिनी। आलिङ्ग्य च मां सस्मितं समभ्यधत्त—'धूर्त, सिद्धं ते समीहितम्। अवसितश्च पशुरसौ। अमुष्य प्रलोभनाय त्वदादिष्टया दिशा मयोक्तम्—'कितव न साधयामि ते सौन्दर्यम्। एवं सुन्दरो हि त्वमप्सरसामपि स्पृहणीयो भविष्यसि, किमुत मानुषीणाम्। मधुकर इव निसर्गचपलो यत्र क्वचिदासज्जति भवादृशो नृशंसः' इति। तेन तु मे पादयोर्निपत्याभिहितम्—'रम्भोरु, सहस्व मत्कृतानि दुश्चरितानि। मनसापि न चिन्तयेयमितः परमितरनारीम्। त्वरस्व प्रस्तुते कर्मणि' इति। तदहमीदृशेन वैवाहिकेन नेपथ्येन त्वामभिसृतवती। प्रागपि रागाग्निसाक्षिकमनङ्गेन गुरुणा दत्तैव

---

पदचन्द्रिका।

सर्षपाः सिद्धार्थाः। 'सिद्धार्थस्त्वेष धवलः' इत्यमरः। वसा वपा। 'हृन्मेदस्तु वपा वसा' इत्यमरः। मांसं पललम्। 'पिशितं तरसं मांसं पललं क्रव्यमामिषम्' इत्यमरः। रुधिरं रक्तम्। परिमलो गन्धः। पवनानुसारी यथावायुगामी। दिशि दिशि प्रतिदिशम्। प्रावात्सीत्। आगच्छदित्यर्थः। प्रशान्ते विनष्टे। निशान्तोद्यानं गृहोपवनम्। 'निशान्तपस्त्यसदनम्' इत्यमरः। समभ्यधत्त। उवाचेत्यर्थः। धूर्तेति संबोधनम्। समीहितमीप्सितम्। अवसितोऽवसानं प्राप्तः। अमुष्य प्रलोभनाय विकटवर्मप्रलोभनार्थम्। त्वदादिष्टया दिशा। त्वदादिष्टेन मार्गेणेत्यर्थः। **कितवेति**। स्पृहणीयोऽभिलषणीयः। मानुषीणां मनुष्यस्त्रीणाम्। मधुकर इव भ्रमरवत्। चपलश्चञ्चलः। यत्र क्वचिद्यत्रकुत्रापि। आसज्जत्यासक्तो भवति। भवादृशस्त्वत्सदृशः। नृशंसः क्रूरः। तेन विकटवर्मणा। अभिहितमुक्तम्। सहस्व। 'षह मर्षणे'। आत्मनेपदम्। मत्कृतानि मयाचरितानि। मे मनसापि। इतरनारीमन्यनायिकाम्। त्वरस्व त्वरां कुरु। प्रस्तुत उपक्रान्ते। वैवाहिकेन विवाहसंबन्धिना। नेपथ्येन वेषेण। रागाग्निरिच्छाग्निः। अनङ्गेन मदनेन। जातवेदसमग्निम्। 'जातवेदास्त-

भूषणा।

धूर्तस्तु वञ्चकः' इत्यमरः। उदैरयदुदगमत्। निशान्तोद्यानं गृहोद्यानम्। 'निशा-

लघुदीपिका।

उदैरयदुदगमम्। निशान्तोद्यानम्। 'निशान्तपस्त्यसदनं भवनागारमन्दिरम्'।

तुभ्यमेषा जाया । पुनरपीमं जातवेदसं साक्षीकृत्य स्वहृदयेन दत्ता' इति प्रपदेन चरणपृष्ठे निष्पीड्योत्क्षिप्तपादपार्ष्णिरितरेतरव्यतिषक्तकोमलाङ्गुलिदलेन भुजलताद्वयेन कंधरां समावेष्ट्य सलीलमाननमानमय्य स्वयमुन्नमितमुखकमला दिभ्रान्तविशालदृष्टिरसकृदभ्यचुम्बत् ।

अथैनाम्—'इहैव कुरण्टकगुल्मगर्भे तिष्ठ यावदहं निर्गत्य साधयेयं साध्यं सम्यक्' इति विसृज्य तामुपसृत्य होमानलप्रदेशमशोकशाखावलम्बिनीं घण्टामचालयम् । अकूजच्च सा तं जनं कृतान्तदूतीवाह्वयन्ती । प्रावर्तिषि चाहमगुरुचन्दनप्रमुखानि होतुम् । अयासीच्च राजा यथोक्तं देशम् । शङ्कापन्नमिव किंचित्सविस्मयं विचार्य तिष्ठन्तमब्रवम्—'ब्रूहि सत्यं भूयोऽपि मे भगवन्तं चित्रभानुमेव साक्षीकृत्य । न चेदनेन रूपेण मत्सपत्नीरभिरमयिष्यसि, ततस्त्वयीदं रूपं संक्राम-

पदचन्द्रिका ।

नूनपात्' इत्यमरः । प्रपदं पादाग्रम् । 'पादाग्रं प्रपदम्' इत्यमरः । इतरेतरं परस्परम् । व्यतिषक्तं मिलितम् । कंधरां ग्रीवाम् । 'शिरोधिः कंधरेत्यपि' इत्यमरः ॥

**अथेति** । कुरण्टकाः पीतकुरबकाः । 'तत्र शोणे कुरबकस्तत्र पीते कुरण्टकः' इत्यमरः । तेषां गुल्मः स्तम्बः । 'अप्रकाण्डे स्तम्बगुल्मौ' इत्यमरः । साध्यं कार्यम् । अशोकशाखावलम्बिनीमशोकस्कन्धबद्धाम् । अचालयं चालितवानस्मि । सा घण्टा । तं जनं विकटवर्मरूपम् । कृतान्तदूतीव यमदूतीव । प्रावर्तिषि प्रवृत्तोऽभवम् । अयासीदागतवान् । शङ्कापन्नमिव प्राप्तसंशयमिव । तिष्ठन्तं विकटवर्माणम् । चित्रभानुमग्निम् । 'चित्रभानुर्विभावसुः' इत्यमरः । अभिरमयिष्यसि

भूषणा ।

न्तपस्त्यसदनम्' इत्यमरः । पादाग्रं प्रपदम् । एवमेवामरः । पादोत्क्षेपणादेव पार्ष्ण्युत्क्षेपेऽपि गोबलीवर्दन्यायात्पृथगुक्तिः । 'तद्ग्रन्थी घुटिके गुल्फौ पुमान्पार्ष्णिरधो द्वयोः' इत्यमरः । प्रमदवनशृङ्गाटिकायाम् । अत्र कामन्दकः—'न हि देवीगृहं गच्छेदात्मीयात्संनिवेशनात् । अत्यन्तवल्लभोऽपीह विश्वासं स्त्रीषु न व्रजेत् । देवीगृहगतं भ्राता भद्रसेनममारयत् । मातुः शय्यान्तरे लीनः कारूषं चौरसः सुतः । लाजान्विषेण संयोज्य मधुनेति विलोभितम् । देवी तु काशिराजेन्द्रं निजघान

लघुदीपिका ।

'पादाग्रं प्रपदं प्रोक्तं व्यतिषक्तं करम्बितम्' । निचाय्य दृष्ट्वा । व्यापाद्य हत्वा ।

पाठा०-१ 'पादाग्रेण'.

येयम्' इति । स तदैव—'देव्येवेयम्, नोपधिः' इति स्फुटोपजातसंप्रत्ययः प्रावर्तत शपथाय । स्मित्वा पुनर्मयोक्तम्—'किं वा शपथेन । कैव हि मानुषी मां परिभविष्यति । यद्यप्सरोभिः संगच्छसे, संगच्छस्व कामम् । कथय कानि ते रहस्यानि । तत्कथनान्ते हि त्वत्स्वरूपभ्रंशः' इति । सोऽब्रवीत्—'अस्ति बद्धो मत्पितुः कनीयान्भ्राता प्रहारवर्मा । तं विषान्नेन व्यापाद्याजीर्णदोषं ख्यापयेयमिति मन्त्रिभिः सहाध्यवसितम् । अनुजाय विशालवर्मणे दण्डचक्रं पुण्ड्रदेशाभिक्रमणाय[1] दित्सितम् । पौरवृद्धश्च पाञ्चालिकः परित्रातश्च सार्थवाहः खनतिनाम्नो यवनाद्वज्रमेकं वसुंधरामूल्यं लघीयसार्घेण लभ्यमिति ममैकान्तेऽमन्त्रयेताम् । गृहपतिश्च ममान्तरङ्गभूतो जनपदमहत्तरः शतहलिरलीकवादशीलमवलेपवन्तं दुष्टग्रामण्यमनन्तसीरं जनपदकोपेन घातयेयमिति दण्डधरानुद्धारकर्मणि मत्प्रयोगान्नियोक्तुमभ्युपा-

पदचन्द्रिका ।

क्रीडयिष्यसि । संक्रामयेयं योजयेयम् । देव्येवेयं राज्ञ्येवेयम् । उपधिः कपटम् । उपजातसंप्रत्ययः प्राप्तविश्वासः । स्मित्वेषद्धास्यं कृत्वा । मानुषी मनुष्यस्त्री परिभविष्यति पराभवं करिष्यति । कामं यथेष्टम् । रहस्यानि गोप्यानि । विषान्नेन विषसंपृक्तान्नेन । व्यापाद्य मारयित्वा । अजीर्णदोषं विषूचिकाम् । अध्यवसितं निश्चितीकृतम् । दण्डचक्रं सेनाचक्रम् । 'दण्डो यमे मानभेदे लगुडे दमसैन्ययोः' इति विश्वः । पुण्ड्रदेशाभिक्रमणाय तद्देशग्रहणाय । दित्सितं दातुमभिलषितम् । पाञ्चालिकस्तन्नामा । परित्रातो रक्षितः । सार्थवाहस्तन्नामा । वज्रं हीरकम् । वसुंधरामूल्यं पृथ्वीमूल्यम् । अमन्त्रयेतां कथयेताम् । गृहपतिर्ग्रामाध्यक्षः । 'ग्रामाध्यक्षो गृहपतिः' इति कोशः । अन्तरङ्गभूत आत्मभूतः । जनपदमहत्तरो देशश्रेष्ठः । 'नीवृज्जनपदो देशविषयौ तूपवर्तनम्' इत्यमरः । शतहलिः शतं हला यस्येति तथा । अलीकवादशीलं मिथ्याभाषणस्वभावम् । अवलेपवन्तं सगर्वम् । दुष्टं ग्रामण्यं यस्येति तम् । अनन्तसीरमेतन्नामकम् । जनपदकोपेन लोकक्रोधेन । घातयेयं मारयिष्ये । दण्डधरः

भूषणा ।

रहोगतम् ॥ विषाक्तेन च सौवीरं मेखलामणिना नृपम् । नूपुरेण च वैरन्त्यं जारूषं दर्पणेन च ॥ वेण्यां शस्त्रं समाधाय तथैव च विदूरथम् । अहितृत्तं परिहरेच्छत्रौ चापि प्रयोजयेत् ॥' इति । व्यापाद्य हत्वा । पुण्ड्रा देशविशेषाः । गृहपतिर्ग्रामाध्यक्षः । दण्डधरः सेनापतिः । उद्धारकर्मणि निर्याणकर्मणि । भस्म-

लघुदीपिका ।

पुण्ड्रा देशविशेषाः । ग्रामाध्यक्षो गृहपतिः । दण्डधरः सेनापतिः । उद्धारकर्मणि

पाठा०–१ 'पुण्ड्राभियोगाय'.

गमत् । इत्थमिदमचिरप्रस्तुतं रहस्यम् ।' इत्याकर्ण्य तम् 'इयत्तवायुः । उपपद्यस्व स्वकर्मोचितां गतिम्' इति च्छुरिकया द्विधाकृत्य कृत्त-मात्रं तस्मिन्नेव प्रवृत्तस्फीतसर्पिषि हिरण्यरेतस्यजूहवम् । अभू-च्चासौ भस्मसात् । अथ स्त्रीस्वभावादीषद्विह्वलां हृदयवल्लभां समा-श्वास्य हस्तकिसलयेऽवलम्ब्य गत्वा तद्गृहमनुज्ञयास्याः सर्वाण्य-न्तःपुराण्याहूय सद्य एव सेवां दत्तवान् । सविस्मितविलासिनी-सार्थमध्ये कंचिद्विहृत्य कालं विसृष्टावरोधमण्डलस्तामेव संहृतो-रुमूरूपपीडं भुजोपपीडं चोपगृह्य तल्पेऽभिरमयन्नल्पामिव तां निशामत्यनैषम् । अलभे च तन्मुखात्तद्राजकुलस्य शीलम् । उषसि स्नात्वा कृतमङ्गलो मन्त्रिभिः सह समगच्छे । तांश्चाब्रवम्—'आर्याः, रूपेणैव सह परिवृत्तो मम स्वभावः । य एष विषान्नेन हन्तुं चिन्तितः पिता मे स मुक्त्वा स्वमेतद्राज्यं भूय एव ग्राहयितव्यः । पितृवदमुष्मिन्वयं शुश्रूषयैव वर्तामहे । न ह्यस्ति पितृवधात्परं पातकम्' इति । भ्रातरं च विशालवर्माणमाहूयो-क्तवान्—'वत्स, न सुभिक्षाः सांप्रतं पुण्ड्राः । ते दुःखमोहोप-

पदचन्द्रिका ।

सेनापतिः । उद्धारकर्मणि निर्याणकर्मणि । नियोक्तुं नियोजयितुम् । अभ्युपागमत् । अचिरप्रस्तुतं शीघ्रप्रक्रान्तम् । आकर्ण्य श्रुत्वा । इयत्तवायुरेतावत्तवायुष्यम् । उप-पद्यस्व प्राप्नुहि । भस्मसाद्रक्षावशेषः । 'विभाषा साति कार्त्स्न्ये' ( ५।४।५२ ) इति सातिप्रत्ययः । ईषद्विह्वलामल्पव्याकुलाम् । हस्तकिसलये पाणिपल्लवे । अवलम्ब्य धृत्वा । सविस्मितः साश्चर्यः । विलासिनीसार्थः स्त्रीसमूहः । विहृत्य क्रीडित्वा । विसृष्टावरोधमण्डलो विसर्जितान्तःपुरस्त्रीसमूहः । तामेव कल्पसुन्दरीमेव । ऊर्वो-रुपपीडा यत्रेति क्रियाविशेषणम् । भुजोपपीडं च गाढालिङ्गनपूर्वकमिति भावः । तन्मुखात्कल्पसुन्दरीमुखात् । शीलं स्वभावम् । उषसि प्रभाते । तान्मन्त्रिणः । आर्याः श्रेष्ठाः । परिवृत्तः परावृत्तिं प्राप्तः । ग्राहयितव्यः । यथा गृह्णाति तथा कार्य-मित्यर्थः । अमुष्मिन्प्रहारवर्मणि । शुश्रूषया सेवया । वत्सेति संबोधनम् । सुभिक्षाः

भूषणा ।

साद्भस्मावशेषः । 'विभाषा साति कार्त्स्न्ये' (५।४।५२) इति सातिः । ऊरूपपीडम् । 'सप्तम्यां चोप–'(३।४।४९) इति णमुल् । पितृवत्पितरीव । 'तत्र तस्येव' (५।१।११६)

लघुदीपिका ।

निर्याणकर्मणि । भस्मसाद्भस्मावशेषः । 'विभाषा साति कार्त्स्न्ये' ( ५।४।५२ ) इति सातिप्रत्ययः । पितृवत्पितुरिव । 'तत्र तस्येव' ( ५।१।११६ ) इति वत्प्रत्ययः ।

पाठा०–१ 'कृत्तगात्रम्'.

हस्तास्त्यक्तात्मानो राष्ट्रं नः समृद्धमभिद्रवेयुः । अतो मुष्टिवधः सस्यवधो वा यदोत्पद्यते तदाभियास्यसि, नाद्य यात्रा युक्ता' इति । नगरवृद्धावप्यलापिषम्—'अल्पीयसा मूल्येन महार्हं वस्तु मास्तु मे लभ्यं धर्मरक्षायै, तदनुगुणेनैव मूल्येनादः क्रीयताम्' इति । शतहलिं च राष्ट्रमुख्यमाहूयाख्यातवान्—'योऽसावनन्तसीरः प्रहारवर्मणः पक्ष इति निनाशयिषितः, सोऽपि पितरि मे प्रकृतिस्थे किमिति नाश्येत, तत्त्वयापि तस्मिन्संरम्भो न कार्यः' इति । त इमे सर्वमाभिज्ञानिकमुपलभ्य 'स एवायम्' इति निश्चिन्वाना विस्मयमानाश्च मां महादेवीं च प्रशंसन्तो मन्त्रबलानि चोद्घोषयन्तो बन्धनात्पितरौ निष्क्रामय्य स्वं राज्यं प्रत्यपादयन् । अहं च तया मे धात्र्या सर्वमिदं ममाचेष्टितं रहसि पित्रोरवगमय्य प्रहर्षकाष्ठाधिरूढयोस्तयोः पादमूलमभजे । अभज्ये च यौवराज्यलक्ष्म्या तदनुज्ञातया । प्रसाधितात्मा देवपादविरहदुःखदुर्भ-

---

पदचन्द्रिका ।

समृद्धान्नाः । नोऽस्माकम् । समृद्धं सस्यादिसंपन्नम् । मुष्टिवधो बीजप्रक्षेपघातः । सस्यवधः परिणतधान्यच्छेदः । अभियास्यसि गमिष्यसि । नगरवृद्धौ पाञ्चालिकसार्थवाहौ । अल्पीयसाल्पतरेण । महार्हं बहुमूल्यम् । तदनुगुणेनैव वस्त्रानुकूलेनैव । मूल्येन क्रीयतां क्रयेण गृह्यताम् । पक्षः सहायः । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति वैजयन्ती । निनाशयिषितो नाशयितुमिष्टः । पितरि प्रहारवर्मणि । प्रकृतिस्थे स्वराज्यस्थिते । तस्मिन्ननन्तसीरनाशे । संरम्भ आदरः । आभिज्ञानिकमभिज्ञानकम् । स्वार्थे ठक् । महादेवीं राजपत्नीम् । उद्घोषयन्तः प्रकटयन्तः । स्वं राज्यं प्रत्यपादयन् । ददुरित्यर्थः । 'प्रदानं प्रतिपादनम्' इति वैजयन्ती । तथा धात्र्या वृद्धतापसीरूपया । प्रहर्षकाष्ठा संतोषमर्यादा । प्रसाधितात्मोपयुक्तबुद्धिः

भूषणा ।

इति वतिः । 'न सांप्रतं सुभिक्षाः पुण्ड्राः' इति पाठः । यानकालमाह याज्ञवल्क्यः—'यदा सस्यगुणोपेतं परराष्ट्रं तदा व्रजेत्' इति । 'गुणैश्च जलेन्धनतृणादिभिः' इति विज्ञानेश्वरो व्याख्यातवान् । निनाशयिषितः नाशयितुं विचारितः । आभिज्ञानिकमभिज्ञानम् । स्वार्थे ठक् । प्रत्यपादयन् । 'प्रदानं प्रतिपादनम्' इति वैजयन्ती । ददुरित्यर्थः ।

लघुदीपिका ।

'दुर्भिक्षं दुःसनं(?)समे' इति भागुरिः । मुष्टिवधो बीजप्रक्षेपघातः । पक्षः सहायः । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु' इति वैजयन्ती । निनाशयिषितो नाशयितुं

गान्भोगान्निर्विशन्भूयोऽस्य पितृसखस्य सिंहवर्मणो लेख्याच्चण्डवर्मणश्चम्पाभियोगमवगम्य 'शत्रुवधो मित्ररक्षा चोभयमपि करणीयमेव' इत्यलघुना लघुसमुत्थानेन सैन्यचक्रेणाभ्यसरम् । अभवं च भूमिस्त्वत्पादलक्ष्मीसाक्षात्क्रियामहोत्सवानन्दराशेः' इति ।

श्रुत्वैतद्देवीं राजवाहनः सस्मितमवादीत्—पश्यत पारतल्पिकमुपधियुक्तमपि गुरुजनबन्धव्यसनमुक्तिहेतुतया दुष्टामित्रप्रमापणाभ्युपायतया राज्योपलब्धिमूलतया च पुष्कलावर्थधर्मावध्यरीरधत् । किं हि बुद्धिमत्प्रयुक्तं नाभ्युपैति शोभाम्' इति । अर्थपालमुखे निधाय स्निग्धदीर्घां दृष्टिम् 'आचष्टां भवानात्मीयचरितम्' इत्यादिदेश । सोऽपि बद्धाञ्जलिरभिदधे—

इति श्रीदण्डिनः कृतौ दशकुमारचरित उपहारवर्मचरितं नाम तृतीय उच्छ्वासः ।

---

पदचन्द्रिका ।

देवस्त्वं राजवाहनः । निर्विशन्नुपभुञ्जन् । 'निर्वेशो भृतियोगयोः' इत्यमरः । चम्पाभियोगं चम्पोपद्रावणम् । अवगम्य ज्ञात्वा । अलघुना बहुतरेण । लघुसमुत्थानेन शीघ्रगामिना । 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः । अभ्यसरं गतवान् । त्वत्पादलक्ष्मीस्त्वच्चरणशोभा तस्याः साक्षात्क्रिया प्रत्यक्षीकरणं स एव महोत्सवः । भूमिः स्थानम् । अभवं जातः ।

पारतल्पिकं परस्त्रीगामिनम् । कर्तृ । उपधियुक्तं कपटयुक्तम् । गुरुजनः पितृजनः । व्यसनं दुःखम् । प्रमापणं मारणम् । राज्योपलब्धी राज्यप्राप्तिः । पुष्कलौ बहुतरौ । अरीरधदसाधयत् । 'राध साध संसिद्धौ' । बुद्धिमत्प्रयुक्तं बुद्धिमता कृतम् । अर्थपालो दशकुमारेष्वन्यतमः । सोऽप्यर्थपालः । अभिदधे वक्तुमुपचक्रमे ॥

**इति श्रीदशकुमारटीकायां पदचन्द्रिकाभिधायां तृतीय उच्छ्वासः ॥**

भूषणा ।

प्रसाधितात्मोपयुक्तबुद्धिः । 'आत्मा यत्नो धृतिर्बुद्धिः' इत्यमरः । दुर्भगान्विरसान् । पारतल्पिकं परदारगामिनम् । 'तल्पं शय्याट्टदारेषु' इत्यमरः । अरीरधदसाधयत् । 'राध साध संसिद्धौ' ॥ **इति श्रीदशकुमारटीकायां भूषणाभिधायां तृतीय उच्छ्वासः ॥**

लघुदीपिका ।

विचारितः । आभिज्ञानिकमभिज्ञानम् । स्वार्थे ठक् । प्रत्यपादयन् । 'प्रदानं प्रतिपादनम्' इति वैजयन्ती । ददुरित्यर्थः । प्रसाधितात्मोपयुक्तबुद्धिः । 'आत्मा यत्नो धृतिर्बुद्धि' । दुर्भगान्विरसान् । पारतल्पिकं परतल्पगामिनम् । अरीरधदसाधयत् । 'राध साध संसिद्धौ' ॥ **इति लघुदीपिकाख्यटीकायां तृतीय उच्छ्वासः ॥**

## चतुर्थोच्छ्वासः ।

देव, सोऽहमप्येभिरेव सुहृद्भिरेककर्मोर्मिमालिनेमिभूमिवलयं परिभ्रमन्नुपासरं कदाचित्काशीपुरीं वाराणसीम् । उपस्पृश्य मणिभङ्गनिर्मलाम्भसि मणिकर्णिकायामविमुक्तेश्वरं भगवन्तमन्धकमथनमभिप्रणम्य प्रदक्षिणं परिभ्रमन्पुरुषमेकमायामवन्तमायसपरिघपीवराभ्यां भुजाभ्यामावध्यमानपरिकरमविरतरुदितोच्छूनताम्रदृष्टिमद्राक्षम् । अतर्कयं च—'कर्कशोऽयं पुरुषः, कार्पण्यमिव वर्षति क्षीणतारं चक्षुः, आरम्भश्च साहसानुवादी, नूनमसौ प्राण-

---

### पदचन्द्रिका ।

इदानीमर्थपालः स्वचरितमभिधातुमुपचक्रमे—**देव, सोऽहमिति** । एककर्मोल्पकार्यः । कर्म च भवदन्वेषणमिति । ऊर्मिमालिनेमिं समुद्रावधिकां भूमिम् । 'नेमिस्तु चक्रधारायां सीमधर्मव्यवस्थयोः' इत्यजयः । वलयं भूमण्डलम् । उपासरं गतवान् । उपस्पृश्य स्नात्वा । मणिभङ्गो रत्नशकलं तद्वन्निर्मलं शुद्धमम्भो जलं यस्यास्तथा ताम् । अन्धकमथनमन्धकासुरसंहारकम् । प्रदक्षिणं परिभ्रमन् । परिक्रमं कुर्वन्नित्यर्थः । आयामो दैर्घ्यं तद्वन्तम् । आयसं लोहं तस्य परिघोऽर्गलः । 'अर्गलः स्यात्तु परिघः' इति वैजयन्ती । तद्वत्पीवराभ्यां मांसलाभ्याम् । आवध्यमानपरिकरम् । 'कक्षाबन्धः परिकरः' इति वैजयन्ती । अविरतं निरन्तरम् । उच्छूनतोन्नता । कर्कशः कठिनः । कृपणस्य भावः कार्पण्यम् । क्षीणा म्लाना तारका कनीनिका यस्येति । आरम्भ उद्योगः । साहसं महत्कर्म तदनुवादी तद्बोधकः ।

### भूषणा ।

एककर्मा समानकर्मा । कर्म च राजवाहनान्वेषणम् । ऊर्मिमालिनेमिं समुद्रावधिकाम् । 'नेमिस्तु चक्रधारायां सीमायां च' इति । आयसपरिघोऽयोनिर्मितोऽर्गलः । 'परिघः परिघातेऽस्त्रे' इत्यमरः । परिकरं कक्षाबन्धम् । उच्छूनं प्रवृद्धम् । कार्पण्यं क्षीणत्वम् । साहसानुवादी साहसस्य सदृशः । 'सदृक्सदृश-

### लघुदीपिका ।

एककर्मा समानकर्मा । कर्म च भवदन्वेषणमिति । ऊर्मिमालिनेमिं समुद्रावधिकाम् । 'नेमिस्तु चक्रधारायां सीमधर्मव्यवस्थयोः' इत्यजयः । वाराणसीम् । 'वारा नसीति नद्यौ द्वे पुण्ये पापहरे शुभे । तयोर्मध्यगतत्वात्तु सैषा वाराणसी स्मृता ॥' इति स्कन्दवचनम् । आयसपरिघ आयसनिर्मितोऽर्गलः । 'अर्गलः स्यात्तु परिघः' इति वैजयन्ती । परिकरं कक्षाबन्धम् । उच्छूनं प्रवृद्धम् । 'टुओश्वि गतिवृद्ध्योः' । कार्पण्यं क्षीणत्वम् । साहसानुवादी साहसस्य सदृशः । 'सदृ-

निस्पृहः किमपि कृच्छ्रं प्रियजनव्यसनमूलं प्रतिपत्स्यते । तत्पृच्छेयमेनम् । अस्ति चेन्ममापि कोऽपि साहाय्यदानावकाशस्तमेनमभ्युपेत्येत्यपृच्छम्—'भद्र, संनाहोऽयं साहसमवगमयति । न चेद्गोप्यमिच्छामि श्रोतुं शोकहेतुम्' इति । स मां सबहुमानं निर्वर्ण्य 'को दोषः, श्रूयताम्' इति । क्वचित्करवीरतले मया सह निषण्णः कथामकार्षीत्—'महाभाग, सोऽहमस्मि पूर्वेषु कामचरः पूर्णभद्रो नाम गृहपतिपुत्रः । प्रयत्नसंवर्धितोऽपि पित्रा दैवच्छन्दानुवर्ती चौर्यवृत्तिरासम् । अथास्यां काशीपुर्यामर्यवर्यस्य कस्यचिद्गृहे चोरयित्वा रूपाभिग्राहितो बद्धः । वध्ये च मयि मत्तहस्ती

## पदचन्द्रिका ।

कः । कृच्छ्रं कष्टम् । प्रतिपत्स्यते प्राप्स्यति । **तदिति** । पृच्छेयम् । पृच्छामीत्यर्थः । एनं पुरुषम् । ममापि मत्कर्तृकम् । सहायस्य कर्म भावो वा साहाय्यं तस्य दाने अवकाशः समयः । अभ्युपेत्य । गत्वेत्यर्थः । संनाहः परिकरः । साहसमुद्योगम् । प्राणनिरपेक्षं कर्म साहसमुच्यते । अवगमयति बोधयति । गोप्यमप्रकाश्यम् । शोकहेतुं शोककारणम् । स पुरुषः । सबहुमानं बहुमानेन सह वर्तमानम् । निर्वर्ण्य दृष्ट्वा । करवीरतले हयमारकवृक्षाधोभागे । 'प्रतिहासशतप्रासचण्डातहयमारकाः । करवीरे' इत्यमरः । अकार्षीत् । अकरोदित्यर्थः । पूर्वेषु पूर्वदेशेषु । कामचरः स्वेच्छागमनकर्ता । गृहपतिर्ग्रामाध्यक्षः । दैवच्छन्दो दैववशः । 'अभिप्रायवशौ छन्दौ' इत्यमरः । तदनुवर्ती तदनुसारी । अर्यवर्यस्य वैश्यश्रेष्ठस्य । 'स्यादर्यः स्वामिवैश्ययोः' इत्यमरः । रूपाभिग्राहितश्चौर्यवस्तुनाणकेन ग्राहितो धारितः । 'रूपं

## भूषणा ।

संवादिसजातीयानुवादिनः' इति दण्डी । कृच्छ्रं दुःखम् । 'स्यात्कष्टं कृच्छ्रमाभीलम्' इत्यमरः । किमपि साहाय्यावकाशस्तदेनं पृच्छेयमित्यन्वयः । निर्वर्ण्य दृष्ट्वा । 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः । पूर्वेषुकामचरः । 'इषुकाम' इति देशस्य संज्ञा । दैवच्छन्दो दैववशः । 'अभिप्रायवशौ छन्दौ' इत्यमरः । रूपाभिग्राहितो लोप्त्रेण सह संगृहीतः । चौरिका स्तैन्यचौर्ये च

## लघुदीपिका ।

क्सदृशसंवादीसजातीयानुवादिनः' इति दण्डी । कृच्छ्रं दुःखम् । कोऽपि साहाय्यावकाशस्तदेनं पृच्छेयमित्यन्वयः । निर्वर्ण्य दृष्ट्वा । पूर्वेषुकामचारः पूर्वस्यां दिशि यथेष्टाचारः । दैवच्छन्दो दैववशः । 'अभिप्रायवशौ छन्दौ' । रूपाभिगृहीत-

पाठा०—१ 'प्रपित्सते'. २ 'पूर्वेषुकामचरः'.

मृत्युविजयो नाम हिंसाविहारी राजगोपुरोपरितलाधिरूढस्य पश्यतः कामपालनाम्न उत्तमामात्यस्य शासनाज्जनकण्ठरवद्विगुणितघण्टारवो मंण्डलितहस्तकाण्डं समभ्यधावत् । अभिपत्य च मया निर्भयेन निर्भर्त्सितः परिणमन्दारुखण्डसुषिरानुप्रविष्टोभयभुजदंण्डघटितप्रतिमानो भीतवन्न्यवर्तिष्ट । भूयश्च नेत्रा जातसंरम्भेण निकामदारुणैर्वागङ्कुशपादपातैरभिमुखीकृतः । मयापि द्विगुणा-

---

### पदचन्द्रिका ।

श्लोके यशोनाटकादौ सौन्दर्यशब्दयोः । ग्रन्थावृत्तौ तथाकारे स्वभावे नाणके मृगे' इति महीपः । वध्ये वधार्हे । मत्तहस्ती मत्तगजः । राजद्वारस्य गोपुरं प्रतोली । 'गोपुरं हि प्रतोल्यां च नगरद्वारयोरपि' इति महीपः । उपरितलमूर्ध्वप्रदेशस्तत्राधिरूढस्य । अमात्यस्य मन्त्रिणः । जनकण्ठरवो लोकसांनिध्यशब्दः । 'कण्ठो गले संनिधाने ध्वनौ मदनपादपे' इति विश्वः । द्विगुणितो द्विगुणीकृतः । मण्डलितं मण्डलाकारं कृतं हस्तकाण्डं शुण्डादण्ड इति क्रियाविशेषणम् । निर्भर्त्सितस्तर्जितः । परिणमंस्तिर्यग्दन्तप्रहारं कुर्वन् । 'तिर्यग्दन्तप्रहारस्तु गजः परिणतो मतः' इति वैजयन्ती । दारुखण्डं काष्ठखण्डं तस्य सुषिरं बिलं तत्रानुप्रविष्टावुभयभुजदण्डौ ताभ्यां घटितं संघर्षितं प्रतिमानं यस्य । 'दन्तयोरुभयोर्मध्यं प्रतिमानं प्रचक्षते' इति वैजयन्ती । 'प्रतिमानमधोऽस्य यत्' इत्यमरश्च । 'वाहित्थाधः प्रतिमानम्' इति हैमोऽपि । नेत्रा आधोरणेन । जातसंरम्भेण जातक्रोधेन । निकामदारुणैरतिकठोरैः । वागङ्कुशपादपातैः । वाक् संकेतः । अङ्कुशः सृणिः । पादश्चरणः । तत्पातः । अभिमुखीकृतः संमुखीकृतः । **मयापीति** । द्विगुणाबद्ध-

### भूषणा ।

स्तेयं लोप्त्रं तु तद्धनम्' इत्यमरः । मण्डलितकरो मण्डलाकृतिशुण्डदण्डः । परिणमन् । तिर्यग्दन्तप्रहारं कर्तुं नमनं परिणमनम् । दारुखण्डसुषिरेऽनुप्रविष्टभुजदण्डचण्डिमघटितं तादृशदारुखण्डाग्रेण ताडितं प्रतिमानं दन्तान्तरालं यस्य सः । 'प्रतिमानं प्रतिच्छाया गजदन्तान्तरालयोः' इति विश्वः । 'अधः कुम्भस्य वाहित्थं प्रतिमानमधोऽस्य यत्' इत्यमरः । आक्रुष्टो निन्दितः । कुञ्जरापसदो गजाधमः । निहीनोऽपसदो जाल्मः' इत्यमरः । 'अपसदः कुत्सने' इति समासः । वारणेनाङ्कुशेन । निर्याणभागेऽपाङ्गदेशे । 'अपाङ्गदेशो निर्या-

### लघुदीपिका ।

श्चोरितेन संगृहीतः । दन्ताभ्यां तिर्यक्प्रहारः परिणमनम् । 'दन्तयोरुभयोर्मध्यं प्रतिमानं प्रचक्षते' । वागङ्कुशपादैर्वाचाङ्कुशेन पादेन च आक्रुष्टो निन्दितः ।

---

पाठा०—१ 'मण्डलितकरः'. २. 'दण्डचण्डघटित'.

बद्धमन्युना निर्भर्त्स्याभिहतो निवृत्यापाद्रवत् । अथ मयोपेत्य सरभसमाक्रुष्टो रुष्टश्च यन्ता—'हन्त, मृतोऽसि कुञ्जरापसद' इति निशितेन वारणेन वारणं मुहुर्मुहुरभिघ्नन्निर्याणभागे कथमपि मदभिमुखमकरोत् । अथावोचम्—'अपसरतु द्विपकीट एषः । अन्यः कश्चिन्मातङ्गपतिरानीयताम् । येनाहं मुहूर्तं विहृत्य गच्छामि गन्तव्यां गतिम्' इति । दृष्ट्वैव स मां रुष्टमुद्गर्जन्तमुत्क्रान्तयन्तृनिष्ठुराज्ञः पलायिष्ट । मन्त्रिणा पुनरहमाहूयाभ्यधायिषि—'भद्र, मृत्युरेवैष मृत्युविजयो नाम हिंसाविहारी । सोऽयमपि तावत्त्वयैवंभूतः कृतः । तद्विरम्य कर्मणोऽस्मान्मलीमसात्किमलमसि प्रतिपद्यास्मानार्यवृत्त्या वर्तितुम्' इति । 'यथाज्ञापितोऽस्मि' इति विज्ञापितोऽयं मया मित्रवन्मय्यवर्तिष्ट ।

## पदचन्द्रिका ।

मन्युना द्विगुणितक्रोधेन । 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः । निर्भर्त्स्य निर्भर्त्सनं कृत्वा । अभिहतस्ताडितः । निवृत्य परावृत्य । अपाद्रवत् । पलायनपरोऽभूदित्यर्थः । **अथेति ।** उपेत्य गत्वा । सरभसं सवेगम् । आक्रुष्ट आक्रोशं प्रापितः । निन्दित इत्यर्थः । यन्ता हस्तिपकः । अपसदाऽधम । 'निहीनोऽपसदो जाल्मः' इति वैजयन्ती । निशितेन तीक्ष्णेन । वारणेनाङ्कुशेन । 'वारणस्तु गजे प्रोक्तो वारणं तन्निवारणे' इत्यजयः । वारणं गजम् । अभिघ्नंस्ताडयन् । निर्याणभागेऽपाङ्गदेशे । 'अपाङ्गदेशो निर्याणम्' इत्यमरः । मदभिमुखं मत्संमुखम् । अपसरतु । गच्छत्वित्यर्थः । द्विपकीटो हस्तिकीटः । गन्तव्यां प्राप्तव्यां गतिम् । मरणमित्यर्थः । स गजः । रुष्टं क्रुद्धम् । उद्गर्जन्तं दीर्घतरं वदन्तम् । उत्क्रान्तातिक्रान्ता यन्तुराधोरणस्य निष्ठुरा क्रूराज्ञा येनेति । पलायिष्ट पलायनपरोऽभूदित्यर्थः । अभ्यधायिष्यभिहितः मृत्युविजय एतन्नामा गजः । एवंभूतः पराभूतः । विरम्य विरामं प्राप्य । अस्मात्कर्मणश्चौर्यरूपात् । मलीमसान्मलिनात् । 'मलीमसं तु मलिनम्' इत्यमरः । अलमसि शक्तोऽसि । प्रतिपद्य प्राप्य । आर्यवृत्त्या श्रेष्ठवृत्त्या । अयममात्यः । **मयेति ॥**

## भूषणा ।

णम्' इत्यमरः । मया पूर्णभद्रेण । स्वचरितम् । अत्र स्वः कामपालः । वि-

## लघुदीपिका ।

कुञ्जरापसदो गजाधमः । 'निहीनोऽपसदो जाल्मः' । कुत्सने समासः । वारणेनाङ्कुशेन । निर्याणभागे । 'अपाङ्गदेशो निर्याणम्' । मलीमसम् । 'मलीमसं तु मलिनं कच्चरं मलदूषितम्' । श्रुतर्षिरवधृतवेदः । 'श्रुतं शास्त्रावधृतयोः'

पाठा०—१ 'अनुपत्य'. २ 'मृतोऽसि क गच्छसि'. ३ 'द्विरदवराकः'. ४ 'उत्क्रामन्तम्'. ५ 'मृत्युरिव'.

पृष्टश्च मयैकदा रहसि जातविश्रम्भेणाभाषत स्वचरितम्—'आसीत्कुसुमपुरे राज्ञो रिपुंजयस्य मन्त्री धर्मपालो नाम विश्रुतधीः श्रुतर्षिः । अमुष्य पुत्रः सुमित्रो नाम पित्रैव समः प्रज्ञागुणेषु । तस्यास्मि द्वैमातुरः कनीयान्भ्राताहम् । वेशेषु विलसन्तं मामसौ विनयरुचिरवारयत् । अवार्यदुर्नयश्चाहमपसृत्य दिङ्मुखेषु भ्रमन्यदृच्छयास्यां वाराणस्यां प्रमदवने [1]मदनदमनाराधनाय निर्गत्य सहसखीभिः कन्दुकेनानुक्रीडमानां काशीभर्तुश्चण्डसिंहस्य कन्यां कान्तिमतीं [2]नाम चकमे । कथमपि समगच्छे च । अथ छन्नं च विहरता कुमारी-

पदचन्द्रिका ।

रहस्येकान्ते । विश्रम्भो विश्वासः । **आसीदिति** । रिपुंजयस्यैतन्नाम्नः । श्रुतर्षिरधीतवेदः । 'ऋषिस्तु वेदे भृगवादौ ज्ञानवृद्धे दिगम्बरे' इति वैजयन्ती । 'ऋत्यकः' (६।१।१२८) इति प्रकृतिभावः । अमुष्य धर्मपालस्य । प्रज्ञागुणेषु धीगुणेषु । ते गुणाः षट्—'शुश्रूषा ग्रहणं चैव श्रवणं चावधारणम् । ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥' इति कामन्दके । द्वैमातुरो द्वयोर्मात्रोरपत्यं तथा । द्विमातृज इत्यर्थः । कनीयान्कनिष्ठः । वेशेषु वेश्यासु । असौ सुमित्रनामा ज्येष्ठभ्राता । अवार्यदुर्नयोऽवार्यो दूरीकर्तुमशक्यो दुर्नयो दुर्नीतिर्यस्येति सः । अपसृत्य । ततो निर्गत्येत्यर्थः । दिङ्मुखेषु दिगन्तेषु । प्रमदवनेऽन्तःपुरोचितवने । 'स्यादेतदेव प्रमदवनमन्तःपुरोचितम्' इत्यमरः । मदनदमनाराधनाय मदनशत्रुर्महादेवस्तत्पूजार्थम् । कन्दुकेन क्रीडोपकरणेन । काशीभर्तुर्वाराणसीपतेः । चकमेऽभिलषितवान् । समगच्छे संगतोऽभवम् । **अथेति** । छन्नं गुप्तम् । सा कान्तिमती । आपन्नसत्त्वा

भूषणा ।

श्रुता लोके प्रसिद्धा धीरस्य विश्रुतधीः । श्रुतर्षिरधीतवेदः । 'ऋत्यकः' (६।१।१२८) इति प्रकृतिभावः । प्रज्ञागुणेषु बुद्धिगुणेषु । ते चोक्ताः कामन्दके—'शुश्रूषा ग्रहणं चैव श्रवणं चावधारणम् । ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥' इति द्वैमातुरो द्वयोर्मात्रोरपत्यम् । 'मातुरुत्संख्या–' (४।१।११५) इत्युदादेशः ।

लघुदीपिका ।

'ऋषिस्तु वेदे भृगवादौ ज्ञानवृद्धे दिगम्बरे' इति वैजयन्ती । 'ऋत्यकः' इति प्रकृतिभावः । प्रज्ञागुणेषु धीगुणेषु । गुणाश्च षट्—'शुश्रूषा श्रवणं चैव ग्रहणं चावधारणम् । ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥' इति कामन्दके । द्वैमातुरः द्वयोर्मात्रोरपत्यम् । आपन्नसत्त्वा गुर्विणी । 'आपन्नसत्त्वा स्याद्गुर्वि-

पाठा०—१ 'मदनाराधनाय'. २ 'नामाचकमे'.

पुरे सा मयासीदापन्नसत्त्वा । कंचित्सुतं च प्रसूतवती । मृतजात इति सोऽपविद्धो रहस्यनिर्भेदभयात्परिजनेन क्रीडाशैले । शबर्या च श्मशानाभ्याशं नीतः । तयैव निवर्तमानया निशीथे राजवीथ्यामारक्षिकपुरुषैरभिगृह्य तर्जितया दण्डपारुष्यभीतया निर्भिन्नप्रायं रहस्यम् । राजाज्ञया निशीथेऽहमाक्रीडनगिरिदरीगृहे[1] विश्रब्धप्रसुप्तस्तयोपदर्शितो यथोपपन्नरज्जुबद्धः श्मशानमुपनीय मातङ्गोद्यतेन कृपाणेन प्राजिहीर्ष्ये । नियतिबलाल्लूनबन्धस्तमसिमाच्छिद्या-

---

### पदचन्द्रिका ।

जातगर्भा । 'आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी' इत्यमरः । प्रसूतवती । सुषुव इत्यर्थः । स बालकः । अपविद्धस्त्यक्तः । रहस्यं गोप्यं तस्य निर्भेदः प्रकटीभावस्तस्माद्भयं भीतिः । क्रीडाशैले खेलापर्वते । शबर्या भिल्ल्या । अभ्याशं समीपम् । निवर्तमानया परावृत्य गृहं प्रत्यागच्छन्त्या । आरक्षिकपुरुषैः संरक्षणकारकपुरुषैः । अभिगृह्य धृत्वा । तर्जितया भीषितया । दण्डपारुष्यं मारणादि । निर्भिन्नप्रायं प्रकाशितप्रायम् । निशीथेऽर्धरात्रे । आक्रीडनगिरिदरीगृहे । क्रीडापर्वतकन्दरायामित्यर्थः । तया शबर्या । उपदर्शितः प्रदर्शितः । यथोपपन्नरज्जुबद्धो यथाप्राप्तदोरकबद्धः । मातङ्गश्चण्डालः । 'चण्डालप्लवमातङ्गदिवाकीर्तिजनङ्गमाः' इत्यमरः । कृपाणेन खड्गेन । प्राजिहीर्ष्ये प्रहृतः । नियतिबलाददृष्टप्रभावात् ।

### भूषणा ।

मदनदमनः शिवः । आपन्नसत्त्वा गुर्विणी । 'आपन्नसत्त्वा स्याद्गुर्विणी' इत्यमरः । आक्रीडगिरिरुद्यानपर्वतः । 'पुमानाक्रीड उद्यानम्' इत्यमरः । शबर्या म्लेच्छभेदस्त्रिया । 'भेदाः किरातशबरपुलिन्दाः' इत्यमरः । आच्छिद्यापहृत्य । उत्तंसितेन शेखरितेन । आस्थानीं सभाम् । 'आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः' इत्यमरः । अनेकमृत्युमुखपरिभ्रष्टं कान्तिमतीसखीभिः क्रीडागिरौ त्यक्तं शबर्या च श्मशाने । एकपिङ्गः कुबेरः । 'यक्षैकपिङ्गैलविलश्रीदपुण्यजनेश्वराः' इत्यमरः । कृतान्तयोगात् दैवयोगात् । कृतान्तमुखपरिभ्रष्टं यममुखभ्रष्टम् । 'कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु' इत्यमरः ।

### लघुदीपिका ।

ण्यन्तर्वत्नी च गर्भिणी । आक्रीडगिरिरुद्यानपर्वतः । 'पुमानाक्रीड उद्यानम्' । आच्छिद्यापहृत्य । उत्तंसितेन शेखरितेन । 'आस्थानी क्लीबमास्थानम्' । कृतान्तयोगात् । 'कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु' इति वैजयन्ती ।

---

१ 'आक्रीड'.

न्त्यजं तमन्यांश्च कांश्चित्प्रहृत्यापासरम् । अशरणश्च भ्रमन्नटव्यामेकदाश्रुमुख्या कयापि दिव्याकारया संपरिचारया[1] कन्ययोपास्थायिषि । सा मामञ्जलिकिसलयोत्तंसितेन मुखविलोलकुन्तलेन मूर्ध्ना प्रणम्य मया सह वनवटद्रुमस्य कस्यापि महतः प्रच्छायशीतले तले निषण्णा, 'कासि वासु, कुतोऽस्यागता, कस्य हेतोरस्य मे प्रसीदसि ?' इति साभिलाषमाभाषिता मया वाङ्मयं मधुवर्षमवर्षत्—'आर्य, नाथस्य यक्षाणां मणिभद्रस्यास्मि दुहिता तारावली नाम । साहं कदाचिदगस्त्यपत्नीं लोपामुद्रां नमस्कृत्यापावर्तमाना मलयगिरेः परेतावासे वाराणस्याः कमपि दारकं रुदन्तमद्राक्षम् । आदाय चैनं तीव्रस्नेहान्मम पित्रोः संनिधिमनैषम् । अनैषीच्च मे पिता देवस्यालकेश्वरस्यास्थानीम् । अथाहमाहूयाज्ञप्ता हरसखेन 'बाले बाले-

पदचन्द्रिका ।

लूनबन्धस्त्रुटितबन्धनः । तमसिं मातङ्गकरकृपाणम् । आच्छिद्यापहृत्य । तमन्त्यजं चण्डालम् । अपासरमगच्छम् । अशरणो गृहरक्षकहीनः । दिव्यः स्वर्ग्य आकारो यस्यास्तया । उपास्थायिषि समीपवर्त्यासम् । अञ्जलिकिसलयोत्तंसितेनाञ्जलिपल्लवशिखरितेन । मुखे विलोलाः कुन्तलाः केशा यस्येति तथा तेन । मूर्ध्ना मस्तकेन । प्रच्छायशीतले प्रकृष्टच्छायाशिशिरे । कस्य हेतोः । किमर्थमित्यर्थः । साभिलाषं सानुरागम् । वाङ्मयं वाक्प्रचुरम् । मधुवर्षं मधुवृष्टिम् । यक्षाणां नाथस्य । 'विद्याधराप्सरोयक्षरक्षोगन्धर्वकिन्नराः' इत्यमरवचनाद्दशैते देवयोनिजातयः । मणिभद्रस्तन्नामा । परेतावासे । महाश्मशान इत्यर्थः । दारकं बालकम् । आदाय गृहीत्वा । एनं बालकम् । अकलेश्वरस्य कुबेरस्य । आस्थानीं स्थलम् । 'आस्थानी क्लीबमास्थानम्' इत्यमरः । हरसखेन कुबेरेण । बाले कन्ये इति संबोधनं प्रथमम् ।

भूषणा ।

मातङ्गपतिना हन्यमानस्तमेव हत्वा पलायितः । द्वित्राणि दिनानि । 'संख्ययाव्यय–' (२।२।२५) इति बहुव्रीहिः । 'बहुव्रीहौ संख्येये–' (५।४।७३) इति डच् । वैरनिर्यातनं प्रतीकारः । 'वैरशुद्धिः प्रतीकारो वैरनिर्यातनम्' इत्यमरः । वासगृहं गर्भागारम् । 'गर्भागारं वासगृहम्' इत्यमरः । विहरामि विलासिनीभिः सहेत्यन्ता कामपालोक्तिः । स एवमित्यादि पूर्णभद्रोक्तिः । अलसकेन क्षयेण । 'क्षयस्त्वलसको मतः' इति वैज-

लघुदीपिका ।

निर्यातनं विवसनम् । वासगृहम् । 'गर्भागारं वासगृहम्' । अलसकेन क्षयेण ।

पाठा०–१ 'सपरिवारया'.

ऽस्मिन्कीदृशस्ते भावः?' इति । 'औरस इवास्मिन्वत्से वत्सलता' इति मया विज्ञापितः 'सत्यमाह वराकी' इति तन्मूलामतिमहतीं कथामकरोत् । तत्रैतावन्मयावगतम् 'त्वं किल शौनकः शूद्रकः कामपालश्चाभिन्नः । बन्धुमती विनयवती कान्तिमती चाभिन्ना । वेदिमत्यार्यदासी[1] सोमदेवी चैकैव । हंसावली[2] शूरसेना[3] सुलोचना चानन्या । नन्दिनी रङ्गपताकेन्द्रसेना चापृथग्भूता । या किल शौनकावस्थायामग्निसाक्षिकमात्मसात्कृता गोपकन्या सैव किलार्यदासी पुनश्चाद्य तारावलीत्यभूवम् । बालश्च किल शूद्रकावस्थे त्वय्यार्यदास्यवस्थायां मय्युदभूत् । अवर्ध्यत च विनयवत्या स्नेहवासनया । स तु तस्यां कान्तिमत्यवस्थायामद्योदभूत् । एवमनेकमृत्युमुखपरिभ्रष्टं दैवान्मयोपलब्धं तमेकपिङ्गादेशाद्वने तपस्यतो राजहंसस्य देव्यं वसुमत्यै तत्सुतस्य भाविचक्रवर्तिनो राजवाहनस्य परिचर्यार्थं समर्प्य गुरुभिरभ्यनुज्ञाता कृतान्तयोगात्कृतान्तमुखभ्रष्टस्य[4] ते पादपद्मशुश्रूषार्थमागतास्मि' इति ।

तच्छ्रुत्वा तामनेकजन्मरमणीमसकृदाश्लिष्य हर्षाश्रुमुखो मुहुर्मुहुः

---

## पदचन्द्रिका ।

बालेऽस्मिन्निति । अस्मिन्बालक इत्यर्थः । भावश्चित्ताभिप्रायः कीदृशः । कथमित्यर्थः । औरस उरसि भवस्तथा । पुत्र इति यावत् । अस्मिन्वत्सेऽस्मिन्बाले । वत्सलता स्नेहलता । वराकी कृपार्हा । तन्मूलं बालकमूलाम् । **तत्रेति** । अवगतं ज्ञातम् । लमर्थपालः । चतुर्ष्वपि जन्मसु नाम्नैव भिन्नः न तु स्वरूपेणेति । शौनकावस्थायां बन्धुमती वेदिमती हंसावली नन्दिन्यश्चतस्रः । शूद्रकावस्थायां विनयवत्यार्यदासी शूरसेना रङ्गपताका । कामपालावस्थायां कान्तिमती सोमदेवी सुलोचनेन्द्रसेना । एतास्तिस्रोऽभिन्नाः । एकरूपा इत्यर्थः । वेदमतीप्रभृतयस्तिस्रोऽप्यभिन्नाः । हंसावलीप्रभृतयश्चतस्रोऽप्यभिन्नाः । नन्दिनीमुखाश्चेति तिस्रोऽभिन्नाः । शौनकावस्थायाम् । आत्मसात्कृता । परिणीतेत्यर्थः । बालः शिशुः । विनयवत्येति कर्तरि तृतीया । तस्यां विनयवत्याम् । कान्तिमत्यवस्थायाम् । दैवाददृष्टात् । एकपिङ्गदेशात्कुबेरादेशात् । कृतान्तयोगात् दैवयोगात् । 'कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु' इति विश्वः । कृतान्तमुखभ्रष्टस्य यममुखनिर्गतस्य ।

---

पाठा०—१ 'अर्यदासी'. 'यक्षदासी', 'यज्ञदासी'. २ 'हंसावती'. ३ 'सुरसेना'. ४ 'परिभ्रष्टस्य'.

सान्त्वयित्वा तत्प्रभावदर्शिते महति मन्दिरेऽहर्निशं भूमिदुर्लभान्भोगानन्वभूवम् । द्वित्राणि दिनान्यतिक्रम्य मत्तकाशिनीं तामवादिषम्—'प्रिये, प्रत्यपकृत्य मत्प्राणद्रोहिणश्चण्डसिंहस्य वैरनिर्यातनसुखमनुबुभूषामि' इति । तया सस्मितमभिहितम्—'एहि कान्त, कान्तिमतीदर्शनाय नयामि त्वाम्' इति । स्थितेऽर्धरात्रे राज्ञो वासगृहमनीये । ततस्तच्छिरोभागवर्तिनीमादायासियष्टिं प्रबोध्येनं प्रस्फुरन्तमब्रवम्—'अहमस्मि भवज्जामाता । भवदनुमत्या विना तव कन्याभिमर्शी । तमपराधमनुवृत्त्या प्रमार्ष्टुमागतः' इति । सोऽतिभीतो मामभिप्रणम्याह—'अहमेव मूढोऽपराद्धः, यस्तव दुहितृसंसर्गानुग्राहिणो ग्रहग्रस्त इवोत्क्रान्तसीमा समादिष्टवान्वधम् । तदास्तां कान्तिमती राज्यमिदं मम च जीवितमप्यद्यप्रभृति भवदधीनम्' इत्यवादीत् । अथापरेद्युः प्रकृतिमण्डलं संनिपात्य विधिवदात्मजायाः पाणिमग्राहयत् । अश्रावयच्च तनयवार्तां तारावली कान्तिमत्यै, सोमदेवीसुलोचनेन्द्रसेनाभ्यश्च पूर्वजातिवृत्तान्तम् । इत्थमहं मन्त्रिपदापदेशं यौवराज्यमनुभवन्विहरामि विलासिनीभिः' इति ।

---

पदचन्द्रिका ।

तत्प्रभावदर्शिते तारावलीसामर्थ्यप्रकटीकृते । अहर्निशं दिवारात्रम् । मत्तकाशिनीमुत्तमाम् । अवादिषमवोचम् । प्रत्यपकृत्य । प्रत्यपकारं कृत्वेत्यर्थः । वैरनिर्यातनं वैरशुद्धिम् । 'निर्यातनं वैरशुद्धौ' इत्यमरः । अनुबुभूषाम्यनुभवितुमिच्छामि । तया तारावल्या । वासगृहं गर्भागारम् । अनीये । नीत इत्यर्थः । **तत इति** । असियष्टिं खड्गयष्टिम् । एनं चण्डसिंहम् । प्रस्फुरन्तं कम्पन्तम् । जामाता दुहितुः पतिः । भवदनुमत्या विना त्वत्संमतिं विना । 'पृथग्विना–' इति पक्षे तृतीया । अनुवृत्त्या सेवया । प्रमार्ष्टुं दूरीकर्तुम् । स चण्डसिंहः । अपराद्धः कृतापराधः । तवार्थपालस्य । दुहितृसंसर्गानुग्राहिणः कन्यासंसर्गकृपाकर्तुः । उत्क्रान्तसीमोज्झितमर्यादः । कान्तिमती कन्या । भवदधीनं त्वदधीनम् । **अथेति** । प्रकृतिमण्डलं प्रजासमूहम् । संनिपात्य । एकीकृत्येत्यर्थः । विधिवद्विध्युक्तप्रकारेण । आत्मजायाः कन्यायाः । अग्राहयत् । ग्राहयति स्मेत्यर्थः । इत्थममुना प्रकारेण । मन्त्रिपदस्यापदेशो मिषम् । विहरामि क्रीडां करोमि ॥

---

**पाठा०–१ 'इन्द्रदुर्लभान्'.**

स एवं मादृशेऽपि जन्तौ परिचर्यानुबन्धी बन्धुरेकः सर्वभूतानामलसकेन स्वर्गते श्वशुरे, ज्यायसि च श्याले चण्डघोषनाम्नि स्त्रीष्वतिप्रसङ्गात्प्रागेव क्षयक्षीणायुषि, पञ्चवर्षदेशीयं सिंहघोषनामानं कुमारमभ्यषेचयत् । अवर्धयच्च विधिनैनं स साधुः । तस्याद्य यौवनोन्मादिनः पैशुन्यवादिनो दुर्मन्त्रिणः कतिचिदासन्नन्तरङ्गभूताः । तैः किलासावित्थमग्राह्यत— 'प्रसह्यैव स्वसा तवामुना भुजङ्गेन संगृहीता । पुनः प्रसुप्ते राजनि प्रहर्तुमुद्यतासिरासीत् । तेनास्मै तत्क्षणप्रबुद्धेन भीत्यानुनीय दत्ता कन्या । तं च देवज्येष्ठं चण्डघोषं विषेण हत्वा बालोऽयमसमर्थ इति त्वमद्यापि प्रकृतिविश्रम्भणायोपेक्षितः । क्षिणोति च पुरा स कृतघ्नो भवन्तम् । तमेवान्तकपुर-

पदचन्द्रिका ।

परिचर्यानुबन्धी सेवानुबन्धी । बन्धुः सखा । अलसकेन क्षयेण । 'क्षयस्त्वलसको मतः' इति वैजयन्ती । स्वर्गते मृते । ज्यायसि ज्येष्ठे । श्याले पत्नीभ्रातरि । 'श्यालाः स्युर्भ्रातरः पत्न्याः' इत्यमरः । 'स्यालौ' इति वा पाठः । स्त्रीषु योषित्सु । अतिप्रसङ्गादतियोगादत्यन्तासक्तेः । 'अतियोगाद्वियोगाद्वा क्षयो भवति जन्मिनः' इति निदानम् । अभ्यषेचयदभिषेकमकारयत् । एनं सिंहघोषनामानम् । स साधुः । अद्य सांप्रतम् । यौवनोन्मादिनस्तारुण्योन्मादवतः । दुर्मन्त्रिणो दुष्टप्रधानस्य चण्डघोषनाम्नः । अन्तरङ्गभूता आप्ततराः । बभूवुरित्यर्थः । तैरमात्यैः । असौ सिंहघोषः । अग्राह्यत । अबोध्यतेत्यर्थः । अमुनेति मामुद्दिश्योक्तिः । भुजङ्गेन विटेन । संगृहीता स्वीकृता । प्रसुप्ते निद्रां गते । प्रहर्तुं मारितुम् । उद्यतासिरूर्ध्वीकृतखड्गः तेन राज्ञा । अस्मै भुजङ्गाय । अनुनीय सान्त्वयित्वा । असमर्थः कार्याक्षमः । प्रकृतयः प्रजाः । विश्रम्भणं विश्वासः । उपेक्षितोऽनासक्तः । क्षिणोति च क्षयिष्यति । **पुरेति ।**

भूषणा ।

यन्ती । ज्यायसि पूर्वजे । 'वर्षीयान्दशमी ज्यायान्पूर्वजः' इत्यमरः । पञ्चवर्षदेशीयं ईषदसमाप्तपञ्चवर्षम् । 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' ( ५।३।६७ ) अग्राह्यताबोध्यत । क्षिणोति पुरा क्षपयिष्यति । 'यावत्पुरा–' ( ३।३।४ ) इति भविष्यति

लघुदीपिका ।

'क्षयस्त्वलसको मतः' इति वैजयन्ती । ज्यायसि । ज्यायाञ्ज्येष्ठश्चाग्रजः । अग्राह्यताबोध्यत । क्षिणोति पुरा क्षयिष्यति । 'यावत्पुरा–' इत्यादिना भविष्यति

पाठा०–१ 'दैवात्तत्क्षण'.

मभिगमयितुं यतस्व' इति । स तथा दूषितोऽपि यक्षिणीभया[1]न्नामुष्मिन्पापमाचरितुमशकत् । एषु किल दिवसेष्वयथापूर्वमा[2]कृतौ कान्तिमत्याः समुपलक्ष्य राजमहिषी सुलक्षणा नाम सप्रणयमपृच्छत्—'देवि, नाहमायथातथ्येन[3] विप्रलम्भनीया । कथय तथ्यं केनेदमयथापूर्वमाननारविन्दे[4][5] तवैषु वासरेषु' इति । सा त्ववादीत्—'भद्रे, स्मरसि किमद्याप्यायथातथ्येन[6] किंचिन्मयोक्तपूर्वम् ? सखी मे तारावली सपत्नी च किमपि कलुषिताशया रहसि भर्त्रा मद्गोत्रापदिष्टा प्रणयमप्युपेक्ष्य प्रणम्यमानाप्यस्माभिरुपोढमत्सरा प्रावसत् । अवसीदति च नः पतिः । अतो मे दौर्मनस्यम्' इति । तत्प्रायेणैकान्ते सुलक्षणया कान्तया कथि-

पदचन्द्रिका ।

'यावत्पुरानिपातयोर्लट्' (३।३।४) । स कृतघ्नोऽर्थपाल इति । भवन्तं सिंहघोषम् । अभिगमयितुं प्रापयितुम् । यतस्व प्रयत्नं कुरु । स सिंहघोषः । दूषितो भेदितः । यक्षिणीभयात् । अमुष्मिन्कन्यादूषके । पापं हननरूपम् । अशकत् । शक्तोऽभूदित्यर्थः । आननारविन्दे मुखपद्मे । वासरेषु दिवसेषु । अयथापूर्वमयथाभावम् । नवीनमित्यर्थः । आकृतौ शरीरे । यथातथं वास्तवं तस्य भाव आयथातथ्यं तेन । अवास्तवेनेत्यर्थः । विप्रलम्भनीया । प्रतारणीयेत्यर्थः । तथ्यं सत्यम् । सा कान्तिमती । भद्रे इति सुलक्षणासंबोधनम् । कलुषिताशया मलिनितबुद्धिः । मद्गोत्रापदिष्टा मन्नामाहूता । 'नाम गोत्रं कुलं गोत्रं गोत्रः पर्वतपक्षयोः' इति कोशः । प्रणयं प्रीतिम् । प्रणम्यमानापि नमस्कारपूर्वकं प्रार्थ्यमानापि । उपोढमत्सरा प्ररूढद्वेषा ।

भूषणा ।

लट् । दूषितो भेदितः । 'दुष वैकृत्ये' णिचि कृते 'दोषो णौ' (५।४।९०) इत्युपधाया ऊत्वम् । यक्षिणी तारावली । अयथापूर्वमयथाभावम् । राजमहिषी सिंहघोषस्त्री । आयथातथ्येन । ब्राह्मणादित्वाद्भावे ष्यञ् । 'यथातथयथापुरयोः पर्यायेण' (७।३।३१) इति वृद्धिः । कलुषिताशया कलुषितबुद्धिः । मद्गोत्रं मन्नामाभिधानेनापदिष्टा व्यवहृता गोत्रस्खलनापराधान्मानवती गता । 'गोत्रं नाम्नि कुले बाले' इति वैजयन्ती । अथ स्वस्त्रीमुखात्तारावलीकाम-

लघुदीपिका ।

लट् । दूषितो भेदितः । 'दुष वैकृत्ये' । णिचि कृते 'दोषो णौ' (५।४।९०) इत्युपधाया ऊत्वम् । अयथापूर्वमयथाभावम् । आयथातथ्येन । यथातथं वास्तवं सत्यमुक्तम् । कलुषिताशया कलुषितबुद्धिः । मद्गोत्रं मन्नाम । 'गोत्रं । नाम्नि कुले

पाठा०—१ 'प्रभावात्'; 'प्रभावभयात्'. २ 'आयथापूर्व्यम्'. ३ 'आयथातथ्येन'; 'अयाथातथ्येन'. ४ 'आयथापूर्वम्'. ५ 'आननारविन्दम्'. ६ 'अयाथातथ्येन'.

तम् । 'अथासौ निर्भयोऽद्य प्रियतमाविरहपाण्डुभिरवयवैर्धैर्यस्तम्भिताश्रुपर्याकुलेन चक्षुषोष्मश्वासशोषिताभिरिवानतिपेशलाभिर्वाग्भिर्वियोगं दर्शयन्तम्, कथमपि राजकुले कार्याणि कारयन्तम्, पूर्वसंकेतितैः पुरुषैरभिग्राह्यावन्धयत् । तस्य किल स्थाने स्थाने दोषानुद्घोष्य तथोद्धरणीये चक्षुषी यथा तन्मूलमेवास्य मरणं भवेत्' इति । अतोऽत्रैकान्ते यथेष्टमश्रु मुक्त्वा तस्य साधोः पुरः प्राणान्मोक्तुकामो बध्नामि परिकरम्' इति ।

मयापि तत्पितृव्यसनमाकर्ण्य पर्यश्रुणा सोऽभिहितः—'सौम्य, किं तव गोपायित्वा । यस्तस्य सुतो यक्षकन्यया देवस्य राजवाहनस्य पादशुश्रूषार्थं देव्या वसुमत्या हस्तन्यासः कृतः सोऽहमस्मि । शक्ष्यामि सहस्रमपि सुभटानामुदायुधानां हत्वा पितरं मोचयितुम् । अपि तु संकुले यदि कश्चित्पातयेत्तदङ्गे शस्त्रिकां सर्व एव मे यत्नो भस्मनि हुतमिव भवेत्' इति । अनवसितवचन एव मयि महानाशीविषः प्रकाररन्ध्रेणोदैरयच्छिरः । तमहं मन्त्रौ-

पदचन्द्रिका ।

दौर्मनस्यं दौश्चित्यम् । प्रायेण बाहुल्येन । **अथेति** । असौ राजा । अवयवैः शरीरावयवैः । अनतिपेशलाभिरनतिकोमलाभिः । पूर्वसंकेतितैः प्रागेव मन्त्रितैः । अभिग्राह्य ग्राहयित्वा । स्थाने स्थाने प्रतिस्थले । उद्घोष्योद्घाव्य । उद्धरणीये निष्कासनीये । अत्रैकान्ते रहसि मोक्तुकामस्त्यक्तुकामः । 'लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि' इति मकारलोपः ॥

पर्यश्रुणा कृतरोदनेन हस्तन्यासो हस्तनिक्षेपः । वक्ष्यामि शक्तो भविष्यामि । उदायुधानामुद्यतशस्त्राणाम् । संकुले संबाधे । तदङ्गे पितुरङ्गे । भस्मनि रक्षायाम् । हुतमिव क्षिप्तमिव । निरर्थकमिवेति भावः । अनवसितवचनेऽसमाप्तवचने । महानतिदीर्घः । आशीविषः सर्पः । 'आशीविषो

भूषणा ।

पाल्योर्वियोगश्रवणोत्तरम् । अबन्धयत् । लब्धावसरत्वादिति भावः । मोक्तुकामस्त्यक्तुमिच्छुः । 'लुम्पेदवश्यमः कृत्ये तुं काममनसोऽरपि । समो वाहिततयोर्मांसस्य पचि युड्घञोः ॥' इति मकारलोपः । संकुले संबाधे । शस्त्रिका छुरिका । 'स्याच्छस्त्री चासिपुत्री च छुरिका' इत्यमरः । आशीविषः सर्पः । 'आशीविषो विषधरः'

लघुदीपिका ।

वाले' इति वैजयन्ती । मोक्तुकामस्त्यक्तुकामः । 'लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि । समो वाहिततयोर्मांसस्य पचि युड्घञोः ॥' इति मलोपः । उदैरय-

पाठा०-१ 'निर्भरोद्यत्'. २ 'हस्ते न्यासः'.

षधबलेनाभिगृह्य पूर्णभद्रमब्रवम्—'भद्र, सिद्धं नः समीहितम् । अनेन तातमलक्ष्यमाणः संकुले यदृच्छया पातितेन नाम दंशयित्वा तथा विषं स्तम्भयेयं यथा मृत इत्युदास्येत । त्वया तु मुक्तसाध्वसेन माता मे बोधयितव्या—'यो यक्ष्या वने देव्या वसुमत्या हस्तार्पितो युष्मत्सूनुः सोऽनुप्राप्तः पितुरवस्थां मदुपलभ्य बुद्धिबलादित्थमाचरिष्यति । त्वया तु मुक्तत्रासया राज्ञे प्रेषणीयम्—'एष खलु क्षात्रधर्मो यद्बन्धुरबन्धुर्वा दुष्टः स निरपेक्षं निग्राह्य इति । स्त्रीधर्मश्चैष यददुष्टस्य दुष्टस्य वा भर्तुर्गतिर्गन्तव्येति । तदहममुनैव सह चिताग्निमारोक्ष्यामि । युवतिजनानुकूलः पश्चिमो विधिरनुज्ञातव्यः' इति । स एवं निवेदितो नियतमनुज्ञास्यति । ततः स्वमेवागारमानीय काण्डपटीपरिक्षिप्ते विविक्तोद्देशे दर्भसंस्तरणमधिशाय्य स्वयं कृतानुमरणमण्डनया त्वया च तत्र संनिधेयम् । अहं च बाह्यकक्षागतस्त्वया प्रवेश-

पदचन्द्रिका ।

विषधरश्चक्री व्यालः सरीसृपः' इत्यमरः । प्राकाररन्ध्रेण वरणभित्तिच्छिद्रेण । उदैरयत् । ऊर्ध्वमकरोदित्यर्थः । तं सर्पम् । अभिगृह्य गृहीत्वा । समीहितं वाञ्छितम् । अनेन सर्पेण । तातं पितरम् । अलक्ष्यमाणोऽदृश्यमानः । संकुले संमर्दे । यदृच्छया दैवेन । स्तम्भयेयं स्तम्भितं करिष्ये । त्वया पूर्णभद्रेण मुक्तसाध्वसेन त्यक्तभयेन । यक्ष्या यक्षकन्यया । तारावल्येति यावत् । युष्मत्सूनुर्भवत्पुत्रः । मदुपलभ्य मत्तो ज्ञात्वा । निग्राह्यो निग्रहीतव्यः । आरोक्ष्याम्यारोहणं करिष्ये । युवतिजनानुकूलः स्त्रीलोकानुगुणः । 'अभिजनानुरूपः' इति पाठे वंशानुरूप इत्यर्थः । 'संततिर्गोत्रजननकुलान्यभिजनान्वयौ' इत्यमरः । पश्चिमश्चरमः । काण्डपटीपरिक्षिप्ते तिरस्करिणीपरिवृते । 'अपटी काण्डपटीका प्रतिसीरा जवनिका तिरस्करिणी' इति हैमः । दर्भसंस्तरणं दर्भास्तरणम् । बाह्यकक्षा बहिःप्रकोष्ठः । 'कक्षा प्रकोष्ठे

भूषणा ।

इत्यमरः । उदैरयदुदगमयत् । 'ईर गतौ कम्पने च' । अभिजनो गोत्रम् । 'संततिर्गोत्रजननकुलान्यभिजनान्वयौ' इत्यमरः । काण्डपटपरिक्षिप्ते तिरस्करिणीपरिवृते । 'अपटी काण्डपटीका प्रतिसीरा जवनिका तिरस्करिणी' बाह्यकक्षा । 'कक्षा

लघुदीपिका ।

दुदगमयत् । अभिजनो वंशः । 'संततिर्गोत्रजननकुलान्यभिजनान्वयौ' । काण्डपटपरिक्षिप्ते तिरस्करिणीप्रावृते । 'अपटी काण्डपटीका प्रतिसीरा जवनिका

पाठा०—१ 'अवादिश्येत'; 'उत्सृज्ये'. २ 'काण्डपट'.

यिष्ये । ततः पितरमुज्जीव्य तदभिरुचितेनाभ्युपायेन चेष्टिष्यामहे' इति । स 'तथा' इति हृष्टतरस्तूर्णमगमत् । अहं तु घोषणास्थाने चिञ्चावृक्षं घनतरविपुलशाखमारुह्य गूढतनुरतिष्ठम् । आरूढश्च लोको यथायथमुच्चैःस्थानानि'। उच्चावचप्रलापाः प्रस्तुताः । तावन्मे पितरं तस्करमिव पश्चाद्बद्धभुजमुद्धुरध्वनिमहाजनानुयातमानीय मदभ्याश एव स्थापयित्वा मातङ्गस्त्रिरघोषयत्—'एष मन्त्री कामपालो राज्यलोभाद्भर्तारं चण्डसिंहं युवराजं चण्डघोषं च विषान्नेनोपांशु हत्वा पुनर्देवोऽपि सिंहघोषः पूर्णयौवन इत्यमुष्मिन्पापमाचरिष्यन्विश्वासाद्रहस्यभूमौ पुनरमात्यं शिवनागमाहूय स्थूणमङ्गारवर्षं च राजवधायोपजप्य तैः स्वामिभक्त्या विवृतगुह्यो राज्यकामुकस्यास्य ब्राह्मणस्यान्धतमसप्रवेशो न्याय्य इति प्राड्विवाकवाक्यादक्ष्युद्धरणाय नीयते । पुनरन्योऽपि

---

पदचन्द्रिका ।

हर्म्यादेः काञ्च्यां मध्येभबन्धने' इत्यमरः । तदभिरुचितेन पित्राभिमतेन । स पूर्णभद्रः । तूर्णं सत्वरम् । 'सत्वरं चपलं तूर्णमविलम्बितमाशु च' इत्यमरः । घोषणस्थाने डिण्डिमस्थले । चिञ्चावृक्षं तिन्तिणीवृक्षम् । 'तिन्तिणी चिञ्चाम्लिका' इत्यमरः । गूढतनुर्गुप्तशरीरः । उच्चावचप्रलापा उच्चनीचवचनानि । उद्धुरध्वनीति क्रियाविशेषणम्, महाजनविशेषणं वा । मदभ्याश एव मत्समीप एव । मातङ्गश्चण्डालः । त्रिस्त्रिवारम् । अघोषयत् । अवादयदित्यर्थः । भर्तारं स्वामिनम् । उपांशु रहसि । अमुष्मिन्सिंहघोषे । शिवनागं तन्नामानम् । स्थूणमङ्गारवर्षं चेति द्वावप्यमात्यौ । उपजप्य भेदं कृत्वा । 'उपजापः स्मृतो भेदः' इत्यमरः । तैर्मन्त्रिभिः । विवृतगुह्यः प्रकटीकृतमन्त्रः । प्राड्विवाको व्यवहारनिर्णायकः । 'द्रष्टरि व्यवहाराणां प्राड्विवाकाक्षदर्शकौ' इत्यमरः । अक्ष्युद्धरणाय नेत्रोत्पाटनाय । अन्या-

भूषणा ।

प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने' इत्यमरः । तूर्णम् । 'सत्वरं चपलं तूर्णम्' इत्यमरः । चिञ्चाऽम्लिका । 'अम्लिका तिन्तिणी चिञ्चा' इति वैजयन्ती । उद्धुरध्वनिर्विशृङ्खलध्वनिः । 'उद्धुरं तु विशृङ्खलम्' । विवृतगुह्य आविष्कृतरहस्यः । प्राड्विवाको व्यवहारनिर्णायकः । 'द्रष्टरि व्यवहाराणां प्राड्विवाकाक्षदर्शकौ'

लघुदीपिका ।

तिरस्करिणी' । बाह्यकक्षा । 'कक्षा प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्येभबन्धने' । तूर्णम् । 'सत्वरं चपलं तूर्णमविलम्बितमाशु च' । चिञ्चा । 'अम्लिका तिन्तिणी चिञ्चा' इति वैजयन्ती । उद्धुरध्वनिः । 'उद्धुरं तु विशृङ्खलम्' । विवृतगुह्यः । प्राड्विवाको व्यवहारनिर्णायकः । 'द्रष्टरि व्यवहाराणां प्राड्विवाकाक्षदर्शकौ' । जनादुप-

---

पाठा०–१ 'लम्बघनतर'.

यदि स्यादन्यायवृत्तिस्तमप्येवमेव यथार्हेण दण्डेन योजयिष्यति देवः' इति । श्रुत्वैतद्बद्धकलकले महाजने पितुरङ्के प्रदीप्तशिरसमाशीविषं न्यक्षिपम् । अहं च भीतो नामावप्लुत्य तत्रैव जनादनुलीनः[1] क्रुद्धव्यालदष्टस्य तातस्य विहितजीवरक्षो विषं क्षणादस्तम्भयम् । अपतच्चैष भूमौ मृतकल्पः । प्रालपं च 'सत्यमिदं राजावमानिनं दैवो दण्ड एव स्पृशतीति । यदयमक्षिभ्यां विनावनिपेन चिकीर्षितः, प्राणैरेव वियोजितो विधिना' इति । मदुक्तं च केचिदन्वमन्यन्त, अपरे पुनर्निनिन्दुः । दर्वीकरस्तु तमपि चण्डालं दष्ट्वा रूढत्रासद्रुतलोकदत्तमार्गः प्राद्रवत् ।

अथ मदम्बा पूर्णभद्रबोधितार्था तादृशेऽपि व्यसने नातिविह्वला कुलपरिजनानुयाता[2] पद्भ्यामेव धीरमागत्य मत्पितुरुत्तमाङ्गमुत्सङ्गेन धारयन्त्यासित्वा राज्ञे समादिशत्[3]—'एष मे पतिस्त्वापकर्ता न वेति दैवमेव जानाति । न मेऽनयास्ति चिन्तया

### पदचन्द्रिका ।

यद्वृत्तिरन्यायकर्ता । यथार्हेण यथायोग्येन । बद्धकलकले कृतकोलाहले । आशीविषं सर्पम् । भीतो नाम मिथ्यैव भयं प्राप्त इति । अवप्लुत्योड्डीय । जनादनुलीनो लोकाद्गुप्तः । 'अन्तर्धौ येनादर्शनं–' (१।४।२८) इत्यपादानम् । अस्तम्भयं स्तम्भितवान् । एष तातः । प्रालपम् । अवदमित्यर्थः । दैवो दण्डः । देवानामयं दैवः । अवनिपेन राज्ञा । चिकीर्षितः कर्तुमिष्टः । वियोजितो वियुक्तः । निनिन्दुर्निन्दां चक्रुः । दर्वी फणा एव करः यस्य तथोक्तः सर्पः । दष्ट्वा दंशं कृत्वा । रूढो जातस्त्रासो भयं तेन द्रुतः पलायितो यो लोकस्तेन दत्तो मार्गो यस्येति स तथा ॥

**अथेति ।** मदम्बा मन्माता । व्यसने दुःखे । नातिविह्वला नातिव्याकुला । धीरं निश्चलम् । उत्तमाङ्गं शिरः । उत्सङ्गेनाङ्केन । आसित्वा स्थित्वा । समादिशत् । आदिदेशेत्यर्थः । **एष इति ।** अपकर्तापकारकः । अननुप्रपद्यमानाऽप्राप्तवती । कलङ्कयेयं कलङ्कितं करिष्यामि । अनुमन्तुमनुमोदितुम् ।

### भूषणा ।

इत्यमरः । जनादुपलीनो जनादन्तर्हितः । जनैरनुपलक्षित इत्यर्थः ।' अन्तर्धौ येनादर्शनमिच्छति' ( १।४।२८ ) इत्यपादानत्वम् । दर्वीकरः सर्पः । 'दर्वीकरो दीर्घपृष्ठो

### लघुदीपिका ।

लीनो जनादन्तर्हितः । जनैरनुपलक्षित इत्यर्थः । 'अन्तर्धौ येनादर्शनमिच्छति' (१।४।२८) इत्यपादानत्वम् । दर्वीकरः सर्पः । 'दर्वीकरस्तु भुजङ्गो दन्दशूको बिलेशयः'

पाठा०–१ 'जनानुलीनः', 'जनादुपलीनः'. २ 'अल्पपरिजना'. ३ 'समदिशत्'.

फलम् । अस्य तु पाणिग्राहकस्य गतिमननुप्रपद्यमाना भवत्कुलं कलङ्कयेयम् । अतोऽनुमन्तुमर्हसि भर्त्रा सह चिताधिरोहणाय माम्' इति । श्रुत्वा चैतत्प्रीतियुक्तः समादिक्षत्क्षितीश्वरः—'क्रियतां कुलोचितः संस्कारः । उत्सवोत्तरं च पश्चिमं विधिसंस्कारमनुभवतु मे भगिनीपतिः' इति । चण्डाले तु मत्प्रतिषिद्धसकलमन्त्रवादिप्रयासे संस्थिते 'कामपालोऽपि कालदष्ट एव' इति स्वभवनोपनयनममुष्य स्वमाहात्म्यप्रकाशनाय महीपतिरन्वमंस्त । आनीतश्च पिता मे विविक्तायां भूमौ दर्भशय्यामधिशाय्य स्थितोऽभूत् ॥

अथ मदम्बा मरणमण्डनमनुष्ठाय सकरुणं सखीरामन्त्र्य, मुहुरभिप्रणम्य भवनदेवता यत्ननिवारितपरिजनाक्रन्दिता पितुर्मे शयनस्थानमेकाकिनी प्राविक्षत् । तत्र च पूर्वमेव पूर्णभद्रोपस्थापितेन च मया वैनतेयतां गतेन निर्विषीकृतं भर्तारमैक्षत । हृष्टतमा पत्युः पादयोः पर्यश्रुमुखी प्रणिपत्य मां च मुहुर्मुहुः प्रस्नुतस्तनी परिष्वज्य सहर्षबाष्पगद्गदमगदत्—'पुत्र, योऽसि जातमात्रः पापया मया परित्यक्तः, स किमर्थमेवं मामतिनिर्घृणामनुगृह्णासि । अथवैष निरपराध एव ते जनयिता । युक्तमस्य प्रत्यानयनमन्तकाननात् । क्रूरा खलु तारावली या त्वामुपलभ्यापि तत्त्वतः कुबेरादसमर्प्य मह्यमर्पितवती देव्यै वसुमत्यै,

---

पदचन्द्रिका ।

समादिक्षत् । आज्ञापयामासेत्यर्थः । मन्त्रवादिनां गारुडिकानाम् । संस्थिते मरणं प्राप्ते । कालदष्टः । मृत इति यावत् । अमुष्य कामपालस्य । स्वमाहात्म्यप्रकाशनाय स्वधार्मिकत्वकीर्तिप्राकट्यार्थम् । अन्वमंस्तानुमोदितवान् । विविक्तायां विजनायाम् ॥

**अथेति** । मरणमण्डनं मरणकालोचितभूषणम् । तत्र विविक्तभूमौ । वैनतेयतां गरुडताम् । गतेन प्राप्तेन । प्रस्नुतस्तनी स्रवत्पयःस्तनी । परिष्वज्यालिङ्ग्य । जात उत्पन्न एव जातमात्रः । निर्घृणां निष्कृपाम् । जनयितोत्पादकः । प्रत्यानयनं परावृत्यानयनम् । अन्तकाननात् यममुखात् । क्रूरा कठिना । सैव तारा-

भूषणा ।

दन्दशूको बिलेशयः' इत्यमरः। दर्भशय्यामधिशाय्य ।'अधिशीङ्स्थासां कर्म'(१।४।४६)

---

पाठा०–१ 'प्रतिसमदिक्षत्'. २ 'उत्सवान्तरम्'.

सैव वा सदृशकारिणी । न हि तादृशाद्भाग्यराशेर्विना मादृशो[1] जनोऽल्पपुण्यस्तवार्हति कलप्रलापामृतानि कर्णाभ्यां पातुम् । एहि परिष्वजस्व' इति भूयोभूयः शिरसि जिघ्रन्त्यङ्कमारोपयन्ती तारावलीं गर्हयन्त्यालिङ्गयन्त्यश्रुभिरभिषिञ्चन्ती चोत्कम्पिताङ्गयष्टिरन्यादृशीव[2] क्षणमजनिष्ट । जनयितापि मे नरकादिव स्वर्गम्, तादृशाद्व्यसनात्तथाभूतमभ्युदयमारूढः पूर्णभद्रेण विस्तरेण यथावृत्तान्तमावेदितो भगवतो मघवतोऽपि भाग्यवन्तमात्मानमजीगणत् । मनागिव[3] च मत्संबन्धमाख्याय हर्षविस्मितात्मनोः पित्रोरकथयम्—'आज्ञापयतं कार्य नः प्रतिपत्तिः' इति । पिता मे प्राब्रवीत्—'वत्स, गृहमेवेदमस्मदीयमतिविशालप्राकारवलयमक्षय्यायुधस्थानम्[4] । अलङ्घ्यतमा च गुप्तिः । उपकृताश्च मयातिबह्वः सन्ति सामन्ताः । प्रकृतयश्च भूयस्यो न मे व्यसनमनुरुध्यन्ते । सुभटानां चानेकसहस्रमस्त्येव ससुहृत्पुत्रदारम् ।

पदचन्द्रिका ।

वली । सदृशकारिणी युक्तकारिणी । कलो मञ्जुलो यः प्रलापः शिशुशब्दः स एवामृतम् । गर्हयन्ती निन्दती । उत्कम्पिताङ्गयष्टिर्जातोत्कम्पशरीरा । अन्यादृशीवान्यसमा । 'त्यदादिषु दृशोऽनालोचने कञ्च' (३।२।६०) इति सूत्रे 'समानान्ययोश्चेति वक्तव्यम्' (वा. २०२९) इति दृशेः कञ् । 'आ सर्वनाम्नः' (६।३।९१) इत्यात्वम् । जनयिता पिता । तादृशाद्व्यसनान्नेत्रोत्पाटनादिरूपाद्दुःखात् । तथाभूतं पुनर्जीवनपुत्रमिलनरूपम् । मघवत इन्द्रादपि भाग्यवन्तमदृष्टवन्तम् । अजीगणत् । 'गण संख्याने' । संख्यातवानित्यर्थः । मनागल्पम् । मत्संबन्धं स्वसंबन्धम् । प्रतिपत्तिः कर्तव्यता । अतिविशालप्राकारवलयमतिविस्तीर्णवरणभित्तिमण्डलम् । अक्षय्यायुधस्थानमपरिमितायुधगृहम् । अलङ्घ्यतमा अतिशयेन लङ्घितुमशक्या । गुप्तिर्गोपनम् । 'गुप्तिः कारागृहे प्रोक्ता भूगर्ते रक्षणे यमे' इति विश्वः । उपकृता कृतोपकाराः । सामन्ता अधीश्वराः । 'सामन्तः स्यादधीश्वरः' । इत्यमरः । प्रकृतयः प्रजाः । व्यसनं

भूषणा ।

इति कर्मत्वम् । अन्यादृश्यन्यसमा । 'त्यदादिषु दृशोऽनालोचने कञ्च' (३।२।६०)

लघुदीपिका ।

अन्यादृशी चान्यसमा । 'त्यदादिषु दृशोऽनालोचने कञ्च' (३।२।६०) इति सूत्रे

पाठा०—१ 'अस्मादृशः'. २ 'अन्यादृश्यैव'. ३ 'मनागेव'. ४ 'आयुधग्रामम्'.

अतोऽत्रैव कतिपयान्यहानि स्थित्वा बाह्याभ्यन्तरङ्गान्कोपानुत्पादयिष्यामः । कुपितांश्च संगृह्य प्रोत्साह्यास्य प्रकृत्यमित्रानुत्थाप्य सहजांश्च द्विषः, दुर्दान्तमेनमुच्छेत्स्यामः' इति । 'को दोषः, तथास्तु' इति तातस्य मतमन्वमंसि ।

तथास्मासु प्रतिविधाय तिष्ठत्सु राजापि विज्ञापितोदन्तो जातानुतापः पारग्रामिकान्प्रयोगान्प्रायः प्रायुङ्क्त । ते चास्माभिः प्रत्यहमहन्यन्त । अस्मिन्नेवावकाशे पूर्णभद्रमुखाच्च राज्ञः शय्यास्थानमवगम्य तदैव स्वोदवसितभित्तिकोणादारभ्योरगास्येन सुरङ्गामकार्षम् । गता च सा भूमिस्वर्गकल्पमनल्पकन्यकाजनं कमप्युद्देशम् । अव्यथिष्ट च दृष्ट्वैव स मां नारीजनः । तत्र काचिदिन्दुकलेव स्वलावण्येन रसातलान्धकारं निह्नुवाना[1], विग्र-

पदचन्द्रिका ।

दुःखम् । सुभटानां वीराणाम् । सुहृदः संबन्धिनः । पुत्राः सुताः । दाराः स्त्रियः, तैः सह वर्तमानम् । बाह्याभ्यन्तरङ्गान्बहिरङ्गानन्तरङ्गान् । कुपितान्कोपं प्राप्तान् संगृह्याङ्गीकृत्य । प्रोत्साह्य प्रोत्साहवतो विधाय । दुर्दान्तं दुःखेन दमनीयम् । अन्वमंस्यनुमोदितवान् ॥

तथा प्रतिविधाय प्रतिविधानं कृत्वा । राजा सिंहघोषः । उदन्तो वार्ता । अनुतापः पश्चात्तापः । पारग्रामिकान्परग्रामे भवान् । प्रयोगान् कटकप्रेषणादिरूपांस्तथा । प्रायो बहुलान् । 'प्रायो वयसि बाहुल्ये' इति वैजयन्ती । प्रायुङ्क्त प्रयुक्तवान् । ते परकटकस्थाः । अवकाशेऽवसरे । स्वोदवसितं स्वगृहम् । 'गृहं गेहोदवसितम्' इत्यमरः । उरगास्येन फणिमुखाकारायसखननसाधनेन । सुरङ्गां खनिम् । सा सुरङ्गा । भूमिस्वर्गकल्पं भूमिस्वर्गतुल्यम् । उद्देशं प्रदेशम् । अव्यथिष्ट । व्यथां प्रापेत्यर्थः । इन्दुकलेव चन्द्रलेखेव । रसातलान्धकारं पातालान्ध-

भूषणा ।

इति सूत्रे 'समानान्ययोश्चेति वक्तव्यम्' इति कञ् । 'आ सर्वनाम्नः' । (६।३।९१) इत्यालम् । दुर्दान्तं दुःखेन दमनीयम् । विज्ञापितोदन्तो विज्ञापितवृत्तान्तः । 'वार्ता प्रवृत्तिर्वृत्तान्तः' इत्यमरः । पारग्रामिकम् । मिताक्षरायां विज्ञानेश्वरः—'उपरुन्ध्यारिमासीत राष्ट्रं चास्योपपीडयेत् । दूषयेच्चास्य सततं यवसान्नोदकेन्धनम्' इति । प्रायः प्रायुङ्क्त । 'प्रायो वयसि

लघुदीपिका ।

'समानान्ययोश्चेति वक्तव्यम्' इति दृशः कञ् । 'आ सर्वनाम्नः' (६।३।९१) इत्यालम् । दुर्दान्तं दुःखेन दमनीयम् । 'क्वचित्क्वचिच्च कृतार्थे निष्ठा प्रथम इष्यते' इति वचनेन । प्रायः प्रायुङ्क्त । 'प्रायो वयसि बाहुल्ये तुल्यानशनमृत्युषु' इति वैजयन्ती ।

पाठा०—१ 'निर्धुनाना'.

हिणीव देवी विश्वंभरा, हरगृहिणीवासुरविजयायावतीर्णा, पाताल-मागता गृहिणीव भगवतः कुसुमधन्वनः, राजलक्ष्मीरिवानेक-दुर्नृपदर्शनपरिहाराय महीविवरं प्रविष्टा, निष्टप्तकनकपुत्रिकेवा-वदातकान्तिः कन्यका, चन्दनलतेव मलयमारुतेन, मद्दर्शनेनो-दकम्पत । तथाभूते च तस्मिन्नङ्गनासमाजे कुसुमितेव काशयष्टिः, पाण्डुशिरसिजा स्थविरा काचिच्चरणयोर्मे निपत्य त्रासदीनमब्रूत—'दीयतामभयदानमस्मा अनन्यशरणाय स्त्रीजनाय । किमसि देव-कुमारो दनुजयुद्धतृष्णया रसातलं विविक्षुः । आज्ञापय कोऽसि, कस्य हेतोरागतोऽसि ?' इति । सा तु मया प्रत्यवादि—'सुदत्यः, मा स्म भवत्यो भैषुः । अहमस्मि द्विजातिर्वृषात्कामपालाद्देव्यां कान्तिमत्यामुत्पन्नोऽर्थपालो नाम । सत्यर्थे निजगृहान्नृपगृहं सुरङ्ग-

---

पदचन्द्रिका ।

कारम् । निह्नुवाना दूरीकर्तुं शक्ता । विग्रहिणीव शरीरधारिणीव । विश्वंभरा पृथ्वी । 'रसा विश्वंभरा स्थिरा' इत्यमरः । हरगृहिणीव दुर्गेव । कुसुमधन्वनः कामस्य । दुर्नृपदर्शनपरिहाराय दुष्टराजावलोकनपरिहाराय । निष्टप्ता संतापिता । कनकपुत्रिका सुवर्णपुत्तलिका । काशयष्टिः 'सरस' इति प्रसिद्धा । पाण्डुशिरसिजा श्वेतकेशा । स्थविरा वृद्धा । त्रासदीनं भयदीनम् । अनन्यशरणाय । त्वदेकशरणायेत्यर्थः । देवकुमारो देवपुत्रः । दनुजा दैत्याः । 'असुरा दैत्यदैतेयदनुजेन्द्रारिदानवाः' इत्यमरः । विविक्षुः प्रवेष्टुमिच्छुः । कस्य हेतोः । किमर्थमित्यर्थः । सा स्थविरा । सुदत्य इति सर्वाभिप्रायेण संबोधनम् । द्विजातिवृषात् ब्राह्मणश्रेष्ठात् । 'वृषले मूषिके श्रेष्ठे सुकृते वृषभे वृषः' इति केशवः । सत्यर्थे । कार्यवस्तुनि सतीत्यर्थः ।

भूषणा ।

बाहुल्ये तुल्यानशनमृत्युषु' इति वैजयन्ती । बहुलं प्रयुक्तवानित्यर्थः । स्वोदसितं स्वगृहम् । 'गृहं गेहोदवसितम्' इत्यमरः । निर्धुनानातितरां निरस्यन्ती । अङ्गनासमाजेऽङ्गनासमूहे । 'पशूनां समजोऽन्येषां समाजोऽथ सधर्मिणाम्' इत्यमरः । कस्य हेतोः । 'सर्वनाम्नस्तृतीया च' (२।३।२७) षष्ठी । द्विजातिवृषभात् द्विजश्रेष्ठात् । 'वृषले मूषके श्रेष्ठे सुकृते वृषभे वृषः' इति । सत्यर्थे कार्यवस्तुनि सति । 'अर्थोऽभिधेय-

लघुदीपिका ।

बहुलं प्रयुक्तवानित्यर्थः । स्वोदवसितं स्वगृहम् । 'गृहं गेहोदवसितम्' । निर्धुनाना नितरां निरस्यन्ती । अङ्गनासमाजेऽङ्गनासमूहे । समाजः समूहविशेषः । 'पशूनां समजोऽन्येषां समाजोऽथ सधर्मिणाम्' द्विजातिवृषाद्द्विजातिश्रेष्ठात् । 'वृषले मूषके श्रेष्ठे सुकृते वृषभे वृषः' । सत्यर्थे कार्यवस्तुनि सतीत्यर्थः । 'सत्यर्थे कार्यवस्तुनि' । 'अर्थोऽभिधेयरैवस्तु-

---

पाठा०–१ 'वृषभात्'.

योपसरन्निहान्तरे वो दृष्टवान् । कथयत काः स्थ यूयम् । कथमिह निवसथ' इति प्रात्रवम् । सोदञ्जलिरुदीरितवती—'भर्तृदारक, भाग्यवत्यो वयम्, यास्त्वामेभिरेव चक्षुर्भिरनघमद्राक्ष्म । श्रूयताम् । यस्तव मातामहश्चण्डसिंहः, तेनास्यां देव्यां लीलावत्यां चण्डघोषः कान्तिमतीत्यपत्यद्वयमुदपादि । चण्डघोषस्तु युवराजोऽत्यासङ्गादङ्गनासु राजयक्ष्मणा सुरक्षयमगादन्तर्वत्न्यां देव्यामाचारवत्याम् । अमुया चेयं मणिकर्णिका नाम कन्या प्रसूता । अथ प्रसववेदनया मुक्तजीविताचारवती पत्युरन्तिकमगमत् । अथ देवश्चण्डसिंहो मामाहूयोपह्वरे समाज्ञापयत्—'ऋद्धिमति, कन्यकेयं कल्याणलक्षणा । तामिमां मालवेन्द्रनन्दनाय दर्पसाराय विधिवद्वर्धयित्वा दित्सामि । बिभेमि च कान्तिमतीवृत्तान्तादारभ्य कन्यकानां प्रकाशावस्थापनात् । अत इयमरातिव्यसनाय कारिते महति भूमिगृहे कृत्रिमशैलगर्भोत्कीर्णनानामण्डपप्रेक्षागृहे प्रचुरपरिबर्हया भवत्या संवर्ध्यताम् । अस्त्यत्र भोग्यवस्तु वर्षशते-

पदचन्द्रिका ।

अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः । सुरङ्गया भूम्यन्तर्मार्गेणोपसरन् प्राब्रवमुक्तवान् । सा वृद्धा । उदञ्जलिरूर्ध्वीकृताञ्जलिः । उदीरितवत्युक्तवती । भर्तृदारक राजपुत्र । अनघं निष्पापम् । अद्राक्ष्म दृष्टवत्यः । अपत्यद्वयं बालकद्वयम् । उदपाद्युत्पादितवान् । 'चिण् ते पदः' ( ३।१।६० ) इति कर्तरि चिण् । राजयक्ष्मा क्षयरोगः । सुरक्षयं देवगृहम् । 'क्षयो रोगान्तरे वेश्मकल्पान्तापचयेषु च' इति विश्वः । अन्तर्वत्न्यां गर्भिण्याम् । अमुयाऽनया । **अथेति** । प्रसववेदनया प्रसवदुःखेन । पत्युरन्तिकं भर्तृसंनिहितम् । **अथेति** । उपह्वरे रहसि । विधिवद्विध्युक्तमार्गेण । दित्सामि दातुमिच्छामि । वृत्तान्तो वार्ता । अरातिव्यसनाय । वैरिकृतदुःखायेत्यर्थः । कृत्रिमशैलः कृत्रिमपर्वतः । गर्भो मध्यं तत्रोत्कीर्णः । 'समावुत्कीर्णविन्यस्तौ' इति कोशः । प्रेक्षागृहं नृत्येक्षणगृहम् । 'प्रेक्षा नृत्येक्षणं

भूषणा ।

रैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः । वो युष्मान् । उदपादि । 'चिण् ते पदः' ( ३।१।६० ) इति कर्तरि चिण् । 'चिणो लुक्' ( ६।४।१०४ ) इति प्रत्ययस्य लुक् । उत्कीर्णम् । 'समावुत्कीर्णविन्यासौ' । प्रेक्षागृहं नृत्येक्षणगृहम् । 'प्रेक्षा नृत्येक्षणं प्रज्ञा' ।

लघुदीपिका ।

प्रयोजननिवृत्तिषु' । उदपादि । 'चिण् ते पदः' (३।१।६०) इति कर्तरि चिण् । उत्कीर्णम् ( चिण् ) । 'समावुत्कीर्णविन्यस्तौ' । प्रेक्षागृहं नृत्येक्षणगृहम् । 'प्रेक्षा नृत्येक्षणं प्रज्ञा'

पाठा०—१ 'इति । सोदञ्जलिः'. २ 'असुक्षयम्'. ३ 'वर्षशतोपभोगेन'.

नाप्यक्षय्यम्' इति । स तथोक्त्वा निजवासगृहस्य व्यङ्गुलभित्तार्धपादं किष्कुविष्कम्भमुद्धृत्य तेनैव द्वारेण स्थानमिदमस्मानवीविशत् । इह च नो वसन्तीनां द्वादशसमाः समत्ययुः । इयं च वत्सा तरुणीभूता । न चाद्यापि स्मरति राजा । काममियं पितामहेन दर्पसाराय संकल्पिता । त्वदम्बया कान्तिमत्या चेयं गर्भस्थैव द्यूतजिता स्वमात्रा तवैव जायात्वेन समकल्प्यत । तदत्र प्राप्तरूपं चिन्त्यतां कुमारेणैव' इति । तां पुनरवोचम्—'अद्यैव राजगृहे किमपि कार्यं साधयित्वा प्रतिनिवृत्तो युष्मासु यथार्हं प्रतिपत्स्ये' इति । तेनैव दीपदर्शितबिलपथेन गत्वा स्थितेऽर्धरात्रे तदर्धपादं प्रत्युद्धृत्य वासगृहं प्रविष्टो विश्रब्धसुप्तं सिंहघोषं जीवग्राहमग्रहीषम् । आकृष्य च तमहिमिवाहिशत्रुः स्फुरन्तममुनैव भित्तिरन्ध्रपथेन स्त्रैणसंनिधिमनैषम् । आनीय च स्वभवनमायस-

पदचन्द्रिका ।

प्रज्ञा' इति कोशः । प्रचुरपरिबर्हया प्रचुरपरिवारया । 'परिबर्हं तु राजार्हवस्तुन्यपि परिच्छदे' इति विश्वः । संवर्ध्यताम् । **अस्तीति** । भोग्यं वस्तु । भोगार्हमित्यर्थः । अक्षय्यमशक्यक्षयम् । 'क्षय्यजय्यौ शक्यार्थे' (६।१।८१) इति निपातनात् । 'क्षि क्षये' । व्यङ्गुलभित्तावङ्गुलद्वयपरिमाणभित्तौ । अर्धपादं प्रस्तरपिधानम् । किष्कुविष्कम्भं हस्तपरिणाहम् । वितस्तिपरिणाहं वा । 'किष्कुर्हस्ते वितस्तौ च' इत्यमरः । 'परिणाहस्तु विष्कम्भः' इति वैजयन्ती । अस्मान्मत्प्रभृतिकन्याजनान् । अवीविशत् । प्रवेशं कारयति स्मेत्यर्थः । समत्ययुरतिक्रान्ताः । जायात्वेन स्त्रीत्वेन । प्राप्तरूपं कर्तव्यरूपम् । प्रतिनिवृत्तः परावृत्यागतः । युष्मासु भवतीषु । यथार्हं यथायोग्यम् । प्रतिपत्स्ये वर्तिष्ये । बिलपथेन छिद्रमार्गेण । जीवग्राहं जीवं गृहीत्वेति तथा । णमुल् । अहिमिव सर्पमिव । अहिशत्रुर्गरुडः । अथवाहिमिव वृत्रासुरमिव । अहिशत्रुरिन्द्रः । स्त्रैणं स्त्रीणां समूहस्तथा । 'स्त्रीपुंसाभ्यां नञ्स्नञौ

भूषणा ।

अक्षय्यम् । 'क्षय्यजय्यौ शक्यार्थे'(६।१।८१) इति निपातनात् । अशक्यक्षयमित्यर्थः । 'क्षि क्षये' । किष्कुविष्कम्भम् । किष्कुर्हस्ते वितस्तौ च' इत्यमरः । 'परिणाहस्तु विष्कम्भः' इति वैजयन्ती । जीवग्राहम् । 'समूलाकृतजीवेषु हन्कृञ्ग्रहः' (३।४।३६)

लघुदीपिका ।

अक्षय्यम् । 'क्षय्यजय्यौ शक्यार्थे'(६।१।८१) इति निपातनात् । अशक्यक्षयमित्यर्थः । 'क्षि क्षये' । 'न्यङ्गुले तु त्रिपेल्लकम्' (?) । किष्कुः । 'किष्कुर्हस्ते वितस्तौ च', 'परिणाहस्तु विष्कम्भः' इति वैजयन्ती । स्त्रैणं स्त्रीसमूहः । 'स्त्रीपुंसाभ्यां नञ्स्नञौ भव-

पाठा०—१ 'अङ्गनभित्तौ'.

निगडसंदितचरणयुगलमवनमितमलिनवदनमश्रुबहलरक्तचक्षुषमे-कान्ते जनयित्रोर्ममादर्शयम् । अकथयं च बिलकथाम् । अथ पितरौ प्रहृष्टतरौ तं निकृष्टाशयं निशाम्य बन्धने नियम्य तस्या दारिकाया यथार्हेण कर्मणा मां पाणिमग्राहयेताम् । अनाथकं च तद्राज्यमस्मदायत्तमेव जातम् । प्रकृतिकोपभयात्तु मन्मात्रा मुमुक्षितोऽपि न मुक्त एव सिंहघोषः । तथास्थिताश्च वयमङ्गराजः सिंहवर्मा देवपादानां भक्तिमान्कृतकर्मा चेत्यमित्राभियुक्तमेनमभ्यासराम । अभूवं च भवत्पादपङ्कजरजोनुग्राह्यः । स चेदानीं भवच्चरणप्रणामप्रायश्चित्तमनुतिष्ठतु सर्वदुश्चरितक्षालनमनार्यः सिंहघोषः' इत्यर्थपालः प्राञ्जलिः प्रणनाम । देवोऽपि राजवाहनः 'बहु पराक्रान्तम्, बहूपयुक्ता च बुद्धिः, मुक्तबन्धस्ते श्वशुर पश्यतु माम्' इत्यभिधाय भूयः प्रमतिमेव पश्यन्प्रीतिस्मेरः 'प्रस्तूयतां तावदात्मीयं चरितम्' इत्याज्ञापयत् ।

इति श्रीदण्डिनः कृतौ दशकुमारचरितेऽर्थपालचरितं नाम चतुर्थ उच्छ्वासः ।

---

पदचन्द्रिका ।

भवनात्' (४।१।८७) इति समूहार्थे नञ् । आयसं लौहम् । निगडं शृङ्खला । संदितं बद्धम् । 'बद्धं निगडितं दितम्' इति वैजयन्ती । चरणयुगलं पादद्वन्द्वम् । जनयित्रोर्मातापित्रोः । अदर्शयं दर्शितवान् । अकथयं कथितवान् । तं सिंहघोषम् । निकृष्टाशयं नीचचित्तम् । पाणिं पाणिग्रहणम् । अग्राहयेतां ग्राहितवन्तौ । अस्मदायत्तमस्मदधीनम् । प्रकृतिकोपभयात्प्रजाक्रोधभयात् । मुमुक्षितोऽपि मोक्तुमिष्टोऽपि । भक्तिमान्भक्तियुक्तः । कृतकर्मा कृतकार्यः । एनं सिंहवर्माणम् । अनार्योऽश्रेष्ठः सिंहघोषः । प्रस्तूयतामुपक्रम्यताम् ॥

**इति श्रीदशकुमारटीकायां पदचन्द्रिकाभिधायां चतुर्थ उच्छ्वासः ॥**

भूषणा ।

इति णमुल् । स्त्रैणं स्त्रीसमूहः । 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' (४।१।८७) इति समूहार्थे नञ् । संदानितं बद्धम् । तस्या दारिकाया आचारवतीकन्यकायाः । अस्मादायत्तमस्मदधीनम् । 'अधीनो निघ्न आयत्तः' इत्यमरः । भवत्पादानां भक्तिमान् । राजवाहनसंतोषार्थेयं मुक्तिः । पूर्वं तु कथा नाविष्कृता । श्वशुरः पितृव्यश्वशुरः । कान्तिमतीसंबन्धान्मातुलः ॥

**इति श्रीदशकुमारटीकायां भूषणाभिधायां चतुर्थ उच्छ्वासः ॥**

लघुदीपिका ।

नात्' (४।१।८७) इति समूहार्थे नञ् । संदितम् । 'बद्धं निगडितं दितम्' इति वैजयन्ती । अस्मदायत्तमस्मदधीनम् ॥ **इति लघुदीपिकायां चतुर्थ उच्छ्वासः ॥**

---

पाठा०—१ 'संदानित'.

## पञ्चमोच्छ्वासः ।

सोऽपि प्रणम्य विज्ञापयामास—'देव, देवस्यान्वेषणाय दिक्षु भ्रमन्नभ्रंकषस्यापि विन्ध्यपार्श्वरूढस्य वनस्पतेरधः, परिणतपतङ्ग-बालपल्लवावतंसिते पश्चिमदिगङ्गनामुखे पल्वलाम्भस्युपस्पृश्योपास्य संध्याम्, तमःसमीकृतेषु निम्नोन्नतेषु, गन्तुमक्षमः क्षमातले किसलयैरुपरचय्य शय्यां शिशयिषमाणः, शिरसि कुर्वन्नञ्जलिम्, 'यास्मिन्वनस्पतौ वसति देवता सैव मे शरणमस्तु शरारुचक्रचा-रभीषणायां शर्वगलश्यामशार्वरान्धकारपूराध्मातगभीरगह्वरायाम-स्यां महाटव्यामेककस्य मे प्रसुप्तस्य' इत्युपधाय वामभुजमशयिषि ।

---

### पदचन्द्रिका ।

इदानीं प्रमतिः स्वचरितं प्रवक्तुमुपक्रमते—सोऽपि प्रमतिः । अन्वेषणं गवेष-णम् । अभ्रंकषस्याभ्रंलिहस्य । उच्चस्येति यावत् । अभ्रं व्योम मेघो वा । 'अभ्रं मेघो वारिवाहः' इत्यमरः । 'द्योदिवौ द्वे स्त्रियामभ्रम्' इत्यपि । 'सर्वकूल–' ( ३।२।४२ ) इति खच् मुमागमश्च । वनस्पतेरपुष्पवृक्षस्य । 'तैरपुष्पाद्वनस्पतिः' इत्यमरः । परि-णतः पूर्णः । पतङ्गः सूर्यः । 'पतङ्गौ पक्षिसूर्यौ च' इत्यमरः । स एव बालपल्लवः सोऽ-वतंसो यस्येति स तस्मिन् । पल्वलमल्पसरः । 'वेशन्तः पल्वलं चाल्पसरः' इत्यमरः । उपस्पृश्य । आचम्येत्यर्थः । तमःसमीकृतेषु । अन्धकारपूर्णीकृतेष्वित्यर्थः । किसलयैः पल्लवैः । 'पल्लवोऽस्त्री किसलयम्' इत्यमरः । उपरचय्य । कृत्वेत्यर्थः । शिशयिषमाणः शयितुकामः । शरारुर्घातुकः । एवमेवामरः । हिंसकः । प्राणीति यावत् । शर्वगलो महादेवकण्ठः । शर्वर्या इदं शार्वरम् । आध्मातं पूरितम् । महाटव्यां महारण्ये । एककस्यैकाकिनः । 'एकाकी त्वेक एककः' इत्यमरः । उपधाय । उपधानीकृत्वे-

### भूषणा ।

अभ्रंकषस्य व्योमस्पृशः, मेघस्पृशो वा । 'द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्ब-रम्' । 'अभ्रं मेघो वारिवाहः' इत्युभयत्राप्यमरः । 'सर्वकूलाभ्रकरीषेषु कषः' (३।२। ४२ ) इति खच् । 'अरुर्द्विषदजन्तस्य–' ( ६।३।६७ ) इति मुम् । उपस्पृश्याचम्य । 'उपस्पर्शस्त्वाचमनम्' इत्यमरः । एकाकिन एकस्य । 'एकाकी त्वेक एककः' इत्यमरः ।

### लघुदीपिका ।

अभ्रंकषस्याभ्रस्पृशः । अभ्रं व्योम मेघो वा । 'द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम्' । 'अभ्रं मेघो वारिवाहः' । 'सर्वकूलाभ्रकरीषेषु कषः' ( ३।२।४२ ) इति खच् मुमागमश्च । 'शरारुर्घातुको हिंस्रः' । आध्मातं पूरितम् । एककस्यैकाकिनः ।

---

पाठा०–१ 'एकाकिनः'.

ततः क्षणादेवावनिदुर्लभेन स्पर्शेनासुखायिषत किमपि गात्राणि, [1]आह्लादयिषतेन्द्रियाणि, अभ्यमनायिष्ट चान्तरात्मा, विशेषतश्च हृषितास्तनूरुहाः, पर्यस्फुरन्मे दक्षिणभुजः । 'कथं न्विदम्' इति मन्दमन्दमुन्मिषन्नुपर्यच्छचन्द्रातपच्छेदकल्पं शुक्लांशुकवितानमैक्षिषि । वामतश्च[2]लितदृष्टिः समया सौधभित्तिं चित्रास्तरणशायिनमतिविश्रब्धप्रसुप्तमङ्गनाजनमलक्षयम् । दक्षिणतो दत्तचक्षुरागलितस्तनांशुकाम्, अमृतफेनपटलपाण्डुरशयनशायिनीम्, आदिवराहदंष्ट्रांशुजाललग्नाम्, अंसस्रस्तदुग्ध[3]सागरदुकू-

## पदचन्द्रिका ।

त्यर्थः । अशयिषि निद्रामकरवम् । असुखायिषत सुखानि जातानीत्यर्थः । गात्राणि शरीराणि । आह्लादयिषत । आह्लादं प्रापुरित्यर्थः । हृषिता उदञ्चिता । हृषेरुदञ्चनेऽर्थे 'हृषेर्लोमसु' ( ७।२।२९ ) इतीडागमः । तनूरुहा लोमानि । पर्यस्फुरत् । स्फुरितवानित्यर्थः । अच्छो निर्मलः । चन्द्रातपश्चन्द्रालोकः । छेदकल्पं भङ्गन्यूनम् । वितानमुल्लोचः । ऐक्षिषि दृष्टवान् । चलितदृष्टिश्चक्रीकृतदृष्टिः । समया सौधभित्तिं सौधभित्तेः समीपे । 'समयेऽन्तिकमध्ययोः' इति सामीप्येऽव्ययम् । षष्ठ्यर्थे द्वितीया । विश्रब्धो विश्वस्तः । **दक्षिणत इति ।** पाण्डुरं श्वेतम् । 'शुक्लशुभ्रशुचिश्वेतविशदश्वेतपाण्डुराः' इत्यमरः । अंसः स्कन्धः । स्रस्तं गलितम् । दुग्धसागरवद्दुकूलं पट्टकूलम् । 'दुकूलं त्वम्बरे

## भूषणा ।

इत्युपधायेति । उक्त्वेति मध्ये शेषः । तथा च इत्युक्त्वोपधाय वामभुजमित्यन्वयः । असुखायिषत । 'सुखादिभ्यः कर्तृवेदनायाम्' ( ३।१।१८ ) इति क्यङ् । लुङि सिच इट् । आह्लादिषत । 'ह्लादी सुखे च' आत्मनेपदी । लुङ् । अभ्यमनायिष्ट । 'कर्तुः क्यङ्–' ( ३।१।११ ) इति क्यङ् । 'हृषेर्लोमसु' ( ७।२।२९ ) इति हृषेरुदञ्चनेऽर्थे इडागमः । पर्यस्फुरद्दक्षिणभुजः । दक्षिणभुजस्पन्द इष्टसमागमसूचकः । तरङ्गिते वसन्तराजः-'स्पन्दो भुजस्येष्टसमागमाय' इति । वर्णितं कालिदासेन–'तस्यां रघोः सूनुरुपस्थितायां वृणीत मां नेति समाकुलोऽभूत् । वामेतरः संशयमस्य बाहुः केयूरबन्धोच्छ्वसितैर्नुनोद ॥' इति । समया सौधभित्तिं सौधभित्तेः समीपे । 'समया निकषा चेति सामीप्ये वर्ततेऽव्ययम्' । 'अभितःपरितः–'(वा. १४४२) इति द्वितीया । क्षीरसागरदुकूलं श्वेत-

## लघुदीपिका ।

'एकाकी त्वेक एककः' । हृषिता उदञ्चिताः । हृषेरुदञ्चनेऽर्थे इडागमः । 'हृषेर्लोमसु' ( ७।२।२९ ) इति । समया सौधभित्तिं सौधभित्तेः समीपे । 'समया निकषा चेति सामीप्ये वर्ततेऽव्ययम्' इति कोशः । 'अभितःपरि–'(वा. १४४२)इति षष्ठ्यर्थे द्वितीया ।

---

पाठा०–१ 'आह्लादिषत'. २ 'वलित'. ३ 'क्षीरसागर'.

लोत्तरीयाम्, भयसाध्वसमूर्च्छितामिव धरणीम्, अरुणाधरकिरणबालकिसलयलास्यहेतुभिराननारविन्दपरिमलोद्वाहिभिर्निःश्वासमातरिश्वभिरीश्वरेक्षणदहनदग्धं स्फुलिङ्गशेषमनङ्गमिव संधुक्षयन्तीम्, अन्तःसुप्तषट्पदमम्बुजमिव जातनिद्रं सरसमामीलितलोचनेन्दीवरमाननं दधानाम्, ऐरावतमदावलेपलूनापविद्धामिव नन्दनवनकल्पवृक्षरत्नवल्लरीं कामपि तरुणीमालोकयम् । अतर्कयं च—'क्व गता सा महाटवी, कुत इदमूर्ध्वाण्डकपालसंपुटोल्लेखि[1] शक्तिध्वजशिखरशूलोत्सेधं सौधमागतम्, क्व च तदरण्यस्थलीसमास्तीर्ण

### पदचन्द्रिका ।

पट्टकूले भूर्जदलेऽपि च' इति महीपः । तस्योत्तरीयं यस्यास्ताम् । भयमनुरागः । 'भयं भीत्यनुरागयोः' इति कोशः । तेन साध्वसमूर्च्छितामिव । अरुणस्ताम्रो योऽधरस्तस्य किरणास्त एव बालकिसलयानि तेषां लास्यं नृत्यं तद्धेतुभिः कारणभूतैः । परिमलमुद्वहन्ति ते परिमलोद्वाहा( हिन )स्तैः । मातरिश्वभिर्वायुभिः ईश्वरेक्षणं महादेवतृतीयनेत्रम् । संधुक्षयन्ती वर्धयन्ती । षट्पदा भ्रमरा यस्मिंस्तत् । ऐरावतः सुरगजः । मदावलेपो मदगर्वः । लूनां छिन्नाम् । अपविद्धां त्यक्ताम् । कल्पवृक्षरत्नमयी वल्लरी मञ्जरी । 'वल्लरी मञ्जरी स्त्रियौ' इत्यमरः । ऊर्ध्वाण्डमूर्ध्वकपालम् । आकाशमित्यर्थः । 'अप एव ससर्जादौ तासु वीर्यमथासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ॥ तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः । नखैर्हिरण्यगर्भः स तदण्डं बिभिदे समम् ॥ ताभ्यां स शकलाभ्यां च दिवं भूमिं च निर्ममे ॥' इति मनुः । शक्तिध्वजः सेनानीः । 'सेनानीः क्रौञ्चशत्रुश्च कुमारः शक्तिकुन्त-

### भूषणा ।

कौशेयम् । 'क्षीरोदक' इति भाषायां प्रसिद्धम् । **भयसाध्वसेति ।** घोरसाध्वसमूर्च्छिताम् । 'भयं प्रतिभयं घोरे' इति विश्वप्रकाशः । निःश्वासमातरिश्वभिर्निश्वासमारुतैः । 'श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः' इत्यमरः । ऊर्ध्वाण्डकपालः । आकाश इत्यर्थः । 'अप एव ससर्जादौ तासु वीर्यमथासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः । नखैर्हिरण्यगर्भः स तदण्डं बिभिदे समम् ॥ ताभ्यां स शकलाभ्यां च दिवं भूमिं च निर्ममे ॥' इति मनुवचनात् । शक्तिध्वजशिखरशूलोत्सेधम् । शक्तिध्वजः

### लघुदीपिका ।

भयमनुरागः । 'भयं भीत्यनुरागयोः' । ऊर्ध्वाण्डकपालः । आकाश इत्यर्थः । 'अप एव ससर्जादौ तासु वीर्यमथासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ॥ तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः । नखैर्हिरण्यगर्भः स तदण्डं बिभिदे समम् ॥ ताभ्यां स शकलाभ्यां च दिवं भूमिं च निर्ममे ॥' इति मनुवचनात् । शक्तिध्वजशिखरशूलोत्सेधम् । 'सेनानीः क्रौञ्चशत्रुश्च कुमारः शक्तिकेतनः' इत्य-

पाठा०-१ 'ऊर्ध्वाण्डसंपुटो'.

पल्लवशयनम्, कुतस्त्यं चेदमिन्दुगभस्तिसंभारभासुरं हंसतूलदुकूलशयनम्, एष च को नु शीतरश्मिकिरण[1]रज्जुदोलापरिभ्रष्टमूर्च्छित इवाप्सरोगणः स्वैरसुप्तः सुन्दरीजनः, का चेयं देवीवारविन्दहस्ता शारदशशाङ्क[2]मण्डलामलदुकूलोत्तरच्छदमधिशेते शयनतलम् । न तावदेषा देवयोषा, यतो मन्दमन्दमिन्दुकिरणैः संवाह्यमाना कमलिनीव संकु[3]चति । भग्नवृन्तच्युतरसबिन्दुशबलितं पाकपाण्डु चूतफलमिवोद्भिन्नस्वेदरेखमालक्ष्यते गण्डस्थलम् । अभिनवयौवनविदाह[4]दुर्लभोष्मणि कुचतटे वैवर्ण्यमुपैति वर्णकम् । वाससी च प[5]रिभोगानुरूपधूसरिमाणमादर्शयतः, तदेषा मानुष्येव ।

पदचन्द्रिका ।

नः' इत्यजयः । कुतस्त्यं कुत आगतम् । इन्दुगभस्तयश्चन्द्रकिरणाः । 'किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः' इत्यमरः । दोला हिन्दोलिका । शरदि भवं शारदम् । शशाङ्कमण्डलं चन्द्रबिम्बम् । देवयोषा देवस्त्री । संवाह्यमाना मर्द्यमाना । 'संवाहनं मर्दनं स्यात्' इति कोशः । कमलिनीवेन्दुकिरणैः संकुचति । भग्नवृन्तं नष्टप्रसवबन्धनम् । 'वृन्तं प्रसवबन्धनम्' इत्यमरः । शबलितं नानावर्णम् । अभिनवं यद्यौवनं तस्य विशिष्टो यो दाहस्तेन दुर्लभोऽसह्य ऊष्मा यस्मिन् । विवर्णस्य भावो वैवर्ण्यम् । वर्णकमङ्गरागः । 'वर्णकोऽस्त्री विलेपनम्' इति वैजयन्ती । वाससी वस्त्रे । धूसरिमाणं मलिनत्वम् ।

भूषणा ।

कुमारस्तस्य शिखरं तदालयाग्रं तत्र शूलं तद्वदुत्सेध उच्छ्रयो यस्य सः । 'शूलमस्त्री रुगायुधम्' इति विश्वः । 'सौधोऽस्त्री राजसदनम्' इत्यमरः । कुतस्त्यम् । अव्ययात्त्यप् । शयनतलम् । 'अधिशीङ्स्थासां–' (१।४।४६) इति कर्मत्वम् । देवयोषा देवस्त्री । 'स्त्री योषिदबला योषा' इत्यमरः । संवाह्यमाना मर्द्यमाना । 'संवाहनं मर्दनं स्यात्' इत्यमरः । यतो निद्राति न देवयोषा । देवानामस्वप्नत्वात् । 'आदित्या ऋभवोऽस्वप्नाः' इत्यमरः । वृन्तम् । 'वृन्तं प्रसवबन्धनम्' इत्यमरः शबलितं नानावर्णम् । वर्णकमङ्गरागः । 'वर्णकोऽस्त्री विलेपनम्' इत्यमरः । वा-

लघुदीपिका ।

जयः । 'शिखरं मण्डपतलमग्रिमं वृक्षशैलयोः' इत्युत्पलः । उत्सेध उन्नतिः । 'उत्सेधो मध्य उन्नतिः' । शक्तिध्वजो मण्डपतले शूलमग्रे च यस्य । 'अत्राण्यारोपयेदग्रे कुमारं स्थापयेत्तले । नन्द्यावर्त इति ख्यातः प्रासादो देवभूभुजाम् ॥' देवयोषा देवस्त्री । 'स्त्री योषिदबला योषा' । संवाह्यमाना संमर्द्यमाना । 'संवाहनं मर्दनं स्यात्' । 'वृन्तं प्रसवबन्धनम्' । शबलितं नानावर्णकम् । वर्णकोऽङ्गरागः । 'वर्णकोऽस्त्री विलेपनम्' । 'किमथ व्यपदेशे स्यादीषन्मात्रे परात्मनि' इत्य-

पाठ०–१ 'किरणरजतरज्जु'. २ 'मण्डलं पर्यंकतलमेतदमल........च्छदमधिशेते'. ३ 'निद्राति'. ४ 'निर्भरोष्मणि'. ५ 'परीभोग'.

दिष्ट्या चानुच्छिष्टयौवना, यतः सौकुमार्यमागताः सन्तोऽपि संहता इवावयवाः, अस्निग्धतमापि पाण्डुतानुविद्धेव देहच्छविः, स्मरपीडानभिज्ञतया नातिविशदरागो मुखे, विद्रुमद्युतिरधरमणिः, अनत्यापूर्णमारक्तमूलं चम्पककुड्मलदलमिव कठोरं कपोलतलम्, अनङ्गबाणपातमुक्ताशङ्कं च विश्रब्धमधुरं सुप्यते, न चैतद्वक्षःस्थलं निर्दयविमर्दविस्तारितमुखस्तनयुगलम्, अस्ति चानतिक्रान्तशिष्टमर्यादचेतसो ममास्यामासक्तिः । आसक्त्यनुरूपं पुनराश्लिष्टा यदि, स्पष्टमार्तरवेणैव सह निद्रां मोक्ष्यति । अथाहं न शक्ष्यामि चानुपश्लिष्य शयितुम् । अतो यद्भावि तद्भवतु । भाग्यमत्र परीक्षिष्ये' इति स्पृष्टास्पृष्टमेव किमप्याविद्धरागसाध्वसं लक्षसुप्तः स्थितोऽस्मि । सापि किमप्युत्कम्पिना रोमोद्भेदवता वामपार्श्वेन सुखायमानेन मन्दमन्दजृम्भिकारम्भमन्थराङ्गी,

पदचन्द्रिका ।

संहता इव मिलिता इव । पाण्डुतायामनुविद्धेव स्यूतेव । विद्रुमं प्रवालं तद्द्युतिस्तत्कान्तिः । अनत्यापूर्णमीषत्पूर्णम् । चम्पकस्य कुड्मलदलं मुकुलपत्रम् । विश्रब्धं विश्वासः । मधुरं सुन्दरम् । अनतिक्रान्ता दूरीकृता शिष्टमर्यादा येनैवंविधं चेतो यस्येति तस्य । अस्यां दृष्टनायिकायाम् । आसक्तिरभिलाषः । **अथेति** । न शक्ष्यामि न समर्थोऽस्मि । अनुपश्लिष्यानालिङ्ग्य । शयितुं निद्रां कर्तुम् । भाग्यमदृष्टम् । परीक्षिष्ये परीक्षयामि । पश्यामीत्यर्थः । स्पृष्टास्पृष्टम् । अल्पस्पर्शमित्यर्थः । राग आसक्तिः । साध्वसं भयम् । उत्कम्पिनात्युत्कम्पनशीलेन । जृम्भिका

भूषणा ।

ससी वस्त्रयुग्मम् । परीभोगः । 'उपसर्गस्य घञि–' (६।३।१२२) इति दीर्घः । अनङ्गबाणपातमुक्ताशङ्कतया पुरुषसङ्गानभिज्ञया । विरहिणीत्वाभावादिति भावः । अनतिक्रान्तशिष्टमर्यादचेतसो धर्मात्मनोऽस्यामासक्तिरत इयं मदुपभोगयोग्येति व्यङ्ग्यम् । तथा च कालिदासः—'असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः । सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥' इति । अथाहं वातःपरम् । अहं त्वित्यर्थः । उत्तानसुप्तेयम् । आविद्धरागसाध्वसम् आविद्धे रागसाध्वसे यस्यां क्रियायाम् । अनुपमस्त्रीलाभाद्रागः । यथेष्टं स्पष्टं चैतदार्तरवं भविष्यतीति साध्वसम् । किमपि । 'किमप्यव्यपदेशे स्यादीषन्मात्रे परात्मनि' इत्यजयः । लक्षसुप्तः तत्रत्यं व्यापारं लक्षयन्सुप्त इवेत्यर्थः । रोमोद्भेदवता मदङ्गसङ्गादिति भावः । विजृम्भिका जृम्भणम् । 'जृम्भिका गात्रभङ्गः

लघुदीपिका ।

जयः । 'जृम्भिका गात्रभङ्गः स्यात्' इत्यजयः । 'मन्थरौ नम्रसुन्दरौ' । लज्जा-

त्वङ्गदग्रपक्ष्मणोश्चक्षुषोरलसतान्ततारकेणानतिपक्वनिद्राकषायितापाङ्गपरभागेन युगलेनेषदुन्मिषन्ती, त्रासविस्मयहर्षरागशङ्काविलासविभ्रमव्यवहितानि व्रीडान्तराणि कानि कान्यपि कामेनाद्भुतानुभावेनावस्थान्तराणि कार्यमाणा, परिजनप्रबोधनोद्यतां गिरं कामावेगपरवशं हृदयमङ्गानि च साध्वसायासे[२]संबध्यमानस्वेदपुलकानि कथंकथमपि निगृह्य, सस्पृहेण मधुरकूणितत्रिभागेन मन्दमन्दप्रचारितेन चक्षुषा मदङ्गानि निर्वर्ण्य, दूरोत्सर्पितपूर्वकायापि

पदचन्द्रिका ।

गात्रभङ्गः । 'जृम्भिका गात्रभङ्गः स्यात्' इत्यजयः । मन्थराङ्गी सुन्दराङ्गी । 'मन्थरौ नम्रसुन्दरौ' इति वैजयन्ती । लङ्गच्चलत् । 'लगि कम्पने' इति धातुः । लङ्गदग्रपक्ष्माणि ययोरिति लङ्गदग्रपक्ष्मणोः । अनतिपक्वं किंचिदपक्वम् । किंचिदपरिपूर्णम् । निद्रया कषायः ( यितः ) । परभागो गुणोत्कर्षः । कानि कानीति वक्तुमशक्यानि । गिरं वाचम् । कामावेगपरवशं मदनवेगपराधीनम् । साध्वसं भयम् । आयासः खेदः । अथवा साध्वसमेवायासः । संबध्यमानाः स्वेदपुलका येषु तानि । कूणितः संकुचितः । त्रिभागः । नेत्रप्रान्त इत्यर्थः । निर्वर्ण्य दृष्ट्वेत्यर्थः । उत्सर्पितमूर्ध्वीकृतं पूर्वकायं यस्याः । शयन आस्तरणे । दुःखायत्तं

भूषणा ।

स्यात्' इत्यजयः । 'जृभि गात्रविनामे' । मन्थराङ्गी सालसाङ्गी । लङ्गच्चलत् । 'लगि कम्पने' । कषायः पीडाविशेषः । अपूर्वपुरुषदर्शनात्त्रासः । आगमप्रकारानवबोधाद्विस्मयः । तदङ्गसङ्गसुखानुभवाद्धर्षः । तत एव रागः । ततो यद्ययं मां बलात्कारेण करिष्यति स्वाङ्के ततः किं भवेदिति शङ्का । ततो भूषणादीनामस्थाने विन्यासः । अस्वस्तमपि वस्त्रं भूषणं वा स्रस्तमिति पुनस्तद्देशे स्थाप्यते । यथास्थितमपि तद्देशाच्चाल्यते शङ्कापराधीनचित्तेन जनेन । 'अस्थाने भूषणादीनां विन्यासो विभ्रमो मतः' इति रसरत्नहारः । व्रीडा अन्तरा मध्ये येषां तानि । साध्वसेनापरिचितपुरुषदर्शनेनायासेन तदङ्गसङ्गानङ्गपीडया संबध्यमानस्वेदपुलकानि । सात्त्विकभावाविर्भावादिति भावः । **मधुरकूणितेति** । मधुरं यथा तथा कूणिताः संकोचितास्त्रयो भागा अपाङ्गो मध्यो नासिकासमीपगश्च यस्येत्यर्थः । 'कूण संकोचे' चुरादिरदन्तः । पूर्वं कायस्य । 'पूर्वापराधरोत्तरम्–' ( २।२।१ )

लघुदीपिका ।

लत् । 'लगि कम्पने' इति धातुः । विभ्रमो व्यापारः । व्रीडा मध्ये येषाम् । 'आवेगः स्याद्रणरणके' इति वैजयन्ती । साध्वसायासः साध्वसमेवायासः ।

पाठा०–१ 'विन्यास'. २ 'संवर्ध्यमान'.

तस्मिन्नेव शयने सचकितमशयिष्ट। अजनिष्ट मे रागाविष्टचेतसोऽपि किमपि निद्रा। पुनरननुकूलस्पर्शदुःखायत्तगात्रः प्राबुध्ये। प्रबुद्धस्य च सैव मे महाटवी, तदेव तरुतलम्, स एव पत्रास्तरोऽभूत्। विभावरी च [1]व्यभासीत्। अभूच्च मे मनसि किमयं स्वप्नः, किं विप्रलम्भो वा, किमियमासुरी दैवी वा कापि माया। यद्भावि तद्भवतु। नाहमिदं तत्त्वतो नाववुध्य मोक्ष्यामि भूमिशय्याम्। यावदायुरत्रत्यायै देवतायै [2]प्रतिशयितो भवामि' इति निश्चितमतिरतिष्ठम्।

अथाविर्भूय कापि रविकराभितप्तकुवलयदामताान्ताङ्गयष्टिः, [3]क्लिष्टनिवसनोत्तरीया, निरलक्तकरूक्षपाटलेन निःश्वासोष्मजर्जरितत्विषा दन्तच्छदेन वमन्तीव कपिलधूमधूम्रं विरहानलम्, अनवरतसलिलधाराविसर्जनाद्रुधिरावशेषमिव लोहिततरं द्वितयमक्ष्णोरुद्वहन्ती, कुलचारित्रबन्धनपाशविभ्रमेणैकवेणीभूतेन केश[4]पाशेन नीलां[5]शुकचीरचूडिकापरिवृता पतिव्रतापताकेव संचरन्ती,

---

पदचन्द्रिका।

दुःखायमानं गात्रं यस्येति सः। विभावरी रात्रिः। 'विभावरीतमस्विन्यौ रजनी यामिनी तमी' इत्यमरः। व्यभासीत्। विभाताभूदित्यर्थः। असुरस्येयमासुरी। देवस्येयं दैवी। तत्त्वतः सत्यत्वेन। यावदायुर्यावदायुष्यम्। प्रतिशयितः कृतशय्यः॥

**अथेति।** आविर्भूय प्रकटीभूय। रविकरैः सूर्यकिरणैः अभितप्तं यत्कुवलयदाम तद्वत्तान्ता क्लान्ताङ्गयष्टिः शरीरयष्टिर्यस्याः। क्लिष्टं जीर्णं निवसनोत्तरीयं यस्याः सा। दन्तच्छदेनौष्ठेन। कपिलः पिङ्गलः। 'कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ' इत्यमरः। धूम्रं किंचिदारक्तश्यामम्। 'धूम्रधूमलौ कृष्णलोहिते' इत्यमरः। लोहिततरमत्यारक्तम्। अनवरतं निरन्तरम्। सलिलधारा जलपरम्परा। एकवेणीभूतेनाद्वितीयेन। चूडिका [ कूर्पासः ] पताका वैजयन्ती। क्षामक्षामाप्य-

भूषणा।

इत्येकदेशिसमासः। व्यभासीद्भाविताभूत्। यावदायुः 'यावदवधारणे' (२।१।८) इत्यव्ययीभावः। कलापेनोपलक्षिता। चीरचूडिका सुवासिनीभिर्हस्तेषु ध्रियमाणः

लघुदीपिका।

व्यभासीद्विभाताभूत्। यावत्। 'यावदवधारणे'। नीलांशुकचूलिका। परिदाय-

---

पाठा०—१ 'व्ययासीत्'. २ 'प्रतिशयिष्यामि'. ३ 'क्लिन्न'. ४ 'कलापेन'. ५ 'अंशुकरचितचीर'.

क्षामक्षामापि देवतानुभावादनतिक्षीणवर्णावकाशा सीमन्तिनी, प्रणिपतन्तं मां प्रहर्षोत्कम्पितेन भुजलताद्वयेनोत्थाप्य पुत्रवत्परिष्वज्य शिरस्युपाघ्राय वात्सल्यमिव स्तनयुगलेन स्तन्यच्छलात्प्रक्षरन्ती, शिशिरेणाश्रुणा निरुद्धकण्ठी स्नेहगद्गदं व्याहार्षीत्—'वत्स, यदि वः कथितवती मगधराजमहिषी वसुमती मम हस्ते बालमर्थपालं निधाय कथां च कांचिदात्मभर्तृपुत्रसखीजनानुबद्धां राजराजप्रवर्तितां कृत्वान्तर्धानमगादात्मजा मणिभद्रस्येति', साहमस्मि वो जननी । पितुर्वो धर्मपालसूनोः सुमन्त्रानुजस्य कामपालस्य पादमूलान्निष्कारणकोपकलुषिताशया प्रोष्यानुशयविधुरा स्वप्ने केनापि रक्षोरूपेणोपेत्य शप्तास्मि—'चण्डिकायां त्वयि वर्षमात्रं वसामि प्रवासदुःखाय' इति ब्रूवतैवाहमाविष्टा प्राबुध्ये । गतं च तद्वर्षं वर्षसहस्रदीर्घम् । अतीतायां तु यामिन्यां देवदेवस्य त्र्यम्बकस्य श्रावस्त्यामुत्सवसमाजमनुभूय बन्धुजनं च स्थानस्थानेभ्यः संनिपतितमभिसमीक्ष्य मुक्तशापा पत्युः पार्श्वमभि-

---

पदचन्द्रिका ।

तिक्षीणापि । देवतानुभावाद्देवतासामर्थ्यात् । अनतिक्षीणवर्णा नातिक्षीणो वर्णो यस्याः सेति तथा । प्रणिपतन्तं नमस्कारं कुर्वन्तम् । परिष्वज्यालिङ्ग्य । वत्सलस्य भावो वात्सल्यम् । स्तने भवं स्तन्यं दुग्धं तस्य छलात् । प्रक्षरन्ती स्रवन्ती । व्याहार्षीत् । अवोचदित्यर्थः । मगधराजस्य महिषी । 'कृताभिषेका महिषी' इत्यमरः । आत्मजा कन्या । वो युष्माकम् । जननी माता । निष्कारणकोपो निरर्थकक्रोधः । कलुषिताशया मलिनचित्ता । प्रोष्य प्रवासं कृत्वा । उपेत्य प्राप्य । शप्तास्मि दत्तशापास्मीत्यर्थः । आविष्टावेशं प्राप्ता । दीर्घमतिमहत् । यामिन्यां रात्रौ । श्रावस्त्यामेतन्नाम्न्यां नगर्याम् । संनिपतितमागतम् । अभिसमीक्ष्य । दृष्ट्वेत्यर्थः ।

भूषणा ।

खड्गशृङ्गादिनिर्मितो वलयाकृतिर्भूषणविशेषः । मगधराजो राजहंसः । राजराजप्रवर्तितां कुबेरप्रोक्ताम् । 'राजराजो धनाधिपः' इत्यमरः । शौनकः शूद्रक इत्यादिकाम् । मणिभद्रस्यात्मजा तारावली । वो जननी भवत्पित्रपेक्षया कनिष्ठस्य पितृव्यस्य पत्नीति । निष्कारणकोपाद्गोत्रस्खलनकोपात् । चण्डिकायामत्यन्तकोपवत्याम् । मुक्तशापा नष्टशापा सती । इति प्रस्थितायाम् । इति

---

पाठा०—१ 'सुमित्रा'. २ 'समापतित'.

सरामीति प्रस्थितायामेव मयि त्वमत्राभ्युपेत्य 'प्रतिपन्नोऽस्मि[1] शरणमिहत्यां देवताम्' इति प्रसुप्तोऽसि । एवं शापदुःखाविष्टया तु मया तदा न तत्त्वतः परिच्छिन्नो भवान्, अपि तु शरणागत-[2]मविरलप्रमादायामस्यां महाटव्यामयुक्तं परित्यज्य गन्तुमिति मया त्वमपि स्वपन्नेवासि नीतः । प्रत्यासन्ने च तस्मिन्देवगृहे पुनरचिन्तयम्—'कथमिह तरुणेनानेन सह समाजं गमिष्यामि' इति । अथ राज्ञः श्रावस्तीश्वरस्य यथार्थनाम्नो धर्मवर्धनस्य कन्यां नवमालिकां घर्मकालसुभगे कन्यापुरविमानहर्म्यतले विशालकोमलं शय्यातलमधिशयानां यदृच्छयोपलभ्य 'दिष्ट्येयं सुप्ता, परिजनश्च गा[3]ढनिद्रः । शेतामयमत्र मुहूर्तमात्रं ब्राह्मणकुमारो यावत्कृतकृत्या निवर्तेय' इति त्वां तत्र शाययित्वा तमुद्देशमगमम् । दृष्ट्वा चोत्सवश्रियम्, निर्विश्य च स्वजनदर्शनसुखमभिवाद्य च त्रिभुवनेश्वरमात्मालीकप्रत्याकलनोपारूढसाध्वसं च नमस्कृत्य भक्तिप्रणतहृ[4]दयां भगवतीमम्बिकाम्, तया गिरिदुहित्रा देव्या सस्मितम् 'अयि भद्रे, मा भैषीः । भवेदानीं भर्तृपार्श्वगामिनी । गतस्ते शापः' इत्यनुगृहीता सद्य एव प्रत्यापन्नमहिमा

---

पदचन्द्रिका ।

अभिसरामि गच्छामि । तत्त्वतः सत्यतः । अविरलप्रमादायां बहुतरप्रमादायाम् । प्रत्यासन्ने समीपवर्तिनि । अचिन्तयं चिन्तितवानस्मि । समाजं सधर्मिणां समूहम् । **अथेति** । श्रावस्तीश्वरस्य धर्मवर्धनस्य तन्नाम्नः । यदृच्छया दैवयोगेन । उपलभ्य प्राप्य । दिष्ट्याऽदृष्टेन । परिजनः सेवकजनः । मुहूर्तमात्रं घटिकाद्वयमात्रम् । शाययित्वा निद्रां कारयित्वा उद्देशं प्रदेशम् । आत्मनः स्वस्यालीकमात्मापराधम् । 'अलीकमपराधः स्यादसत्याप्रिययोरपि' इति सज्जनः । प्रत्याकलनं साक्षात्करणम् । उपारूढं जातं साध्वसं ययेति क्रियाविशेषणम् । गिरिदुहित्रा पर्वतपुत्र्या । प्रत्याप-

भूषणा ।

बुद्ध्या प्रस्थितायामित्यर्थः । निर्विश्यानुभूय । आत्मालीकेत्यादि क्रियाविशेषणम् । 'अलीकं त्वप्रियेऽनृते' इत्यमरः । लब्धलक्षो लब्धावसरः । निगमः ।

लघुदीपिका ।

प्रदाय (?) । 'राजराजो धनाधिपः' । आत्मालीकमात्मापराधम् । 'अलीकमपराधः

---

पाठा०—१ 'प्रपन्नोऽस्मि'. २ 'मविरत'. ३ 'गाढसुप्तः'. ४ 'हृदया'.

प्रतिनिवृत्य दृष्ट्वैव त्वां यथावदभ्यजानाम्—'कथं मत्सुत एवायं वत्सस्यार्थपालस्य प्राणभूतः सखा प्रमतिरिति पापया मयास्मिन्नज्ञानादौदासीन्यमाचरितम् । अपि चायमस्यामासक्तभावः । कन्या चैनं कामयते युवानम् । उभौ चेमौ लक्षसुप्तौ त्रपया साध्वसेन वान्योन्यमात्मानं न विवृण्वाते । गन्तव्यं च मया । कामाघ्रातयाप्यनया कन्यया रहस्यरक्षणाय न समाभाषितः सखीजनः परिजनो वा । नयामि तावत्कुमारम् । पुनरपीममर्थं लब्धलक्षो[1] यथोपपन्नैरुपायैः साधयिष्यति' इति मत्प्रभावप्रस्थापितं भवन्तमेतदेव पत्रशयनं प्रत्यनैषम् । एवमिदं वृत्तम् । 'एषा चाहं पितुस्ते पादमूलं प्रत्युपसर्पेयम्' इति प्राञ्जलिं मां भूयोभूयः परिष्वज्य शिरस्युपाघ्राय कपोलयोश्चुम्बित्वा स्नेहविह्वला गतासीत् । अहं च पञ्चबाणवश्यः श्रावस्तीमभ्यवर्तिषि ।

मार्गे च महति निगमे नैगमानां ताम्रचूडयुद्धकोलाहलो महानासीत् । अहं च तत्र संनिहितः किंचिद्स्मेषि । संनिधिनिषण्णस्तु मे वृद्धविटः कोऽपि ब्राह्मणः शनकैः स्मितहेतुमपृच्छत् । अब्रवं च—'कथमिव नारिकेलजातेः प्राच्यवाटकुक्कुटस्य प्रतीच्य-

पदचन्द्रिका ।

प्रमहिमा प्राप्तमहिमा । प्राणभूतः प्राणतुल्यः । उदासीनस्य भाव औदासीन्यम् । **अपि चायमिति** । त्रपया लज्जया । साध्वसेन भयेन । विवृण्वाते । कामाघ्रातया । मदनस्पृष्टयेत्यर्थः । रहस्यरक्षणाय गुह्यरक्षणाय । लब्धलक्षो लब्धावसरः । **एवमिति** । भूयोभूयो वारंवारम् । पञ्चबाणो मदनः ॥

निगमो वणिग्ग्रामः । 'निगमः सुरे । वेदे वणिक्पथे मार्गे' इति महीपः । नैगमानां वणिजाम् । ताम्रचूडः कुक्कुटः । 'कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः'

भूषणा ।

'निगमो विषये वेदे पुरे पथि वणिक्पथे' । नैगमानां वणिजाम् । 'नैगमो वाणिजो वणिक्' इत्यमरः । ताम्रचूडः कुक्कुटः । 'कृकवाकुस्ताम्रचूडः कुक्कुटः' इत्यमरः । नारिकेलजातिर्बलाकाजातिश्चेति द्वौ कुक्कुटविशेषौ । 'दीर्घग्रीवः सितवपुर्महा-

लघुदीपिका ।

स्यादसत्याप्रिययोरपि' इति सज्जनः । लब्धलक्षो लब्धावसरः । निगमो वणिग्ग्रामः । 'निगमो विषये वेदे पुरे पथि वणिक्पथे' । नैगमानां वणिजाम् । ताम्रचूडः कुक्कुटः । 'कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः' । नारिकेलजातिर्बलाका-

पाठा०–१ 'लब्धक्षणो', 'लब्धलक्षणो'.

वाटः पुरुषैरसमीक्ष्य बलाकाजातिस्ताम्रचूडो बलप्रमाणाधिकस्यैवं प्रतिविसृष्टः' इति । सोऽपि तज्ज्ञः 'किमज्ञैरेभिर्व्युत्पादितैः । तूष्णीमास्स्व' इत्युपहस्तिकायास्ताम्बूलं कर्पूरसहितमुद्धृत्य मह्यं दत्त्वा चित्राः कथाः कथयन्क्षणमतिष्ठत् । प्रायुध्यत चातिसंरब्धमनुप्रहारप्रवृत्तस्वपक्षमुक्तकण्ठीरवरवं विहङ्गमद्वयम् । जितश्चासौ प्रतीच्यवाटकुक्कुटः । सोऽपि विटः[1] स्ववाटकुक्कुटविजयहृष्टो मयि वयोविरुद्धं सख्यमुपेत्य तदहरेव स्वगृहे स्नानभोजनादि कारयित्वोत्तरेद्युः श्रावस्तीं प्रति यान्तं मामनुगम्य 'स्मर्तव्योऽस्मि सत्यर्थे' इति मित्रवद्विसृज्य प्रत्ययासीत् ।

अहं च गत्वा श्रावस्तीमध्वश्रान्तो बाह्योद्याने लतामण्डले[2] शयितोऽस्मि । हंस रवप्रबोधितश्चोत्थाय कामपि क्वणितनूपुरमुखराभ्यां चरणाभ्यां मदन्तिकमुपसरन्तीं युवतीमद्राक्षम् । सा त्वागत्य स्वहस्तवर्तिनि चित्रपटे लिखितं मत्सदृशं कमपि पुंरूपं[3] मां च पर्यायेण

---

पदचन्द्रिका ।

इत्यमरः । अस्मेषि हास्यमकरवम् । संनिधिनिषण्णः समीपस्थितः । नारिकेलजातिरेकः कुक्कुटः । द्वितीयः कुक्कुटो बलाकाजातीयः । 'दीर्घग्रीवः सितवपुर्महाप्राणः स्रवन्मदः । बलाकाजातिरित्युक्तस्तदन्यो नालिकेरजः ॥' इति वैजयन्ती । उपहस्तिका ताम्बूलस्थापनाय चर्मपेशी । 'पूगाद्यावपनी चर्म (वस्त्र) भस्त्रिका चोपहस्तिका' इति वैजयन्ती । 'उपदस्तिका' इति वा पाठः । स एवार्थः । भाषायां 'चंची' इति प्रसिद्धा । कण्ठीरवरवः सिंहनादः । वाटः श्रेणिः । 'वाटः पुमान्पथि श्रेणौ' इति वररुचिः । [स्ववाटकुक्कुटविजयेन स्वमार्गकुक्कुटविजयेन] । हृष्टो हर्षं प्राप्तः । वयोविरुद्धं 'समवयसोर्मैत्री' इति वचनात्तद्विरुद्धम् । तदहस्तद्दिवसे ॥

अध्वश्रान्तो मार्गश्रान्तः । बाह्योद्याने बाह्योपवने । लतामण्डले वल्लीमण्डले । नूपुरं पादभूषणम् । मुखरं वाचालम् । मदन्तिकं मत्समीपम् । उपसरन्तीं

भूषणा ।

प्राणः स्रवन्मदः । बलाकाजातिरित्युक्तस्तदन्यो नालिकेरजः ॥' इति वैजयन्ती । वाटः श्रेणी । 'वाटः पुमान्पथि श्रेणौ' । उपहस्तिका । 'पूगाद्यावपनी वस्त्रभस्त्रिका चोपहस्तिका' इति वैजयन्ती । भाषायां 'चंची' इति प्रसिद्धा ।

लघुदीपिका ।

जातिश्चेति द्वौ कुक्कुटविशेषौ । 'दीर्घग्रीवः सितवपुर्महाप्राणः स्रवन्मदः । बलाकाजातिरित्युक्तस्तदन्यो नालिकेरजः ॥' इति वैजयन्ती । वाटः श्रेणी । 'वाटः पुमान्पथि श्रेणौ' । उपहस्तिका । 'पूगाद्यावपनी वस्त्रभस्त्रिका चोपहस्तिका' इति

---

पाठा०—१ 'विटब्राह्मणः स्वकुक्कुट'. २ 'मण्डपे'. ३ 'पुरुषम्'.

निर्वर्णयन्ती सविस्मयं सवितर्कं सहर्षं च क्षणमवातिष्ठत् । मयापि तत्र चित्रपटे मत्सादृश्यं पश्यता तद्दृष्टिचेष्टितमनाकस्मिकं मन्यमानेन 'ननु सर्वसाधारणोऽयं रमणीयः पुण्यारामभूमिभागः । किमिति चिरस्थितिक्लेशोऽनुभूयते । ननूपवेष्टव्यम्' इत्यभिहिता सा सस्मितम् 'अनुगृहीतास्मि' इति न्यषीदत् । संकथा च देशवार्तानुविद्धा काचनावयोरभूत् । कथासंश्रिता च सा 'देशातिथिरसि । दृश्यन्ते च तेऽध्वश्रान्तानीव गात्राणि । यदि न दोषो मद्गृहेऽद्य विश्रमितुमनुग्रहः क्रियताम्' इत्यशंसत् । अहं च 'अयि मुग्धे, नैष दोषः, गुण एव' इति तदनुमार्गगामी तद्गृहगतो राजार्हेण स्नानभोजनादिनोपचरितः, सुखं निषण्णो रहसि पर्यपृच्छेय—'महाभाग, दिगन्तराणि भ्रमता कच्चिदस्ति किंचिदद्भुतं भवतोपलब्धम्' इति । ममाभवन्मनसि 'महदिदमाशास्पदम् । एषा खलु निखिलपरिजनसंबाधसंलक्षितायाः सखी राजदारिकायाः । चित्रपटे चास्मिन्नपि तदुपरि विरचितसितवितानं हर्म्यतलम्, तद्गतं च प्रकामविस्तीर्णं शरदभ्रपटलपाण्डुरं शयनम्, तदधिशायिनी च निद्रालीढलोचना ममैवेयं प्रतिकृतिः । अतो नूनमनङ्गेन सापि राजकन्या तावतीं भूमिमारोपिता । यस्यामसह्यमदनज्वरव्यथितोन्मादिता सती सखीनिर्बन्धपृष्टविक्रियानिमित्तचातुर्येणैतद्रूपनिर्माणेनैव समर्थमुत्तरं दत्तवती । रूपसंवादाच्च संशयादनया पृष्टो भिन्द्यामस्याः संशयं यथानुभवकथनेन' इति

पदचन्द्रिका ।

यान्तीम् । पुंरूपं पुरुषरूपम् । सविस्मयं साश्चर्यम् । सवितर्कं तर्कसहितम् । तद्दृष्टिचेष्टितं तस्याः पूर्वदृष्टाया दृष्टिचेष्टितम् । स्थितिक्लेशः स्थैर्यकष्टम् । उपवेष्टव्यं स्थातव्यम् । अभिहितोक्ता । न्यषीदत् । संकथा दैवतगोष्ठी । देशवार्ता लौकिकगोष्ठी । काचन वचनातीता । सा चाहं चावां तयोः । अध्वश्रान्तानीव मार्गश्रान्तानीव । मद्गृहे मम सदने । विश्रमितुं विश्रान्तिं प्राप्तुम् । अनुग्रहः कृपा । राजार्हेण राजयोग्येन । उपचरित उपचारं प्रापितः । रहस्येकान्ते । कच्चिदिति प्रश्ने । उपलब्धं प्राप्तम् । आशास्पदमाशास्थानम् । संबाधः संघः । राजदारिकाया राजकन्यकायाः । सितवितानं सितोल्लोचः । शरदभ्रं शरत्कालमेघस्तस्य पटलं तद्वत्पाण्डुरम् । निद्रालीढलोचना निद्राधिष्ठितनयना । आलीढे व्याप्ते । प्रतिकृतिः प्रतिस्वरूपम् । तावतीं भूमिं मदनपरवशतारूपां मर्यादाम् । निर्बन्धपृष्टविक्रिया बलात्कारेण पृष्टविकारा । अनिमित्तं

जातनिश्चयोऽब्रवम्—'भद्रे, देहि चित्रपटम्' इति । सा त्वर्पितवती मद्धस्ते । पुनस्तमादाय तामपि व्याजसुप्तामुल्लसन्मदनरागविह्वलां वल्लभामेकत्रैवाभिलिख्य 'काचिदेवंभूता युवतिरीदृशस्य पुंसः पार्श्वशायिन्यरण्यानीप्रसुप्तेन मयोपलब्धा । किलैष स्वप्नः' इत्यालपं च । हृष्टया तु तया विस्तरतः पृष्टः सर्वमेव वृत्तान्तमकथयम् । असौ च सख्या मन्निमित्तान्यवस्थान्तराण्यवर्णयत् । तदाकर्ण्य च यदि तव सख्या मदनुग्रहोन्मुखं मानसम्, गमय कानिचिदहानि । कमपि कन्यापुरे निराशङ्कनिवासकरणमुपायमारचय्यागमिष्यामि' इति कथंचिदेनामभ्युपगमय्य गत्वा तदेव खर्वटं वृद्धविटेन समगंसि । सोऽपि ससंभ्रमं विश्रमय्य तथैव स्नानभोजनादि कारयित्वा रहस्यपृच्छत्—'आर्य, कस्य हेतोरचिरेणैव प्रत्यागतोऽसि' । प्रत्यवादिषमेनम्—'स्थान एवाहमार्येणास्मि पृष्टः । श्रूयताम् । अस्ति हि श्रावस्ती नाम नगरी । तस्याः पतिरपर इव धर्मपुत्रो धर्मवर्धनो नाम राजा । तस्य दुहिता प्रत्यादेश इव श्रियः, प्राणा इव कुसुमधन्वनः, सौकुमार्यविडम्बित-

पदचन्द्रिका ।

कारणरहितं यच्चातुर्यं तस्मात् । तं चित्रपटम् । व्याजेन मिषेण । एकत्रैकस्मिन्प्रदेशे । युवतिः स्त्री । 'यूनस्तिः' (४।१।७७) इति साधुः । अरण्यानी 'महारण्यमरण्यानी' इत्यमरः । उपलब्धा प्राप्ता । मन्निमित्तानि मदर्थानि । मदनुग्रहोन्मुखं मयि योऽनुग्रहस्तत्रोन्मुखमुत्कण्ठितम् । खर्वटो ग्रामः । रहस्येकान्ते । **आर्येति** । अचिरेणैव तत्कालमेव । एनं वृद्धविटम् । स्थाने । युक्तमित्यर्थः । **अस्तीति** । प्रत्यादेशो निरसनम् । 'प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः' इत्यमरः । प्राणा असवः । नित्यं बहुवचनान्तोऽयं शब्दः । सुकुमारस्य भावः सौकुमार्यम् । विड-

भूषणा ।

कण्ठीरवरवः सिंहनादः । जितश्वासौ । जित इति कर्मणि प्रत्ययः । अरण्यानी । 'महारण्यमरण्यानी' इत्यमरः । संकथा मिथोभाषणम् । **अस्ति तदिति** । तत्पूर्वदृष्टम् । रूपसंवादाद्रूपदर्शनात् । खर्वटो ग्रामः स्थाने युक्तम् । प्रत्यादेशो निरसनम् । 'प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः' इत्यमरः । प्राणाः । 'पुंसि

लघुदीपिका ।

वैजयन्ती । कण्ठीरवरवः सिंहनादः । अरण्यानी । 'महारण्यमरण्यानी' । खर्वटो ग्रामः । प्रत्यादेशो निरसनम् । 'प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः' ।

पाठा०–१ 'तत्रैव'.

नवमालिका, नवमालिका नाम कन्यका । सा मया समापत्तिदृष्टा कामनाराचपङ्क्तिमिव कटाक्षमालां मम मर्मणि व्यकिरत् । तच्छल्योद्धरणक्षमश्च धन्वन्तरिसदृशस्त्वदृते नेतरोऽस्ति वैद्य इति प्रत्यागतोऽस्मि । तत्प्रसीद कंचिदुपायमाचरितुम् । अयमहं परिवर्तितस्त्रीवेषस्ते कन्या नाम भवेयम् । अनुगतश्च मया त्वमुपगम्य धर्मासनगतं धर्मवर्धनं वक्ष्यसि—'ममेयमेकैव दुहिता । जातमात्रायां त्वस्यां जनन्यस्याः संस्थिता । माता च पिता च भूत्वाहमेव व्यवर्धयम् । एतदर्थमेव विद्यामयं शुल्कमर्जितुं गतोऽभूदवन्तिनगरीमुज्जयिनीमस्मद्वैवाह्यकुलजः कोऽपि विप्रदारकः । तस्मै चेयमनुमता दातुमितरस्मै न योग्या । तरुणीभूता चेयम् । स च विलम्बितः । तेन तमानीय पाणिमस्या ग्राहयित्वा तस्मिन्न्यस्तभारः संन्यसिष्ये । दुरभिरक्षतया तु दुहितॄणां मुक्तशैशवानाम्, विशेषतश्चामातृकाणाम्, इह देवं मातृपितृ-

---

पदचन्द्रिका ।

म्बिता कदर्थिता नवमालिका ययेति तथा । समापत्तिर्यदृच्छासंगतिः । नाराचा बाणाः । 'प्रक्ष्वेडनाखु नाराचाः' इत्यमरः । कटाक्षमालां कटाक्षश्रेणीम् । मर्मणि जीवस्थाने । 'जीवस्थानं भवेन्मर्म' इति हलायुधः । तच्छल्योद्धरणं तच्छल्यदूरीकरणं तत्राक्षमोऽसमर्थः । धन्वन्तरिर्देववैद्यः । धर्मवर्धनं श्रावस्तीनगरीनायकं राजानम् । संस्थिता मरणं प्राप्ता । व्यवर्धयं वर्धितवान् । शुल्कं जामात्रा देयं वस्तु । 'शुल्कमस्त्री जामात्रा यच्च दीयते' इति । विवाहाय योग्यं वैवाह्यं यत्कुलं वंशस्तत्र जातः । विप्रदारको ब्राह्मणपुत्रः । इतरस्मै ब्राह्मणपुत्रादन्यस्मै दातुं न योग्येति योजना । संन्यसिष्ये संन्यासमाश्रये । दुरभिरक्षतया दुःखेन रक्षणयोग्यतया । मुक्तशैशवानाम् । प्राप्ततारुण्यानामित्यर्थः । अमातृकाणां मातृ-

भूषणा ।

भूरुयसवः प्राणाः' इत्यमरः । समापत्तिर्दृष्टा । समापत्तिर्यदृच्छासंगतिः । मर्मणि । 'जीवस्थानं भवेन्मर्म' इति हलायुधः । धन्वन्तरिर्देववैद्यः । संस्थिता मृता । 'परेतप्रेतसंस्थिताः' इत्यमरः । विद्यामयं विद्यारूपम् । शुल्कं जामात्रा देयं वस्तु ।

लघुदीपिका ।

प्राणाः । नित्यबहुवचनान्तोऽयं शब्दः । 'पुंसि भूम्न्यसवः प्राणाः' मर्मणि । 'जीवस्थानं भवेन्मर्म' इति हलायुधः । धन्वन्तरिर्देववैद्यः । शुल्कं जामात्रा देयं वस्तु । 'शुल्कमस्त्री जामात्रा यच्च दीयते' । आपन्नशरणमापन्नानां रक्षकम् ।

स्थानीयं प्रजानामापन्नशरणमागतोऽस्मि । यदि वृद्धं ब्राह्मणमधीतिनमगतिमतिथिं च मामनुग्राह्यपक्षे गणयत्यादिराजचरितधुर्यो देवः, सैषा भवद्भुजतरुच्छायामखण्डितचारित्रा तावदध्यास्तां यावदस्याः पाणिग्राहकमानयेयम्' इति । स एवमुक्तो नियतमभिमनायमानः स्वदुहितृसंनिधौ मां वासयिष्यति । गतस्तु भवानागामिनि मासि फाल्गुने फल्गुनीषूत्तरासु राजान्तःपुरजनस्य तीर्थयात्रोत्सवो[1] भविष्यति । तीर्थस्थानात्प्राच्यां दिशि गोरुतान्तरमतिक्रम्य, वानीरवलयमध्यवर्तिनि कार्तिकेयगृहे करतलगतेन शुक्लाम्बर[2]युगलेन स्थास्यसि । स खल्वहमनभिशङ्क एवैतावन्तं कालं सहाभिविहृत्य राजकन्यया भूयस्तस्मिन्नुत्सवे गङ्गाम्भसि विहरन्विहारव्याकुले कन्यकासमाजे मग्नोपसृतस्त्वदभ्याश एवोन्मङ्क्ष्यामि । पुनस्त्वदुपहृते वाससी परिधायापनीतदारिकावेषो जामाता नाम भूत्वा त्वामेवानुगच्छेयम् । नृपात्मजा तु मामितस्ततोऽन्विष्यानासादयन्ती 'तया विना न भोक्ष्ये' इति रुदन्त्येवावरोधने स्थास्यति । तन्मूले च महति कोलाहले, क्रन्दत्सु परिजनेषु, रुदत्सु सखीजनेषु, शोचत्सु पौरजनेषु, किंकर्तव्यतामूढे सामात्ये पार्थिवे, त्वमास्थानीमेत्य मां स्थापयित्वा वक्ष्यसि— 'देव स एष मे जामाता तवार्हति श्रीभुजाराधनम् । अधीति

पदचन्द्रिका ।

हीनानाम् । आपन्नशरणमापन्नानामापत्प्राप्तानां शरणं रक्षकम् । 'शरणं गृहरक्षित्रोः' इत्यमरः । अगतिं निराश्रयम् । अनुग्राह्यपक्षे कृपास्थानीये । राजचरितधुर्यः । 'धुरो यड्ढकौ' (४।४।७७) इति यत् । अखण्डितचारित्राऽदूषितकन्यावस्था । पाणिग्राहकं पाणिग्रहणकर्तारम् । फल्गुनीषूत्तरासु । उत्तराफल्गुनीष्वित्यर्थः । अनभिशङ्को निःशङ्कः । अभिविहृत्य क्रीडां कृत्वा । मग्नोपसृतो मग्नः सन्नुपसृतः । त्वदभ्याशे त्वत्समीपे । उन्मङ्क्ष्यामि प्रादुर्भविष्ये । त्वदुपहृते त्वद्दत्ते । अवरोधनं राजान्तःपुरम् । आस्थानीमास्थानम् । अधीती । 'योऽधीतकृत्स्नवेदः स्यात्सोऽधीतीत्यु-

भूषणा ।

आपन्नानां प्राप्तापत्तीनां शरणं रक्षकम् । 'शरणं गृहरक्षित्रोः' इत्यमरः । प्रजानां मातृपितृस्थानीयं । विग्रहे । अधीती 'इष्टादिभ्यश्च' (५।२।८८) इति कर्तरीनिः ।

लघुदीपिका ।

'शरणं गृहरक्षित्रोः' । 'योऽधीतकृत्स्नवेदः स्यात्सोऽधीतीत्युच्यते बुधैः' । 'कस्ये-

पाठा०—१ 'तीर्थयात्रोत्सवे तीर्थस्थानात्'. २ 'शुल्काम्बर'.

चतुर्ष्वाम्नायेषु, गृहीती षट्स्वङ्गेषु, आन्वीक्षिकीविचक्षणः, चतुःषष्टिकलागमप्रयोगचतुरः, विशेषेण गजरथतुरङ्गतन्त्रवित्, इष्वसनास्त्रकर्मणि गदायुद्धे च निरुपमः, पुराणेतिहासकुशलः, कर्ता काव्यनाटकाख्यायिकानाम्, वेत्ता सोपनिषदोऽर्थशास्त्रस्य, निर्मत्सरो गुणेषु, विश्रम्भी सुहृत्सु, शक्तः, संविभागशीलः, श्रुतधरः, गतस्मयश्च । नास्य दोषमणीयांसमप्युपलभे । न च गुणेष्वविद्यमानम् । तन्मादृशस्य ब्राह्मणमात्रस्य न लभ्य एष संबन्धी । दुहितरमस्मै समर्प्य वार्धकोचितमन्त्यमाश्रमं संक्रमेयम्, यदि देवः साधु मन्यते' इति । स इदमाकर्ण्य वैवर्ण्याक्रान्तवक्त्रः परमुपेतो वैलक्ष्यमारप्स्यतेऽनुनेतुम[2]नित्यतादिसंकीर्तनेनात्रभवन्तं मन्त्रिभिः सह । त्वं तु तेषामदत्तश्रोत्रो मुक्तकण्ठं रुदित्वा चिरस्य

पदचन्द्रिका ।

च्यते बुधैः' इति । 'अधीती चतुर्ष्वाम्नायेषु' इति । 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्' (वा. १४८५) इति सप्तमी । आन्वीक्षिकी तर्कविद्या । विचक्षणः कुशलः । आख्यायिका प्रबन्धविशेषः कादम्बरीहर्षचरित्रादिः । 'प्रसृतानाकुलश्रव्यशब्दार्थपदवृत्तिना । गद्येन युक्तोदात्तार्था सोच्छ्वासाख्यायिका मता ॥' इति भीमः । सोपनिषदोऽर्थशास्त्रस्य कर्मज्ञानमीमांसयोः वेत्ता । शक्तः 'शक्तः प्रियंवदः प्रोक्तः' इति हलायुधः । विश्रम्भी विश्वासवान् । गतस्मयो गर्वरहितः । अणीयांसमल्पिष्ठम् । वार्धकोचितं वृद्धत्वोचितम् । अन्त्यमाश्रमं संन्यासम् । विवर्णस्य भावो वैवर्ण्यम् । का

भूषणा ।

'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्' (वा. १४८५) इति सप्तमी । 'इतिहासः पुरावृत्तम्' । 'आख्यायिकोपलब्धार्था' इत्यमरो द्वयोः। 'प्रसृतानाकुलश्रव्यशब्दार्थपदवृत्तिना। गद्येन युक्तोदात्तार्था सोच्छ्वासाख्यायिका मता ॥ वृत्तं व्याख्यायते तस्या नायकेनाथ चेष्टितम् । वक्त्रं चापरवक्त्रं च काले भाव्यर्थशंसि च ॥ कवेरभिप्रायकृतैरङ्कनैः कैश्चिदाननैः ॥' इति सोपनिषदोऽर्थशास्त्रस्य कर्मज्ञानमीमांसयोः । शक्तः प्रियंवदः । 'शक्तः प्रियं-

लघुदीपिका ।

न्विषयस्य कर्मण्युपसंख्यानम्' (वा. १४८५) इति सप्तमी । आख्यायिका प्रबन्धविशेषः । 'प्रसृतानाकुलश्रव्यशब्दार्थपदवृत्तिना । गद्येन युक्तोदात्तार्था सोच्छ्वासाख्यायिका मता ॥ वृत्तं व्याख्यायते तस्या नायकेनाथ चेष्टितम् । वक्त्रं चापरवक्त्रं च काले भाव्यर्थशंसि च ॥ कवेरभिप्रायकृतैरङ्कनैः कैश्चिदाननैः ॥' सोपनिषदोऽर्थशास्त्रस्य कर्मज्ञानमीमांसयोः । शक्तः । 'शक्तः प्रियंवदः प्रोक्तः' इति हलायुधः । विहस्य

पाठा०—१ 'शक्तः', 'शक्यः'. २ 'समनुनेतुम्'.

बाष्पाकुण्ठकण्ठः काष्ठान्याहृत्याग्निं संधुक्ष्य राजमन्दिरद्वारे चिताधिरोहणायोपक्रमिष्यसे । स तावदेव त्वत्पादयोर्निपत्य सामात्यो नरपतिरनूनैरर्थैस्त्वामुपच्छन्द्य दुहितरं मह्यं दत्त्वा मद्योग्यतासमाराधितः समस्तमेव राज्यभारं मयि समर्पयिष्यति । सोऽयमभ्युपायोऽनुष्ठेयो यदि तुभ्यं रोचते' इति । सोऽपि पटुर्विटानामग्रणीरसकृदभ्यस्तकपटप्रपञ्चः पाञ्चालशर्मा यथोक्तमभ्यधिकं च निपुणमुपक्रान्तवान् । आसीच्च मम समीहितानामहीनकालसिद्धिः । अन्वभवं च मधुकर इव नवमालिकामार्द्रसुमनसम् । अस्य राज्ञः सिंहवर्मणः साहाय्यदानं सुहृत्संकेतभूमिगमनमित्युभयमपेक्ष्य सर्वबलसंदोहेन चम्पामिमामुपगतो दैवाद्देवदर्शनसुखमनुभवामि' इति ।

श्रुत्वैतत्प्रमतिचरितं स्मितमुकुलितमुखनलिनः 'विलासप्रायमूर्जितम्, मृदुप्रायं चेष्टितम्, इष्ट एष मार्गः प्रज्ञावताम् । 'अथेदानीमत्रभवान्प्रविशतु' इति मित्रगुप्तमैक्षत क्षितीशपुत्रः ।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते प्रमतिचरितं नाम पञ्चम उच्छ्वासः ।

---

पदचन्द्रिका ।

ष्ठानि संधुक्ष्य । प्रज्वाल्येत्यर्थः । राजमन्दिरद्वारे राजगृहद्वारे । सामात्यः सप्रधानः । अनूनैः । महामूल्यैरित्यर्थः । अभ्यस्तः प्राप्तः । कपटप्रपञ्चः छलरचना । उपक्रान्तवान् संपादितवान् । अहीनकालसिद्धिरत्युच्चकालसिद्धिः । मधुकर इव भ्रमर इव । नवमालिकाम् । मालतीमित्यर्थः । आर्द्रसुमनसं सरसपुष्पम् ॥

मुकुलितं हास्यसंकुचितम् । मुखनलिनं मुखकमलम् । प्रज्ञावतां बुद्धिमताम् । इदानीं प्रमतिचरितश्रवणानन्तरम् । मित्रगुप्तं स्वचरितख्यापनायैक्षतापश्यदित्यर्थः ॥

**इति श्रीदशकुमारचरितटीकायां पदचन्द्रिकाभिधायां पञ्चम उच्छ्वासः ॥**

भूषणा ।

वदे' इत्यमरः । वैलक्ष्यं परं वैक्लव्यमुपेत इत्यन्वयः । समनुनेतुं खेदं दूरीकर्तुम् । चिरस्य बहुकालम् । रुदित्वा क्रन्दनं कृत्वा । मधुकर आर्द्रं सुमनसमिवेत्यन्वयः । संदोहः समूहः । विलासप्रायं विलासबहुलम् । ऊर्जितमुन्नतम् ॥ **इति श्रीदशकुमारचरितटीकायां भूषणाभिधायां पञ्चम उच्छ्वासः ॥**

लघुदीपिका ।

क्रन्दनं कृत्वा । संकेतभूमिः सपिण्डनप्रदेशः । 'समये च सपिण्डने च संकेतः' इत्यजयः । संदोहः समूहः । विलासप्रायं विलासबहुलम् । ऊर्जितमुन्नतम् ॥ **इति लघुदीपिकायां पञ्चम उच्छ्वासः ॥**

---

पाठा०-१ 'रभिमतै'. २ 'अचिरकाल'. ३ 'मुकुलितनयनो'.

## षष्ठोच्छ्वासः ।

सोऽप्याचचक्षे—देव, सोऽहमपि सुहृत्साधारणभ्रमणकारणः सुह्मेषु दामलिप्ताह्वयस्य[1] नगरस्य बाह्योद्याने महान्तमुत्सवसमाजमालोकयम् । तत्र क्वचिदतिमुक्तकलतामण्डपे[2] कमपि वीणावादेनात्मानं विनोदयन्तमुत्कण्ठितं युवानमद्राक्षम् । अप्राक्षं च—'भद्र, को नामायमुत्सवः, किमर्थं वा समारब्धः, केन वा निमित्तेनोत्सवमनादृत्यैकान्ते भवानुत्कण्ठित इव परिवादिनीद्वितीयस्तिष्ठति ?' इति । सोऽभ्यधत्त—'सौम्य, सुह्मपतिस्तुङ्गधन्वनामानपत्यः प्रार्थितवानमुष्मिन्नायतने विस्मृतविन्ध्यवासरागं वसन्त्या विन्ध्यवासिन्याः पादमूलादपत्यद्वयम्' । अनया च किलास्मै प्रतिशयिताय स्वप्ने समादिष्टम्—'समुत्पत्स्यते तवैकः पुत्रः, जनिष्यते चैका दुहिता । स तु तस्याः पाणिग्राहकमनुजीविष्यति । सा तु सप्तमाद्वर्षादारभ्यापरिणयनात्प्रतिमासं कृत्तिकासु कन्दुक-

---

### पदचन्द्रिका ।

सोऽपि मित्रगुप्तोऽपि । सुह्मेषु देशविशेषेषु । दामलिप्ताह्वयस्य दानलिप्तनाम्ना ख्यातस्य । अतिमुक्तकः पुण्ड्रकः । 'उत्कण्ठितश्चिन्तयानः' इति वैजयन्ती । अद्राक्षं दृष्टवान् । अप्राक्षं च । अवदं चेत्यर्थः । भद्रेति कल्याणवत्संबोधनम् । समारब्धोऽनुष्ठितः । अनादृत्य । उपेक्ष्येत्यर्थः । परिवादिनी वीणाभेदः । 'विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी' इत्यमरः । अभ्यधत्त प्रत्युत्तरं दत्तवान् । सौम्येत्याप्ततया वचनसंबोधनम् । तुङ्गधन्वेति नाम्ना ख्यातः । आयतनं देवस्थानम् । विन्ध्यवासिन्याः परमेश्वर्याः । अस्मै तुङ्गधन्वने । प्रतिशयिताय निद्रिताय । समादिष्टमाज्ञप्तम् । समुत्पत्स्यते भविष्यति । तस्या भगिन्याः । पाणिग्राहकं भर्तारम् । आपरिणयनाद्विवाहकालं यावत् । प्रतिमासं मासं प्रतीति तथा । कृत्तिकासु

### भूषणा ।

देव, सुह्मेष्वग्निकोणदिक्स्थेषु । दामलिप्ताह्वयस्य दामलिप्तनामधेयस्य । अतिमुक्तलतामण्डपे । 'अतिमुक्तः पुण्ड्रकः स्यात्' इत्यमरः । परिवादिनीद्वितीयो वीणासहायः । 'विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी' इत्यमरः । विन्ध्य-

### लघुदीपिका ।

दामलिप्ताह्वयस्य दामलिप्तनामधेयस्य । 'अतिमुक्तः पुण्ड्रकः स्यात्' । उत्क-

---

पाठा०—१ 'दामलिप्ताह्वस्य'. २ 'अतिमुक्त'.

नृत्येन गुणवद्भर्तृलाभाय मां समाराधयतु। यं चाभिलषेत्सामुष्मै देया। स चोत्सवः कन्दुकोत्सवनामास्तु' इति। ततोऽल्पीयसा कालेन राज्ञः प्रियमहिषी मेदिनी नामैकं पुत्रमसूत। समुत्पन्ना चैका दुहिता। साद्य कन्या कन्दुकावती नाम सोमापीडां देवीं कन्दुकविहारेणाराधयिष्यति[1]। तस्यास्तु सखी चन्द्रसेना नाम धात्रेयिका मम प्रियासीत्। सा चैषु दिवसेषु राजपुत्रेण भीमधन्वना बलवदनुरुद्धा। तदहमुत्कण्ठितो मन्मथशरशल्यदुःखोद्विग्नचेताः कलेन वीणारवेणात्मानं किंचिदाश्वासयन्विविक्तमध्यासे' इति।

अस्मिन्नेव च क्षणे किमपि नूपुरक्वणितमुपातिष्ठत्। आगता च काचिदङ्गना। दृष्ट्वैव स एनामुत्फुल्लदृष्टिरुत्थायोपगूढ[2]कण्ठश्च तया तत्रैवोपाविशत्। अशंसच्च—'सैषा मे प्राणसमा, यद्विरहो दहन इव दहति माम्। इदं च मे जीवितमपहरता राजपुत्रेण मृत्युनेव निरुष्मतां नीतः। न च शक्ष्यामि राजसूनुरित्यमुष्मिन्पापमाचरितुम्। अतोऽनयात्मानं सुदृष्टं कारयित्वा त्यक्ष्यामि

---

पदचन्द्रिका।

तन्नामनक्षत्रेषु। कन्दुकनृत्येन कन्दुकवन्नृत्यं तेन। समाराधयतु। आराधनं करोत्वित्यर्थः। स कन्दुकनामेति ख्यातः। अल्पीयसा अल्पतरेण। मेदिनी नाम राजपत्नी। सोमापीडां देवीं चन्द्रशेखराम्। 'आपीडः शेखरः समौ' इति वैजयन्ती। सा च चन्द्रसेना। राजपुत्रेण भीमधन्वेति नाम्ना। मन्मथः मदनः। शरशल्यं बाणशल्यम्। कलेन गम्भीरेण। 'कलो मन्द्रस्तु गम्भीरे' इत्यमरः। विविक्तं विजनम्। अध्यासेऽधिष्ठितोऽस्मि॥

नूपुरक्वणितं नूपुरशब्दितम्। स वीणावादको युवा। उपगूढकण्ठो व्याप्तकण्ठः। यद्विरहो यस्या विरहः। निरुष्मतां निस्तेजस्त्वम्। राजसूनुरिति राजपुत्र इति।

भूषणा।

वासिन्या देव्याः। कन्दुकावती। 'मतौ बह्वचोऽनजिरादीनाम्' (१०४१) इति दीर्घः संज्ञायाम्। सोमापीडां चन्द्रशेखराम्। 'आपीडशेखरौ' इत्यमरः।

लघुदीपिका।

ण्ठितश्चिन्तयानः' इति वैजयन्ती। विन्ध्यवासिन्याः परमेश्वर्याः। सोमापीडां चन्द्रशेखराम्। 'आपीडः शेखरः समौ' इति वैजयन्ती। अपि तु तथापि। उदैरतो-

---

पाठा०—१ 'आराधयितुमागमिष्यति'. २ 'उपगूह्य गाढमुपगूढ'.

निष्प्रतिक्रियान्प्राणान्' इति । सा तु पर्यश्रुमुखी समभ्यधात्—'मा स्म नाथ, मत्कृतेऽध्यवस्यः साहसम् । यस्त्वमुत्तमात्सार्थवाहादर्थदासादुत्पद्य कोशदास इति गुरुभिरभिहितनामधेयः पुनर्मदत्यासङ्गाद्वेशदास इति द्विषद्भिः प्रख्यापितोऽसि तस्मिंस्त्वय्युपरते यद्यहं जीवेयं नृशंसो वेश इति समर्थयेयं लोकवादम् । अतोऽद्यैव नय मामीप्सितं देशम्' इति । स तु मामभ्यधत्त—'भद्र, भवद्दृष्टेषु राष्ट्रेषु कतमत्समृद्धं संपन्नसस्यं सत्पुरुषभूयिष्ठं च ?' इति । तमहमीषद्विहस्याब्रवम्—'भद्र, विस्तीर्णेयमर्णवाम्बरा । न पर्यन्तोऽस्ति स्थानस्थानेषु रम्याणां जनपदानाम् । अपि तु न चेदिह युवयोः सुखनिवासकारणं कमप्युपायमुत्पादयितुं शक्नुयां ततोऽहमेव भवेयमध्वदर्शी' । तावतोदैरत रणितानि मणिनूपुराणाम् । अथासौ जातसंभ्रमा 'प्राप्तैवेयं भर्तृदारिका कन्दुकावती कन्दुकक्रीडितेन देवीं विन्ध्यवासिनीमाराधयितुम् । अनिषिद्धदर्शना चेयमस्मिन्कन्दुकोत्सवे । सफलमस्तु युष्मच्चक्षुः । आगच्छतं द्रष्टुम् । अहमस्याः सकाशवर्तिनी भवेयम्' इत्ययासीत् । तामन्वयाव चावाम् । महति रत्नरङ्गपीठे स्थितां प्रथमं ताम्रोष्ठीमपश्यम् । अतिष्ठच्च सा सद्य एव मम हृदये । न

पदचन्द्रिका ।

निष्प्रतिक्रियान्निष्प्रतीकारान् । **सा त्विति** । पर्यश्रुमुखी परिगतान्यश्रूणि यस्मिन्निति । द्विषद्भिः । कैश्चिदित्यर्थः । उपरते मृते । नृशंसो घातुकः । वेशो वेषः । ईप्सितमिष्टम् । भवद्दृष्टेषु त्वया दृष्टेषु । संपन्नसस्यं प्रचुरधान्यम् । ईषदल्पम् । अर्णवाम्बरा समुद्रवसना । पर्यन्तः समाप्तिः । स्थानस्थानेषु स्थलस्थलेषु । जनपदानां देशानाम् । 'नीवृज्जनपदो देशः' इत्यमरः । अध्वदर्शी मार्गोपदेष्टा । तावता । तत्कालेनेत्यर्थः । उदैरत । उत्पन्नानीत्यर्थः । रणितानि शब्दितानि । **अथेति** । असौ नायिका । भर्तृदारिका राजकन्यका । अनिषिद्धदर्शनाऽप्रतिहतदर्शना । सकाशं समीपम् । आवामिति द्विवचनम् । ताम्रोष्ठीमारक्ताधराम् । अतिष्ठत् । अवर्ततेत्यर्थः ।

भूषणा ।

धात्रेयिका । धात्र्युपमाता तत्कन्या धात्रेयिका । 'स्त्रीभ्यो ढक्' ( ४।१।१२० ) । सुदृष्टं सम्यग्दृष्टम् । निष्प्रतिक्रियाञ्जीवनोपायान्तरशून्यान् । वेशजनो वेश्याजनः । उदैरतोदगच्छन् । आगच्छतम् । द्विवचनमेतत् । चित्रीयाविष्टचित्तो

पाठा०–१ 'वेशजनः'.

मयान्येन वान्तराले दृष्टा । चित्रीयाविष्टचित्तश्चाचिन्तयम्—'किमियं लक्ष्मीः, नहि नहि। तस्याः किल हस्ते विन्यस्तं कमलम्, अस्यास्तु हस्त एव कमलम् । [1]अभुक्तपूर्वा चासौ पुरातनेन पुंसा पूर्वराजैश्च, अस्याः पुनरनवद्यमयातयामं च यौवनम्' इति चिन्तयत्येव मयि, सानघसर्वगात्री व्यत्यस्तहस्तपल्लवाग्रस्पृष्टभूमिरालोलनीलकुटिलालका सविभ्रमं भगवतीमभिवन्द्य कन्दुकममन्दरागरूषिताक्षमनङ्गमिवालम्बत। लीलाशिथिलं च भूमौ मुक्तवती । मन्दोत्थितं च किंचित्कुञ्चिताङ्गुष्ठेन प्रसृतकोमलाङ्गुलिना पाणिपल्लवेन समाहत्य हस्तपृष्ठेन चोन्नीय, चटुलदृष्टिलाञ्छितं स्तबकमिव भ्रमरमालानुविद्धमवपतन्तमाकाश एवाग्रहीत् । अमुञ्चच । [2]मध्यविलम्बितलये द्रुतलये [3]मृदुमृदु च प्रहरन्ती

### पदचन्द्रिका।

चित्रीयाविष्टचित्तः। 'चित्रीया विस्मयोऽद्भुतम्' इति कोशः । अभुक्तपूर्वा पूर्वं न भुक्ता। अयातयामम्। अजीर्णमित्यर्थः। अपरिभुक्तमिति यावत् । 'यातयामं गतरसम्' इति भगवद्गीता । 'जीर्णं च परिभुक्तं च यातयाममिदं द्वयम्' इति कोशः। अनघं निर्दोषम् । व्यत्यस्तौ परावर्तितौ । नीलाः श्यामाः । कुटिला वक्राः । अलकाश्चूर्णकुन्तलाः । असन्दं वर्धमानम्। लीला विलासः। शिथिलं श्लथम् । मन्दं निश्चलम् । कुञ्चितो वक्रितः । चटुलश्चञ्चलः । स्तबको गुच्छः। भ्रमरसाला भ्रमरपङ्क्तिः। आकाश एव मध्य एव। मध्यविलम्बितं मध्ये विलम्बितम् । द्रुतं लयः पतनं यत्रेति तस्मिन्सतीति सतिसप्तमी।

### भूषणा।

विस्मयाविष्टचित्तः । 'विस्मयोऽद्भुतमाश्चर्यं चित्रम्' इत्यमरः । चित्रीया 'नमोवरिवस्–' (६।१।१९) इति क्यजन्तात् 'अ प्रत्ययात्' (३।३।१०२) इत्यप्रत्ययः स्त्रियाम् । किमियमित्याद्याक्षेपालंकारः । 'आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात्' इति लक्षणात्। अयातयाममपरिभुक्तम्। 'जीर्णं च परिभुक्तं च यातयाममिदं द्वयम्।' रूषिताक्षं रञ्जितम्। 'रूष हिंसायाम्'। विलम्बितद्रुतमध्यलये। 'विलम्बितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात् । तालः कालक्रि-

### लघुदीपिका।

दगच्छत्। चित्रीयाविष्टचित्तो विस्मयाविष्टचित्तः । 'चित्रीयो विस्मयोऽद्भुतम्'। अयातयाममपरिभुक्तम् । 'जीर्णं च परिभुक्तं च यातयाममिदं द्वयम्।' चूर्णपदी

पाठा०–१ 'भुक्तपूर्वा च सा'. २ 'विलम्बितद्रुतमध्यलये'. ३ 'मृदुमृदु च'.

तत्क्षणं चूर्णपदमदर्शयत् । प्रशान्तं च तं निर्दयप्रहारैरुदपातयत् । विपर्ययेण च प्राशमयत् । पक्षसृज्वागतं च वामदक्षिणाभ्यां कराभ्यां पर्यायेणाभिघ्नन्ती शकुन्तमिवोदस्थापयत् । दूरोत्थितं च प्रपतन्तमाहत्य गीतमार्गमा[1]रचयत् । प्रतिदिशं च गमयित्वा प्र[2]त्यागमयत् । एवमनेककरणमधुरं विहरन्ती रङ्गगतस्य रक्तचेतसो जनस्य प्रतिक्षणमु[3]च्चावचाः प्रशंसावाचः प्रतिगृह्णती, प्र[4]तिक्षणारूढविभ्रमं कोशदाससंसेऽवलम्ब्य कण्टकितगण्डमुत्फुल्लेक्षणं च मय्यभिमुखीभूय तिष्ठति तत्प्रथमावतीर्णकंदर्पकारितकटाक्षदृष्टिस्तदनुमार्गविलसितलीलाञ्चितभ्रूलता, श्वासानिलवेगान्दोलितैर्दन्तच्छदरश्मिजालैर्लीलापल्लवैरिव मुखकमलपरिमलग्रहणलोलानलिनस्ताडयन्ती, मण्डलभ्रमणेषु कन्दुकस्यातिशीघ्रप्रचारितया विशन्तीव मद्दर्शनलज्जया पुष्पमयं पञ्जरम्, पञ्चबिन्दुप्रसृतेषु पञ्चापि

---

पदचन्द्रिका ।

मृदु कोमलम् । अमृदु च कठिनम् । चूर्णपदम् । 'गत्यागत्योरानुलोम्येन न्यूनाधिक्यक्षेपणं तच्चूर्णपदम्' इति कन्दुकतन्त्रे । प्रशान्तं शिथिलम् । तम् । कन्दुकमित्यर्थः । उदपातयदुत्थितमकरोत् । शकुन्तः पक्षी । गीतमार्गम् । 'दशपदचङ्क्रमणं गीतमार्गं विदुः' इति कन्दुकतन्त्रे । अनेककरणमधुरमनेकव्यापाररम्यम् । उच्चावचाः स्थूलसूक्ष्माः । प्रशंसावाचः स्तुतिवचनानि । प्रतिक्षणारूढविभ्रमः प्रतिक्षणमारूढ उत्पन्नो विभ्रमो विलासो यस्येति तथा । कण्टकितं रोमाञ्चितम् । तिष्ठति सतीति सतिसप्तमी । तत्प्रथमं तदेव प्रथममवतीर्ण आगतो यः कन्दर्पः कामस्तेन कारिता कटाक्षदृष्टिर्यस्याः सेति तथा । तदनुमार्गे कन्दुकानुमार्गे । विलसितस्य खेलनस्य । अनिलवेगो वायुवेगः । पञ्चबिन्दुप्रसृतेषु । 'पञ्चावर्तप्रहारस्तु

भूषणा ।

यामानम्' इत्यमरः । चूर्णपदम् । 'गत्यागत्योरानुलोम्यतो यन्न्यूनाधिक्यक्षेपण'मिति । गीतमार्गमारचयत् । दशपदचङ्क्रमणं तु गीतमार्गः । एवमनेककरणमधुरमनेकव्यापाररम्यम् । उच्चावचमनेकभेदम् । 'उच्चावचं नैकभेदम्' इत्यमरः । अवघट्य-

लघुदीपिका ।

'गत्यागत्योरानुलोम्यतो यन्न्यूनाधिक्यक्षेपणं चूर्णपद'मिति कन्दुकतन्त्रे । गीतमार्गमारचयत् । दशपदचङ्क्रमणं तु गीतमार्गः । अनेककरणमधुरमनेकव्यापाररम्यम् ।

---

**पाठा०—१ 'आचरत्'. २ 'प्रत्यागमत्'. ३ 'उच्चावचम्'. ४ 'तत्क्षणारूढविश्रम्भम्'.**

पञ्चबाणबाणान्युगपदिवाभिपततस्त्रासेनावघट्टयन्ती, गोमूत्रिकाप्रचारेषु घनदर्शितरागविभ्रमा विद्युल्लतामिव विडम्बयन्ती, भूषणमणिरणितदत्तलयसंवादिपादचारम्, अपदेशस्मितप्रभानिषिक्तबिम्बाधरम्, अंसस्रंसितप्रतिसमाहितशिखण्डभारम्, [1]समाघट्टितक्वणितरत्नमेखलागुणम्, अञ्चितोत्थितपृथुनि[2]तम्बविलम्बिविचलदंशुकोज्ज्वलम्, आकुञ्चितप्रसृतवेल्लितभुजलताभिहतललितकन्दुकम्, आवर्जितबाहुपाशम्, उपरिपरिवर्तितत्रिकविलग्नलोलकुन्तम्, अवगलितकर्णपूरकनकपत्रप्रतिसमाधानशीघ्रतानतिक्रमितप्रक्रान्तक्रीडम्, असकृदुत्क्षिप्यमाणहस्तपादबाह्याभ्यन्तरभ्रान्तकन्दुकम्, अवनमनोन्नमननैरन्तर्यनष्टदृष्टमध्ययष्टिकम्, अवपतनोत्पतननि[3]र्व्यवस्थमुक्ताहारम्, अङ्कुरितघर्मसलिलदूषितकपोलपत्रभङ्गशोषणाधिकृतश्रवणपल्लवानिलम्, आगलितस्तनतटांशुकनियमनव्यापृतैकपाणिपल्लवं च निषद्यो-

पदचन्द्रिका।

पञ्चबिन्दुरुदाहृतः' इति। पञ्चबाणो मदनः। गोमूत्रिकाप्रचारेषु। 'गोमूत्रिकेति विद्वद्भिश्चारः शातहृदो मतः' इति च। घनदर्शितमतिमात्रदर्शितम्, मेघदर्शितं वा। विभ्रमः स्फुरणम्। विडम्बयन्त्यनुकुर्वती। रणितं शब्दितम्। त्रिकम्। 'त्रिकं कृकाटिकायां च पृष्ठवंशाधरेऽपि च' इति वैजयन्ती। अङ्कुरितमीषत्प्रादुर्भूतम्। घर्मसलिलं घर्मोदकम्। अधिकृतोऽधिकारीकृतः। श्रवणपल्लवः कर्णावतंसपल्लवः। स्तनतटांशुकनियमनं कुचतटोपरिगतवस्त्रसमीकरणं तत्र व्यापृतो

भूषणा।

न्त्यालोडयन्ती। गोमूत्रिकाप्रचारेषु। 'गोमूत्रिकेति विद्वद्भिश्चारः शातहृदो मतः'। घनदर्शितमतिमात्रदर्शितं, मेघदर्शितं च। विभ्रमः स्फुरणम्। लयसंवादि लयानुरोधि। अञ्चितं सम्यग्यथा तथोत्थितम्। उन्नतः पृथुर्महान्नितम्बस्तस्य बिम्बं तत्र लम्बितं चेलं वस्त्रं यत्रेत्यर्थः। आघट्टितः समीकृतः। क्वणितः शब्दवान्मेखलागुणो यत्रेत्यर्थः। 'त्रिकं कृकाटिकायां च पृष्ठवंशाधरे त्रिकम्' इति वैजयन्ती। **असकृदित्यादि**। 'बनेटी' इति लोकप्रसिद्धं क्रीडनकम्। अत्रत्यं पूर्वदृष्टम्।

लघुदीपिका।

पञ्चबिन्दुप्रसृतम्। 'पञ्चावर्तप्रहारस्तु पञ्चबिन्दुरुदाहृतः' गोमूत्रिकाप्रचारेषु। 'गोमूत्रिकेति विद्वद्भिश्चारः शातहृदः स्मृतः'। घनदर्शितमतिमात्रदर्शितम्, मेघदर्शितं च। विभ्रमः स्फुरणम्। 'त्रिकं कृकाटिकायां च पृष्ठवंशाधरेऽपि च' इति

**पाठा०—१ 'आघाट्टतक्वणितमेखलागुणम्'. २ 'नितम्बबिम्बलम्बितचेलम्'. ३ 'विपर्यस्तमुक्ता'.**

त्थाय निमील्योन्मील्य स्थित्वा गत्वा चैवातिचित्रं पर्यक्रीडत राजकन्या । अभिहत्य भूतलाकाशयोरपि क्रीडान्तराणि दर्शनीयान्येकेनैव वानेकेनैव कन्दुकेनादर्शयत् । चन्द्रसेनादिभिश्च प्रियसखीभिः सह विहृत्य विहृतान्ते चाभिवन्द्य देवीं मनसा मे सानुरागेणेव परिजनेन चानुगम्यमाना, कुवलयशरमिव कुसुमशरस्य मय्यपाङ्गं समर्पयन्ती, सापदेशमसकृदावर्त्यमानवदनचन्द्रमण्डलतया स्वहृदयमिव मत्समीपे प्रेरितं प्रतिनिवृत्तं न वेत्यालोकयन्ती, सह सखीभिः कुमारीपुरमगमत् ।

अहं चानङ्गविह्वलः स्ववेश्म गत्वा कोशदासेन यत्नवदत्युदारं स्नानभोजनादिकमनुभावितोऽस्मि । सायं चोपसृत्य चन्द्रसेना रहसि मां प्रणिपत्य पत्युरंसमंसेन प्रणयपेशलमाघट्टयन्त्युपाविशत् । आचष्ट च हृष्टः कोशदासः—'भूयासमेवं यावदायुरायताक्षि, त्वत्प्रसादस्य पात्रम्' इति । मया तु सस्मितमभिहितम्—'सखे' किमेतदाशास्यम् । अस्ति किंचिदञ्जनम् । अनया तदक्तनेत्रया राजसूनुरुपस्थितो वानरीमिवैनां द्रक्ष्यति, विरक्तश्चैनां पुनस्त्यक्ष्यति' इति । तया तु स्मेरयास्मि कथितः—'सोऽयमार्येणाज्ञाकरो जनोऽत्यर्थमनुगृहीतः, यदस्मिन्नेव जन्मनि मानुषं वपुरपनीय वानरीकरिष्यते । तदास्तामिदम् । अन्यथापि सिद्धं नः समीहितम् । अद्य खलु कन्दुकोत्सवे भवन्तम[1]पहसितमनोभवाकारमभिलषन्ती रोषादिव श[2]म्बरद्विषातिमात्रमायास्यते राजपुत्री । सोऽयमर्थो विदितभावया मया स्वमात्रे, तया च

पदचन्द्रिका ।

व्यासक्तः । अतिचित्रमनेकप्रकारम् । विहृतान्ते खेलनान्ते । अपाङ्गं नेत्रप्रान्तम् । सापदेशं सव्याजम् । 'अपदेशः स्मृतो लक्ष्ये निमित्तव्याजयोरपि' इति विश्वः ।

**अहमिति** । अनङ्गविह्वलो मदनव्याकुलः । अनुभावितोऽस्मि । अनुभवविषयीकृत इत्यर्थः । अंसं स्कन्धम् । अंसेन स्कन्धेन । प्रणयपेशलं प्रीतिसुन्दरम् । भूयासम् । भविष्य इत्यर्थः । तदक्तनेत्रयाञ्जनाक्तनेत्रया । तया चन्द्रसेनया । आज्ञाकरः सेवकजनः । अत्यर्थमत्यन्तम् । अन्यथापि मनुष्यस्य वानरीकरणं विनापि । **अद्येति** । अपहसित उपहासं प्रापितो मनोभवाकारो मदनशरीरं येनेति । शम्बरद्विषा कामेन । अतिमात्रं निर्भरम् । 'अतिमात्रोद्गाढनिर्भरम्' इत्य-

पाठा०—१ 'अवहसित'. २ 'हरद्विषा'.

तन्मात्रे, महिष्या च मनुजेन्द्राय निवेदयिष्यते । विदितार्थस्तु पार्थिवस्त्वया दुहितुः पाणिं ग्राहयिष्यति । ततश्च त्वदनुजीविना राजपुत्रेण भवितव्यम् । एष हि दैवतासमादिष्टो विधिः । त्वदायत्ते च राज्ये नालमेव त्वामतिक्रम्य मामवरोद्धुं भीमधन्वा । तत्सहतामयं त्रिचतुराणि दिनानि' इति मामामन्त्र्य प्रियं चोपगूह्य प्रत्ययासीत् । मम कोशदासस्य च तदुक्तानुसारेण बहु विकल्पयतोः कथंचिदक्षीयत क्षपा । क्षपान्ते च कृतयथोचितनियमस्तमेव प्रियादर्शनसुभगमुद्यानोद्देशमुपागतोऽस्मि । तत्रैव चोपसृत्य राजपुत्रो निरभिमानमनुकूलाभिः कथाभिर्मामनुवर्तमानो मुहूर्तमास्त । नीत्वा चोपकार्यामात्मसमेन स्नानभोजनशयनादिव्यतिकरेणोपाचरत् । तल्पगतं च स्वप्नेनानुभूयमानप्रियादर्शनालिङ्गनसुखमायसेन निगडेनातिबलवद्बहुपुरुषैः पीवरभुजदण्डोपरुद्धमबन्धयन्माम् । प्रतिबुद्धं च सहसा समभ्यधात्— 'अयि दुर्मते, श्रुतमालपितं हतायाश्चन्द्रसेनाया जालरन्ध्रनिःसृतं तच्चेष्टावबोधकप्रयुक्तयानया कुब्जया । त्वं किलाभिलषितो वराक्या कन्दुकावत्या तव किलानुजीविना मया स्थेयम्, 'त्वद्वचः किलानतिक्रमता मया चन्द्रसेना कोशदासाय दास्यते' इत्युक्त्वा

---

पदचन्द्रिका ।

मरः । आयास्यते आयासं प्राप्यते । त्वदनुजीविना त्वामनुजीवतीति तथा । विधिरदृष्टम् । अवरोद्धुमवरोधनं कर्तुम् । कथंचिन्महता प्रयासेन । क्षपा रात्रिः । अनुकूलाभिः स्वेष्टाभिः । उपकार्योर्ध्वगृहम् । आयसेन लोहमयेन । पीवरौ मांसलौ भुजदण्डौ बाहुदण्डौ ताभ्यामुपरुद्धं यथा तथा । जालरन्ध्रं गवाक्षच्छिद्रम् । किल । असंभाव्यार्थे किलशब्दः । 'वार्तासंभाव्ययोः किल' इत्यमरः । स्पन्दमानः कम्प-

भूषणा ।

अवहसितमनोभवाकारं विहसितकामरूपम् । हरद्विषा कामेन । सहतामयं कोशदासः । उपकार्या राजगृहम् । 'उपकार्योपकारिका' इत्यमरः । पीवरभुजदण्डावुपरुद्धौ यत्र । त्वं किलाभिलषितः । असंभाव्येऽर्थे किलशब्दः । 'वार्तासंभाव्ययोः किल' इत्यमरः । वहित्रं वहनम् । मद्गुः पोतविशेषः । अपि सिञ्चेत् । अपिशब्दः

लघुदीपिका ।

वैजयन्ती । त्वं किलाभिलषितः, असंभाव्यार्थे किलशब्दः । 'वार्तासंभाव्ययोः

पार्श्वचरं पुरुषमेकमालोक्याकथयत्—'प्रक्षिपैनं सागरे' इति । स तु लब्धराज्य इवातिहृष्टः 'देव, यदाज्ञापयसि' इति यथादिष्टमकरोत् । 'अहं तु निरालम्बनो भुजाभ्यामितस्ततः स्पन्दमानः किमपि काष्ठं दैवदत्तमुरसोपश्लिष्य तावदप्लोषि, यावदपासरद्वासरः शर्वरी च सर्वा । प्रत्युपस्यदृश्यत किमपि वहित्रम् । अमुत्रासन्यवनाः । ते मामुद्धृत्य रामेषुनाम्ने नाविकनायकाय कथितवन्तः—'कोऽप्ययमायसनिगलबद्ध एव जले लब्धः पुरुषः । सोऽयमपि सिञ्चेत्सहस्रं द्राक्षाणां क्षणेनैकेन' इति । अस्मिन्नेव क्षणे नैकनौकापरिवृतः कोऽपि मद्गुरभ्यधावत् । अबिभयुर्यवनाः । तावदतिजवा नौकाः श्वान इव वराहमस्मत्पोतं पर्यरुत्सत । प्रावर्तत संप्रहारः । पराजयिषत यवनाः । तानहमगतीनवसीदतः समाश्वास्यालपिषम्—'अपनयत मे निगडबन्धनम् । अयमहमवसादयामि वः सपत्नान्' इति । अमी तथाकुर्वन् । सर्वांश्च तान्प्रतिभटान्भल्लवर्षिणा भीमटंकृतेन शार्ङ्गेण लवलवीकृताङ्गान-

---

पदचन्द्रिका ।

मानः काष्ठं दारु । 'काष्ठं दार्विन्धनं त्वेधः' इत्यमरः । दैवदत्तमदृष्टदत्तम् । उपश्लिष्यालिङ्ग्य । अपासरदतिक्रान्तः । वासरो दिवसः । 'क्लीबे दिवसवासरौ' इत्यमरः । शर्वरी रात्रिः । 'अथ शर्वरी । निशा निशीथिनी रात्रिः' इत्यमरः । वहित्रं वहनम् । अमुत्रासन् । ते च यवना इत्यर्थः । अपि सिञ्चेत् । अपिशब्दः संभावनायाम् । 'गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि' इत्यमरः । द्राक्षा । 'मृद्वीका गोस्तनी द्राक्षा' इत्यमरः । मद्गुः पोतविशेषः । अतिजवा अतिवेगवत्यः । पर्यरुत्सत । परितो रुरुधुरित्यर्थः । अबिभयुः । 'ञिभी भये' इत्यस्य धातो रूपम् । भयं प्रापुरित्यर्थः । पराजयिषत । पराजयं प्राप्ता इत्यर्थः । आलपिषमवदम् । अपनयत । दूरीकुरुतेत्यर्थः । अवसादयामि । नाशयिष्यामीत्यर्थः । सपत्नान् वैरिणः । 'रिपौ

भूषणा ।

संभावनायाम् । 'गर्हासमुच्चयप्रश्नवार्तासंभावनास्वपि' इत्यमरः । 'अपिः पदार्थ-' इति कर्मप्रवचनीयसंज्ञयोपसर्गबाधान्न षत्वम् । 'द्राक्षा । मृद्वीका गोस्तनी ( ) द्राक्षा' इत्यमरः । टंकृतं टंकारः । नपुंसके भावे क्तः । 'शार्ङ्गं चापे हरेश्चापे' इति ।

लघुदीपिका ।

किल' । वहित्रं वहनम् । मद्गुः पोतविशेषः । अपि सिञ्चेत् । अपिः संभावनायाम् । 'गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि' । द्राक्षा । 'मृद्वीका गोस्तनी द्राक्षा' । टङ्कृतं टङ्कारः । नपुंसके भावे क्तः । 'शार्ङ्गं चापे हरेश्चापे' इति वैजयन्ती । अनभिसरम-

कार्षम् । अवप्लुत्य हतविध्वस्तयोधमस्मत्पोतसंसक्तपोतममुत्र नाविकनायकमनभिसरमभिपत्य जीवग्राहमग्रहीषम् । असौ चासीत्स एव भीमधन्वा । तं चाहमवबुध्य जातव्रीडमब्रवम्—'तात, किं दृष्टानि कृतान्तविलसितानि ?' इति । ते तु सांयात्रिका मदीयेनैव शृङ्खलेन तमतिगाढं बद्ध्वा हर्षकिलकिलारवमकुर्वन्मां चापूजयन् ।

दुर्वारा तु सा नौरननुकूलवातनुन्ना दूरमभिपत्य कमपि द्वीपं निबिडमाश्लिष्टवती । तत्र च स्वादु पानीयमेधांसि कन्दमूलफलानि संजिघृक्षवो [१]गाढपातितशिलावलयमवातराम । तत्र चासीन्महाशैलः । सोऽहम्—'अहो रमणीयोऽयं पर्वतनितम्बभागः, कान्ततरेयं [२]गन्धपाषाणवत्युपत्यका, शिशिरमिदमिन्दीवरारविन्दमकरन्दबिन्दुचन्द्रकोत्तरं गोत्रवारि, रम्योऽयमनेकवर्णकुसुम-

पदचन्द्रिका ।

वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः । भल्लवर्षिणा । बाणवर्षिणेत्यर्थः । टंकृतेन टंकारेण । नपुंसके भावे क्तः । शार्ङ्गेण चापेन । 'शार्ङ्गं चापे हरेश्चापे' इति वैजयन्ती । लवलवीकृताङ्गान् लेशलेशीकृताङ्गान् । अकार्षं कृतवान् । जीवग्राहं जीवन्तं गृहीत्वेति णमुल् । **असाविति** । जातव्रीडं जातलज्जम् । अनभिसरसहायम् । 'अनुप्लवः सहायश्चानुचरोऽभिसरः समाः' इत्यमरः । **तातेति** । कृतान्तो यमः । 'कृतान्तो यमुनाभ्राता शमनो यमराड्यमः' इत्यमरः । सांयात्रिकाः पोतवणिजः । 'सांयात्रिकः पोतवणिक्' इत्यमरः । किलकिलारवमित्यनुकरणम् ॥

अननुकूलवातः प्रतिकूलवायुः । स्वादु मधुरम् । एधांसि काष्ठानि । 'काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित्स्त्रियाम्' इत्यमरः । संजिघृक्षवो ग्रहीतुकामाः । शिलावलयं शिलामण्डलम् । नितम्बः कटकः । 'कटकोऽस्त्री नितम्बोऽद्रेः' इत्यमरः । कान्ततरा सुन्दरतरा । गन्धपाषाणवती । मनःशिलादिधातुपाषाणमयीत्यर्थः । अथवा । 'शैलेयं गन्धपाषाणः शिलापुष्पं च कथ्यते' इति । उपत्यका पर्वतासन्नभूमिः । 'उपत्यकाद्रेरासन्ना भूमिः' इत्यमरः । अनेकवर्णानि नानावर्णानि ।

भूषणा ।

लवलवीकृताङ्गान् । लवो भागस्तस्य लवस्तथा कृतान् । चूर्णितानित्यर्थः । अनभिसरसहायम् । 'अनुप्लवः सहायश्चानुचरोऽभिसरः समाः' इत्यमरः । सांयात्रिकः पोतवणिक् । एवमेवामरः । **गाढपातितेति** । गाढपातितं शिलावलयं 'लंगर' पदवाच्यं यत्र तथा । शैलेयं गन्धपाषाणः । 'शैलेयं गन्धपाषाणः शिलापुष्पं च कथ्य-

लघुदीपिका ।

सहायम् । सांयात्रिकः पोतवणिक् । 'शैलेयं गन्धपाषाणः शिलापुष्पं च कथ्यते' ।

**पाठा०-१ 'गाढपतित'. २ 'शैलेयवती'.**

[1]मञ्जरीभरस्तरुवनाभोगः' इत्यतृप्ततरया दृशा बहुबहु पश्यन्नलक्षिताध्यारूढक्षोणीधरशिखरः शोणीभूतमुत्प्रभाभिः पद्मरागसोपानशिलाभिः किमपि नालीकपरागधूसरं सरः समध्यगाम् । तत्र स्नातश्च कांश्चिदमृतस्वादून्बिसभङ्गानास्वाद्य, अंसलग्नकह्लारस्तीरवर्तिना केनापि भीमरूपेण ब्रह्मराक्षसेनाभिपत्य 'कोऽसि, कुतस्त्योऽसि' इति निर्भर्त्सयताभ्यधीये । निर्भयेन च मया सोऽभ्यधीयत—'सौम्य, सोऽहमस्मि द्विजन्मा । शत्रुहस्तादर्णवम्, अर्णवाद्यवननावम्, यवननावश्चित्रग्रावाणमेनं पर्वतप्रवरं गतः, यदृच्छयास्मिन्सरसि विश्रान्तः । भद्रं तव' इति । सोऽब्रूत—'न चेद्ब्रवीषि प्रश्नानश्नामि त्वाम्' इति । मयोक्तम्—'पृच्छा तावत् भवतु' इति । अथावयोरेकयार्ययासीत्संलापः—

'किं क्रूरं स्त्रीहृदयं किं गृहिणः प्रियहिताय दारगुणाः ।
कः कामः संकल्पः किं दुष्करसाधनं प्रज्ञा ॥

[2]तत्र धूमिनीगोमिनीनिम्बवतीनितम्बवत्यः प्रमाणम्' इत्युपदिष्टो मया सोऽब्रूत—'कथय, कीदृश्यस्ताः' इति । अत्रोदाहरम्—

---

पदचन्द्रिका ।

तरुवनाभोगस्तरुवनपूर्णता । अतृप्ततरया । दर्शनेच्छावत्येत्यर्थः । क्षोणीधरः पर्वतः । 'शिखरः शृङ्ग इति नपुंस्यपि' इति कोशः । शोणीभूतमारक्तीभूतम् । 'नालीकं पद्मवाणयोः' इति वैजयन्ती । कुतस्त्यः कुत आगतः । निर्भयेन निःशङ्केन । शत्रुहस्ताद्वैरिहस्तात् । अर्णवं समुद्रम् । 'सरस्वान्सागरोऽर्णवः' इत्यमरः । अर्णवाद्यवननावम् । यवननावः पञ्चम्यन्तमिदम् । गत इति प्रत्येकमन्वेति । पर्वतप्रवरं पर्वतश्रेष्ठम् । अश्नामि भक्षयिष्ये । **अथेति** । आवयोर्ब्रह्मराक्षसस्य मम चेति । संलापो मिथोभाषणम् । **किं क्रूरमिति** । प्रियहिताय प्रियं च हितं च तस्मै । कामः संकल्पः । संकल्पो निश्चयः । इष्टसाधनमित्यर्थः । गृहिणो गृहस्थाः । वर्षाणि

भूषणा ।

ते'। **अलक्षितेति**। अलक्षितमध्यारूढं क्षोणीधरस्य पर्वतस्य शिखरं येन सोऽतिदूरं गत इति यावत् । नालीकं पद्मम् । 'नालीकं पद्मवाणयोः' इति वैजयन्ती । कह्लारम् । 'सौगन्धिकं तु कह्लारम्' इत्यमरः । प्रियहिताय प्रियं च हितं च तस्मै । कः कामः संकल्पः । संकल्पो निश्चयः । इष्टसाधनमित्यर्थः । वर्षाणि द्वादश । 'काला-

लघुदीपिका ।

नालीकं पद्मम् । 'नालीकं पद्मवाणयोः' इति वैजयन्ती । वर्षाणि द्वादश । 'काला-

---

पाठा०–१ 'मञ्जरीमञ्जुलतरस्तरु'. २ 'इयदुक्त्वा'.

'अस्ति त्रिगर्तो नाम जनपदः। तत्रासन्गृहिणस्त्रयः स्फीतसारधनाः सोदर्या धनकधान्यकधन्यकाख्याः। तेषु जीवत्सु न ववर्ष वर्षाणि द्वादश दशशताक्षः, क्षीणसारं सस्यम्, ओषध्यो वन्ध्याः, न फलवन्तो वनस्पतयः, क्लीबा मेघाः, क्षीणस्रोतसः स्रवन्त्यः, पङ्कशेषाणि पल्वलानि, निर्निस्यन्दान्युत्समण्डलानि, विरलीभूतं कन्दमूलफलम्, अवहीनाः कथाः, गलिताः कल्याणोत्सवक्रियाः, बहुलीभूतानि तस्करकुलानि, अन्योन्यमभक्षयन्प्रजाः, पर्यलुठन्नितस्ततो बलाकापाण्डुराणि नरशिरःकपालानि, पर्यहिण्डन्त शुष्काः काकमण्डल्यः, शून्यीभूतानि नगरग्रामखर्वटपुटभेदनादीनि। त एते गृहपतयः सर्वधान्यनिचयमुपयुज्याजाविकं गवलगणं गवां यूथं दासीदासजनमपत्यानि ज्येष्ठमध्यमभार्ये च क्रमेण भक्षयित्वा 'कनिष्ठभार्या धूमिनी श्वो भक्षणीया' इति समकल्पयन्। अथ कनिष्ठो धन्यकः प्रियां

---

पदचन्द्रिका।

द्वादशेति। 'कालाध्वनोरत्यन्तसंयोगे' (२।३।५) इति द्वितीया। दशशताक्ष इन्द्रः। न ववर्ष। वृष्टिं न चकारेत्यर्थः। स्रवन्त्यो नद्यः। 'स्रवन्ती निम्नगापगा' इत्यमरः। पङ्कशेषाणि कर्दमशेषाणि। पल्वलान्यल्पसरांसि। उत्समण्डलानि प्रस्रवणमण्डलानि। 'उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः' इत्यमरः। 'बलाका बिसकण्ठिका' इत्यमरः। पर्यहिण्डन्त पर्यभ्रमन्। 'हिडि भ्रमणे'। अजाश्च अवयश्च तत्समूहोऽजाविकम्। गवला महिषाः। 'गवलो महिषेऽस्त्री तु तस्य शृङ्गेऽपि वर्तते' इति वैजयन्ती। यूथं समूहः। श्व आगामिदिवसे। कनिष्ठः कनीयान्। अत्तुं

भूषणा।

ध्वनोरत्यन्तसंयोगे' (२।३।५) इति द्वितीया। दशशताक्ष इन्द्रः। सस्यं धान्यम्। ओषध्यः फलपाकान्ताः। 'ओषध्यः फलपाकान्ताः' इत्यमरः। उत्सो निर्झरः। 'उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः' इत्यमरः। पर्यहिण्डन्त। 'हिडि गत्यनादरयोः'। 'अजाविकटम्' इति पाठः। 'घ्यन्तादजाद्यदन्तं विप्रतिषेधेन' (वा०) इत्यजशब्दस्य पूर्वनिपातः। 'संघाते कटच्' (वा०) इति सामूहिकापवादः कटच्। गवलगणम्।

लघुदीपिका।

ध्वनोरत्यन्तसंयोगे' (२।३।५) इति द्वितीया। दशशताक्ष इन्द्रः। सस्यं धान्यादि। 'ओषध्यः फलपाकान्ताः'। उत्सः। 'उत्सः प्रस्रवणं वारिप्रवाहः'। पर्यहिण्डन्त पर्यभ्रमन्। 'हिडि भ्रमणे'। अजाविकम्। अजानामवीनां च समूहः। गवलगणम्। 'गवलो

---

पाठा०-१ 'औषध्यः'. २ 'अजाविकटम्'.

स्वामत्तुमक्षमस्तया सह तस्यामेव निश्यपासरत् । मार्गक्लान्तां चोद्वहन्वनं जगाहे । स्वमांसासृगपनीतक्षुत्पिपासां तां नयन्नन्तरे कमपि निकृत्तपाणिपादकर्णनासिकमवनिपृष्ठे विचेष्टमानं पुरुषमद्राक्षीत् । तमप्यार्द्राशयः स्कन्धेनोद्वहन्कन्दमूलमृगवहुले गहनोद्देशे यत्नरचितपर्णशालश्चिरमवसत् । अमुं च रोपितव्रणमिङ्गुदीतैलादिभिरामिषेण शाकेनात्मनिर्विशेषं पुपोष । पुष्टं च तमुद्रिक्तधातुमेकदा मृगान्वेषणाय च प्रयाते धन्यके सा धूमिनी रिरंसयोपातिष्ठत् । भर्त्सितापि तेन बलात्कारमरीरमत् । निवृत्तं च पतिमुदकाभ्यर्थिनम् 'उद्धृत्य कूपात्पिब, रुजति मे शिरः शिरोरोगः' इत्युदञ्चनं सरज्जु पुरश्चिक्षेप । उदञ्चयन्तं च तं कूपादपः क्षणात्पृष्ठतो गत्वा प्रणुनोद । तं च विकलं स्कन्धेनोदुह्य देशाद्देशान्तरं परिभ्रमन्ती पतिव्रताप्रतीतिं लेभे बहुविधाश्च पूजाः । पुनरवन्तिराजानुग्रहादतिमहत्या भूत्या न्यवसत् । अथ

पदचन्द्रिका ।

भक्षयितुम् । अक्षमोऽसमर्थः । निशि रात्रौ । अपासरदगच्छत् । 'सृ गतौ' इत्यस्य रूपम् । मांसं च प्रसिद्धम् । असृग्रक्तम् । क्षुत्क्षुधा । पिपासा तृट् । अवनिपृष्ठे महीतले । गहनोद्देशे वनप्रदेशे । 'गहनं काननं वनम्' इत्यमरः । इङ्गुदी भाषया 'हिंगणबेट' इति प्रसिद्धः । 'इङ्गुदी तापसतरुः' इत्यमरः । आमिषं मांसम् । आत्मनिर्विशेषमात्मतुल्यम् । रिरंसया रन्तुमिच्छया । बलात्कारमिति क्रियाविशेषणम् । अरीरमत्क्रीडांचक्रे । निवृत्तं परावृत्यागतम् । उदकाभ्यर्थिनं जलकाङ्क्षिणम् । कूपादन्धोः । 'पुंस्येवान्धुः प्रहिः कूपः' इत्यमरः । रुजति । 'रुज व्यथने' । व्यथां प्राप्नोतीत्यर्थः । उदञ्चनं जलनिष्कासनपात्रम् । 'उत्सेचनं सेकपात्रं तथोदञ्चनमित्यपि' इति वैजयन्ती । भाषया 'डोल' इति । सरज्जु सदोरकम् । पुरोऽग्रे चिक्षेप । त्यक्तवतीत्यर्थः । विकलं विह्वलम् । प्रतीतिं ख्यातिम् । भूत्यैश्वर्येण ।

भूषणा ।

गवलो महिषेऽस्त्री तु तस्य शृङ्गेऽपि वर्तते' इति वैजयन्ती । गहनोद्देशे । 'गहनं काननं वनम्' इत्यमरः । इङ्गुदी तापसतरुः । एवमेवामरः । बलात्कारम् । क्रि-

लघुदीपिका ।

महिषेऽस्त्री तु तस्य शृङ्गेऽपि वर्तते' इति वैजयन्ती । गहनोद्देशे । 'गहनं काननं

पाठा०–१ 'अरिनिकृत्त'.

भागव्यापिनावुन्मग्नचूचुकौ विशालारम्भशोभिनौ पयोधरौ, धनधान्यपुत्रभूयस्त्वचिह्नलेखालाञ्छिततले स्निग्धोदग्रकोमलनखमणी ऋज्वनुपूर्ववृत्तताम्राङ्गुली संनतांसदेशे सौकुमार्यवत्यौ निमग्नपर्वसंधी च बाहुलते, तन्वी कम्बुवृत्तबन्धुरा च कंधरा, वृत्तमध्यविभक्तरागाधरम् अंसक्षिप्तचारुचिबुकम् आपूर्णकठिनगण्डमण्डलम् संगतानुवक्रनीलस्निग्धभ्रूलतम् अनतिप्रौढतिलकुसुमसदृशनासिकम् असितधवलरक्तत्रिभागभासुरमधुराधीरसंचारमन्थरायतेक्षणम् इन्दुशकलसुन्दरललाटम् इन्द्रनीलशिलाकाररम्यालकपङ्क्ति द्विगुणकुण्डलितम्लाननालीकनाललिततलम्बश्रवणपाशयुगलमाननकमलम्, अनतिभङ्गुरो बहुलः पर्यन्तेऽप्यकपिलरुचिरायामवानेकैकनिसर्गसमस्निग्धनीलो गन्धग्राही च मूर्धजकलापः। सेयमाकृतिर्न व्यभिचरति शीलम्। आसज्जति च मे हृदयमस्यामेव । तत्परीक्ष्यैनामुद्वहेयम् । अविमृश्यकारिणां हि नियत-

---

### पदचन्द्रिका ।

तनुतरमतिसूक्ष्मम् । चुचूकं कुचाग्रम् । 'चूचुकं तु कुचाग्रं स्यात्' इत्यमरः। पयोधरौ स्तनौ । पुत्रभूयस्त्वं पुत्रबाहुल्यम् । अंसः स्कन्धः । कम्बुः शङ्खः । 'शङ्खः स्यात्कम्बुरस्त्रियौ' इत्यमरः । कन्धरा ग्रीवा । चिबुकं हनुः । इन्दुशकलमर्धचन्द्रः । नालीकं कमलम् । 'नालीकः शरशल्याङ्गेष्वब्जखण्डे नपुंसकम्' इति मेदिनी । श्रवणपाशः कर्णपाशः । कपिलरुचिः पिङ्गलरुचिः। 'कडारः कपिलः पिङ्गः' इत्यमरः । आयामो दैर्घ्यम् । मूर्धजकलापः केशकलापः । आसजति । सक्तं भवतीत्यर्थः । उद्वहेयम् । उद्वहामीत्यर्थः । अनुशयः पश्चात्तापः ।

### भूषणा ।

तु नितम्बस्थौ द्वयहीने ककुन्दरे' इत्यमरः । चूचुकं कुचाग्रम् । 'चूचुकं तु कुचाग्रं स्यात्' इत्यमरः । 'स्निग्धोन्नताग्रतनुताम्रनखौ कुमार्याः पादौ समोपचितचारुनिगूढगुल्फौ । श्लिष्टाङ्गुली कमलकान्तितलौ च यस्यास्तामुद्वहेद्यदि भुवोऽधि-

### लघुदीपिका ।

इत्यजयः । ककुन्दरः । 'कूपकौ तु नितम्बस्थौ द्वयहीने ककुन्दरे' । 'चूचुकं तु कुचाग्रं स्यात्' । अथ च । तथापीत्यर्थः । साकूतं साभिप्रायम् । 'आकूतं स्यादभिप्रायः' ।

---

पाठा०–१ 'उन्मुखाननचूचुकौ'. २ 'स्निग्धोदर'. ३ 'असंगता'. ४ 'मधुरधीरं'. ५ 'अथ च तत्'.

मनेकाः पतन्त्यनुशयपरम्पराः' इति । स्निग्धदृष्टिराचष्ट—'भद्रे, कच्चिदस्ति कौशलं शालिप्रस्थेनानेन संपन्नमाहारमस्मानभ्यवहारयितुम्' इति । ततस्तया वृद्धदासी साकूतमालोकिता । तस्य हस्तात्प्रस्थमात्रं धान्यमादाय क्वचिदलिन्दोद्देशे सुसिक्तसंमृष्टे दत्तपादशौचमुपावेशयत् । सा कन्या तान्गन्धशालीन्संक्षुद्य मात्रया विशोष्यातपे मुहुर्मुहुः परिवर्त्य स्थिरसमायां भूमौ नालीपृष्ठेन मृदुमृदु घट्टयन्ती तुषैरखण्डैस्तण्डुलान्पृथक्चकार । जगाद च धात्रीम्—'मातः, एभिस्तुषैरर्थिनो भूषणमृजाक्रियाक्षमैः स्वर्ण-

---

पदचन्द्रिका ।

'भवेदनुशयो द्वेषे पश्चात्तापानुबन्धयोः' इति विश्वः । प्रस्थं मानविशेषः । 'माष-टङ्काक्षबिल्वानि कुडवः प्रस्थमाढकम् । राशिर्गोणी खारिकेति यथोत्तरचतुर्गुणम्' इति शार्ङ्गधरोक्तेः । शेरचतुष्कपरिमाणमिति यावत् । अभ्यवहारयितुं भोजयितुम् । साकूतं साभिप्रायम् । 'आकूतं स्यादभिप्रायः' इति हलायुधः । अलिन्दं देहली । सा कन्या । मात्रयाऽल्पपरिमाणेन । 'मात्रा परिच्छदे वर्णमानेऽल्पे' इति रत्नमाला । आतप उष्णे । मृदुमृदु । शनैःशनैरित्यर्थः । मृजा शुद्धिः । काकि-

भूषणा ।

पतित्वमिच्छेत् । मत्स्याङ्कुशाब्जयववज्रहलासिचिह्नावस्वेदनौ मृदुतलौ चरणौ प्रशस्तौ । जङ्घे च रोमरहिते विपुले सुवृत्ते जानुद्वयं सममतुल्यमसंधिदेशम् ॥ ऊरू घनौ करिकरप्रतिमावरोमावश्वत्थपत्रसदृशं विपुलं च गुह्यम् ॥ विस्तीर्णमांसोपचितो नितम्बो गुरुश्च धत्ते रशनाकलापम् । नाभिर्गभीरा विपुलाङ्गनानां प्रदक्षिणावर्तगता च शस्ता ॥ मध्यं स्त्रियास्त्रिवलनान्तमरोमशं च वृत्तौ घनावविषमौ कठिणावुरोजौ । रोमप्रवर्जितमुरो मृदु चाङ्गनानां ग्रीवा च कम्बुनिचितार्थसुखानि धत्ते ॥ बन्धुजीवकुसुमोपमोऽधरो मांसलो रुचिरबिम्बरूपधृक् । कुन्दकुड्मलनिभाः समा द्विजा योषितां पतिसुखामितार्थदाः ॥ दाक्षिण्ययुक्तमशठं परपुष्टहंसवल्गुप्रभाषणमदीनमसौष्ठवं च । नासा समा समपुरा रुचिरप्रशस्तौ दृङ्नीलनीरजदले द्युतिहारिणी च ॥ नो संगते नातिपृथू न लम्बे शस्ते भ्रुवौ बालशशाङ्कवक्रे । अर्धेन्दुसंस्थानमलोमशं च शस्तं ललाटं न तलं न तुङ्गम् ॥ कर्णयुग्ममपि युक्तमांसलं शस्यते मृदु समं समाहितम् । स्निग्धनीलमृदुकुञ्चितलम्बा मूर्धजाः शुभकराः शिरःस्थिताः ॥' इति वराहमिहिरः । शालिप्रस्थेन । 'प्रस्थोऽस्त्री सानुमानयोः' इत्यमरः । 'शरावाभ्यां भवेत्प्रस्थः' इति मागधपरिभाषायाम् । सपदि पादाधिकशेटकपरिमितेन शालिना । साकूतं साभिप्रायम् । 'आकूतं स्यादभिप्रायः' इति हलायुधः । मात्रयेति स्वल्पकालेन । 'स्तोकाल्पक्षुल्लकाः सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु । स्त्रियां मात्रा त्रुटिः पुंसि लवलेशकणाणवः ॥' इत्यमरः । तुषैर-

काराः । तेभ्य इमान्दत्त्वा लब्धाभिः काकिणीभिः स्थिरतराण्यनत्यार्द्राणि नातिशुष्काणि काष्ठानि मितंपचां स्थालीमुभे शरावे चाहर' इति । तथाकृते तया तांस्तण्डुलानननतिनिम्नोत्तानविस्तीर्णकुक्षौ ककुभोलूखले लोहपत्रवेष्टितमुखेन समशरीरेण विभाव्यमानमध्यतानवेन व्यायतेन गुरुणा खादिरेण मुसलेन चतुरललितक्षेपणोत्क्षेपणायासितभुजमसकृदङ्गुलीभिरुद्धृत्योद्धृत्यावहत्य शूर्पशोधितकणकिंशारुकांस्तण्डुलानसकृदद्भिः प्रक्षाल्य क्वथितपञ्चगुणे जले दत्तचुल्लीपूजा प्राक्षिपत् । प्रश्लथावयवेषु प्रस्फुरत्सु तण्डुलेषु मुकुलावस्थामतिवर्तमानेषु संक्षिप्यानलमुपहितमुखपिधानया स्थाल्यान्नमण्डमगालयत् । दर्व्या चावघट्य मात्रया परिवर्त्य समपक्वेषु सिक्थेषु तां स्थालीमधोमुखीमवातिष्ठिपत् । इन्ध-

पदचन्द्रिका ।

णीभिः । कपर्दिकाभिः । मितंपचाम् । 'मितनखे च' (३।२।३४) इति खश् । शरावे मृत्पात्रे । 'शरावो वर्धमानकः' इत्यमरः । विस्तीर्णकुक्षौ बृहदुदरे । ककुभो वृक्षः । 'ककुभो भूरुहे वीणाप्रसेवे' इति महीपः । काष्ठोलूखलमिति भावः । विभाव्यमानं संभाव्यमानम् । मध्यतानवं मध्ये कृशत्वम् । तनोर्भावस्तानवम् । व्यायतेन दीर्घेण । गुरुणा स्थूलेन । क्षेपणमधःपातनम् । उत्क्षेपणमूर्ध्वीकरणम् । असकृद्वारंवारम् । मुकुलावस्थां कलिकावस्थाम् । अन्नमण्डं भक्तपानीयम् । अवघट्य अवगाह्य-

भूषणा ।

खण्डैः । 'पृथग्विनानाना-' (२।३।३२) इति तृतीया । काकिणीभिः । 'वराटकानां दशकद्वयं स्यात्सा काकिणी' इति भास्कराचार्यः । स्थिरतराणि सारवन्ति । मितंपचाम् । 'मितनखे च' (३।२।३४) इति खश् । शरावो वर्धमानकः । 'शरावो वर्धमानकः' इत्यमरः । नातिनम्रोत्तानविस्तीर्णः कुक्षिर्यस्येत्यर्थः । किंशारुम् । 'किंशारुः सस्यशूकं स्यात्' इत्यमरः । ककुभोलूखले । 'इन्द्रद्रुः ककुभोऽर्जुनः' इत्यमरः । क्वथितपञ्चगुणम् । क्वथितं च तत्पञ्चगुणं चेत्यर्थः । मात्रया स्वल्पकालेन । परावृत्य पुनरवघट्येत्यर्थः ।

लघुदीपिका ।

इति हलायुधः । काकिणी । 'काकिणी हर्मणीवार्ता फालस्थः परिमाणकम् ।' मितंपचाम् । 'मितनखे च' (३।२।३४) इति खश् । 'शरावोऽस्त्री वर्धमानं' इति वैजयन्ती । 'अर्जुनं ककुभं प्राहुः' । 'क्लीबे लोहपत्रं च लये (?) लौहे तु मुसलाग्रगे' । 'सिर्कदी

पाठा०–१ 'नातिनिम्न'. २ 'ललितोत्क्षेपणावक्षेपण'. ३ 'चावग्राह्य'. ४ 'परावृत्य'.

नायान्तःसाराण्यम्भसा समभ्युक्ष्य प्रशमिताग्नीनि[1] कृष्णाङ्गारीकृत्य तदर्थिभ्यः प्राहिणोत्—'एभिर्लब्धाः काकिणीर्दत्त्वा शाकं घृतं दधि तैलमामलकं चिञ्चाफलं च यथालाभमानय' इति । तथानुष्ठिते च तया द्वित्रानुपदंशानुपपाद्य तदन्नमण्डमार्द्रवालुकोपहितनवशरावगतमतिमृदुना तालवृन्तानिलेन शीतलीकृत्य सलवणसंभारं दत्ताङ्गारधूपवासं च संपाद्य, तदप्यामलकं श्लक्ष्णपिष्टमुत्पलगन्धि कृत्वा धात्रीमुखेन स्नानाय तमचोदयत् । तया च स्नानशुद्ध्या दत्ततैलामलकः क्रमेण सस्नौ । स्नातः सिक्तमृष्टे कुट्टिमे फलकमारुह्य पाण्डुहरितस्य त्रिभागशेषलूनस्याङ्गणकदलीपलाशस्योपरि दत्तशरावद्वयमार्द्रमभिमृशन्[2] तिष्ठत् । सा तु तां पेयामेवाग्रे समुपाहरत् । पीत्वा चापनीताध्वक्लमः प्रहृष्टः प्रक्लिन्नसकलगात्रः स्थितोऽभूत् । ततस्तस्य शाल्योदनस्य दर्वीद्वयं दत्त्वा सर्पिर्मात्रां सूपमुपदंशं चोपजहार । इमं च दध्ना च

पदचन्द्रिका ।

त्यर्थः । अन्तःसाराण्युपर्येव दग्धानि । एभिरङ्गारैः । द्वित्रान्कतिपयान् । उपदंशाञ्शाकादीन् । उपपाद्य संपाद्य । तदन्नमण्डं पूर्वोक्तान्नमण्डम् । अचोदयत् । प्रेरयामासेत्यर्थः । सस्नौ । स्नानं चकारेत्यर्थः । सिक्तमृष्ट आदौ सिक्तः पश्चान्मृष्टः । कुट्टिमं बद्धभूमिकम् । अङ्गणे या कदली रम्भा तस्याः पलाशं पत्रं तस्योपरि । **सा त्विति** । पेया ससिक्था । 'मण्डोऽसिक्थः ससिक्था पेया, परिसिक्था यवागूः, घनसिक्था विलेपी, परिस्रुतस्त्वोदनो भक्तः, इति वाग्भटोक्तेः । ओदनस्य दर्वीद्वयं दत्त्वा । दर्वीद्वयमात्रमोदनं दत्त्वेत्यर्थः । 'दर्विः कम्बिः खजाका च' इत्यमरः । सर्पिर्मात्राम् । अल्पघृतमिति यावत् । मात्रा । 'अक्षरावयवे स्वल्पे

भूषणा ।

समभ्युक्ष्यार्द्रीकृत्य । **निरुष्णाङ्गारीकृत्येति** । यदत्र वक्तव्यं तदुक्तं वासवदत्तादर्पणे । कुट्टिमे । 'कुट्टिमोऽस्त्री निबद्धा भूः' । **त्रिभागशेषेति** । त्रिषु भागेषु यः शेषोऽग्रिमस्तत्र छिन्नस्येत्यर्थः । पलाशस्य पत्रस्य । अद्भिरार्द्रं दत्तशरावद्वयं मृशन्स्पृशन् । **पेयामिति** । पेयेति मण्डस्य नाम । सर्पिर्मात्रां घृतलेशम् । उपज-

लघुदीपिका ।

दिवि रोदनम्' (?) इति वैजयन्ती । कुट्टिमं बद्धभूमिकम् । विदंशश्चोपदंशः

पाठा०—१ 'प्रशमिताग्नीन्निरुष्णाङ्गारीकृत्य'. २ 'मार्द्रं मृशन्'.

त्रिजातकावचूर्णितेन सुरभिशीतलाभ्यां च कालशेयकाञ्जिकाभ्यां शेषमन्नमभोजयत् । सशेष एवान्धस्यसावतृप्यत् । अयाचत च पानीयम् । अथ नवभृङ्गारसंभृतगुरुधूपधूपितमभिनवपाटलाकुसुमवासितमुत्फुल्लोत्पलग्रथितसौरभं वारि नालीधारात्मना पातयांबभूव । सोऽपि मुखोपहितशरावेण हिमशिशिरकणकरालिताऽरुणायमानाक्षिपक्ष्मा धारारवाभिनन्दितश्रवणः स्पर्शसुखोद्भिन्नरोमाञ्चकर्कशकपोलः परिमलप्रवालोत्पीडफुल्लघ्राणरन्ध्रो माधुर्यप्रकर्षा[1]वर्जितरसनेन्द्रियस्तदच्छं पानीयमाकण्ठं पपौ । शिरःकम्पसंज्ञावारिता च पुनरपरकरकेणाचमनमदत्त कन्या । वृद्धया तु तदुच्छिष्टमपोह्य हरितगोमयोपलिप्ते कुट्टिमे स्वमेवोत्तरीयकर्पटं

### पदचन्द्रिका ।

मात्रा' इति मेदिनी । सूपं वरान्नम् । उपदंशं च शाकादि । त्रिजातकं त्वक्तैलं त्रिकटु वा । अवचूर्णितेन विलोडितेन । 'चूर्ण विलोडने पेषे' इति भागुरिः । कालशेयं तक्रम् । 'दण्डाहतं कालशेयमरिष्टमपि गोरसः' इत्यमरः । काञ्जिकम् । 'आरनालकसौवीरकुल्माषाभिषुतानि च । अवन्तिसोमधान्याम्लकुञ्जलानि च काञ्जिके' इत्यमरः । अन्धस्योदने । 'भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री स दीदिविः' इत्यमरः । पानीयं जलम् । **अथेति** । 'भृङ्गारः कनकालुका' इत्यमरः । धारात्मना । अविरलधारयेत्यर्थः । हरितगोमयम् । 'गोश्च पुरीषे' (४।३।१४५) इति मयट् । कर्पटं

### भूषणा ।

द्वार समीपे परिवेषितवती । उपदंशः । 'उपदंशस्तु भक्षणम्' । त्रिजातकं त्वक्तैलम् । कालशेयम् । 'दण्डाहतं कालशेयमरिष्टमपि गोरसः' इत्यमरः । कलशिर्घटस्तत्र भवम् । 'दृतिकुक्षिकलशि–' (४।३।५६) इति ढञ् । काञ्जिकम् । 'आरनालकसौवीरकुल्माषाभिषुतानि च । अवन्तिसोमधान्याम्लकुञ्जलानि च काञ्जिके' इत्यमरः । अन्धस्योदने । 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इत्यमरः । हिमशिशिरेतीन्द्रियतृप्तिरुक्ता । उक्तं च माघेऽपि–'क्रान्तकान्तवदनप्रतिबिम्बे भग्नबालसहकारसुगन्धौ । स्वादुनि प्रणुदितालिनि शीते निर्ववार मधुनीन्द्रियवर्गः ॥' इति । माधुर्यप्रकर्षेणावर्तितं

### लघुदीपिका ।

स्यात्' । त्रिजातकं यत्तैलं तत्रिकटुकम् । अवचूर्णितेन विलोडितेन । 'चूर्ण विलेपने पेषे' इति भागुरिः । कालशेयम् । 'दण्डाहतं कालशेयमरिष्टमपि गोरसः' । काञ्जिकम् । 'आरनालकसौवीरकुल्माषाभिषुतानि च । अवन्तिसोमधान्याम्लकुञ्जलानि च काञ्जिके ॥' अन्धसि । 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' । कवलित-

पाठा०–१ 'वर्तित'.

व्यवधाय क्षणमशेत । परितुष्टश्च विधिवदुपयम्य कन्यां निन्ये । नीत्वैतदनपेक्षः काममपि गणिकामवरोधमकरोत् । तामप्यसौ प्रियसखीमिवोपाचरत् । पतिं च दैवतमिव मुक्ततन्द्रा पर्यचरत् । गृहकार्याणि चाहीनमन्वतिष्ठत् । परिजनं च दाक्षिण्यनिधिरात्माधीनमकरोत् । तद्गुणवशीकृतश्च भर्ता सर्वमेव कुटुम्बं तदायत्तमेव कृत्वा तदेकाधीनजीवितशरीरस्त्रिवर्गं निर्विवेश । तद्ब्रवीमि—'गृहिणः प्रियहिताय दारगुणाः' इति ।

ततस्तेनानुयुक्तो निम्बवतीवृत्तमाख्यातवान्—'अस्ति सौराष्ट्रेषु वलभी नाम नगरी । तस्यां गृहगुप्तनाम्नो गुह्यकेन्द्रतुल्यविभवस्य नाविकपतेर्दुहिता रत्नवती नाम । तां किल मधुमत्याः समुपागम्य बलभद्रो नाम सार्थवाहपुत्रः पर्यणैषीत् । तयापि नववध्वा रहसि रभसविघ्नितसुरतसुखो झटिति द्वेषमल्पेतरं बबन्ध । न तां पुनर्द्रष्टुमिष्टवान् । तद्गृहागमनमपि सुहृद्वाक्यशतातिवर्ती लज्जया परिजहार । तां च दुर्भगां तदाप्रभृत्येव 'नेयं रत्नवती, निम्बवती चेयम्' इति स्वजनः परजनश्च[1] परिबभूव । गते च कस्मिंश्चित्कालान्तरे सा त्वनुतप्यमाना 'का मे गतिः' इति विमृशन्ती काममपि वृद्धप्रव्राजिकां[2] मातृस्थानीयां देवशेष-

---

पदचन्द्रिका ।

जीर्णवस्त्रम् । अशेत निद्रां चकार । असौ कन्या तां गणिकाम् । मुक्ततन्द्रा त्यक्तालस्या । अहीनमत्यर्थम् । दाक्षिण्यनिधिर्दक्षिणस्य भावस्तथा । तदायत्तं तदधीनम् । त्रिवर्गं धर्मार्थकामायत्तम् । **अस्तीति** । नाविका नौभिर्जीवन्तीति तथा । मधुमत्या नगर्याः । पर्यणैषीत्परिणयनमकरोत् । अल्पेतरम् । बहित्यर्थः । सुहृद्वाक्यं मित्रवाक्यम् । दुर्भगां दुरदृष्टाम् । सा निम्बवती । अनुतप्यमानानुतापं प्राप्तवती । देवशेषकुसुमैर्निर्माल्यपुष्पैः । तयापि वृद्धपरित्राजिकया

भूषणा ।

परावृत्तम् । त्रिवर्गम् । 'त्रिवर्गो धर्मकामार्थैः' इत्यमरः । वृद्धपरिव्राजिकां वृद्ध-

लघुदीपिका ।

सुज्वलितम् । त्रिवर्गं धर्मार्थकामान् । वृद्धपरिव्राजिकां वृद्धसंन्यासिनीम् ।

---

पाठा०—१ 'परिजनस्य'. २ 'परिव्राजिकाम्'.

कुसुमैरुपस्थितामपश्यत् । तस्याः पुरो रहसि सकरुणं रुरोद । तयाप्यश्रुमुख्या बहुप्रकारमनुनीय रुदितकारणं पृष्टा त्रपमाणापि कार्यगौरवात्कथंचिदब्रवीत्—'अम्ब, किं ब्रवीमि । दौर्भाग्यं नाम जीवन्मरणमेवाङ्गनानाम्, विशेषतश्च कुलवधूनाम् । तस्याहमस्म्युदाहरणभूता । मातृप्रमुखोऽपि ज्ञातिवर्गो मामवज्ञयैव पश्यति । तेन सुदृष्टां मां कुरु । न चेत्त्यजेयमद्यैव निष्प्रयोजनान्प्राणान् । आविरामाच्च मे रहस्यं नाश्राव्यम्' इति पादयोः पपात । सैनामुत्थाप्योद्बाष्पोवाच—'वत्से, माऽध्यवस्यः साहसम् । इयमस्मि त्वन्निदेशवर्तिनी । यावति ममोपयोगस्तव तावति भवाम्यनन्याधीना । यद्येवासि निर्विण्णा तपश्चर त्वं मदधिष्ठिता पारलौकिकाय कल्याणाय । नन्वयमुदर्कः प्राक्तनस्य दुष्कृतस्य, यदनेनाकारेणेदृशेन शीलेन जात्या चैवंभूतया समनुगता सती अकस्मादेव भर्तृद्वेष्यतां गतासि । यदि कश्चिदस्त्युपायः पतिद्रोहप्रतिक्रियायै दर्शयामुम्, मतिर्हि ते पटीयसी' इति । अथासौ कथंचित्क्षणमधोमुखी ध्यात्वा दीर्घोष्णश्वासपूर्वमवोचत्—'भगवति, पतिरेव दैवतं वनितानाम्, विशेषतः कुलजानाम् । अतस्तच्छुश्रूषणाभ्युपायहेतुभूतं किंचिदाचरणीयम् । अस्त्यस्मत्प्रातिवेश्यो वणिगभिजनेन विभवेन राजा-

---

पदचन्द्रिका ।

वृद्धसंन्यासिन्या रुदितकारणं रोदननिदानम् । त्रपमाणा लज्जावती । मरणमेवाङ्गनानां स्त्रीणाम् । त्यजेयम् । त्यजामीत्यर्थः । निष्प्रयोजनानकिंचित्करान् । रहस्यं गोप्यम् । सा वृद्धसंन्यासिनी । एनां निम्बवतीम् । उद्बाष्पोद्गतबाष्पा । साहसमुद्योगः । निदेश आज्ञा । यावति तावतीति । प्रयोजन इत्यर्थः । परलोके भवं पारलौकिकम् । 'उदर्कः फलमुत्तरम्' इत्यमरः । आकारः शरीराकृतिः । शीलं स्वभावः । जात्या विशिष्टकुलया । **यदीति** । पटीयस्यतिशयेन पटुः । असौ निम्बवती । **अस्तीति** । प्रातिवेश्यः प्रतिवेशवर्ती । वणिग्वाणिज्यकर्ता । अभि-

भूषणा ।

संन्यासिनीम् । अनुनीय दुःखापनोदनं कृत्वा । सैव वृद्धा वदति यद्येवमिति । उदर्क उत्तरं फलम् । 'उदर्कः फलमुत्तरम्' इत्यमरः । तन्मातृप्रार्थनमित्यभिधाय । नाम शब्दग्रहेत्यर्थे । प्रतिवेशे समीपगृहे भवः प्रातिवेश्यः । वाणिज्यं वणिग्व्या-

लघुदीपिका ।

'उदर्कः फलमुत्तरम्' । 'वाणिज्यं व्यवहारः स्यात्' । दासी । 'चेटी चिरण्टी

न्तरङ्गभावेन च सर्वपौरानतीत्य वर्तते । तस्य कन्या कनकवती नाम मत्समानरूपावयवा ममातिस्निग्धा सखी । तया सह तद्विमानहर्म्यतले ततोऽपि द्विगुणमण्डिता विहरिष्यामि । त्वया तु तन्मातृप्रार्थनं सकरुणमभिधाय मत्पतिरेतद्गृहं कथंचनानेयः । समीपगतेषु च युष्मासु क्रीडामत्ता नाम कन्दुकं भ्रंशयेयम् । अथ तमादाय तस्य हस्ते दत्त्वा वक्ष्यसि—'पुत्र, तवेयं भार्यासखी निधिपतिदत्तस्य सर्वश्रेष्ठिमुख्यस्य कन्या कनकवती नाम । त्वामियमनवस्थो निष्करुणश्चेति रत्नवतीनिमित्तमत्यर्थं निन्दति । तदेष कन्दुको विपक्षधनं प्रत्यर्पणीयम्' इति । स तथोक्तो नियतमुन्मुखीभूय तामेव प्रियसखीं मन्यमानो मां बद्धाञ्जलि याचमानायै मह्यं भूयस्त्वत्प्रार्थितः साभिलाषमर्पयिष्यति । 'तेन रन्ध्रेणोपश्लिष्य रागमुज्ज्वलीकृत्य यथासौ कृतसंकेतो देशान्तरमादाय मां गमिष्यति तथोपपादनीयम्' इति । हर्षाभ्युपेतया चानया तथैव संपादितम् । अथैतां कनकवतीति वृद्धतापसीविप्रलब्धो बलभद्रः सरत्नसाराभरणामादाय निशि नीरन्ध्रे तमसि प्रावसत् । सा तु तापसी वार्तामापादयत्—'मन्देन मया निर्निमित्तमुपेक्षिता रत्नवती, श्वशुरौ च परिभूतौ, सुहृदश्चातिवर्तिताः । तदत्रैव संसृष्टो जीवितुं जिह्रेमीति बलभद्रः पूर्वेद्युर्मामकथयत् । नूनमसौ तेन नीता व्यक्तिश्चाचिराद्भविष्यति' इति । तच्छ्रुत्वा तद्बान्धवास्तदन्वेषणां प्रति शिथिलयत्नास्तस्थुः । रत्नवती तु मार्गे कांचित्पण्यदासीं संगृह्य तयोह्यमानपाथेयाद्युपस्करा खेटकपुरमगमत् । अमुत्र च व्यवहारकुशलो बलभद्रः स्वल्पेनैव

पदचन्द्रिका ।

जनेन कुलीनतया । विभवेन सामर्थ्येन । अतीत्यातिक्रम्य । तयेति वृद्धसंन्यासिनीं प्रति । तन्मातृप्रार्थनं कनकवतीमातृप्रार्थनमिति । अभिधायोक्त्वा मत्पतिर्मद्भर्ता । तं कन्दुकम् । याचमानायै प्रार्थ्यमानायै । साभिलाषमभिलाषसहितम् । रन्ध्रेण मिषेण । उपश्लिष्यालिङ्ग्य । रागमिच्छाम् । उज्ज्वलीकृत्य । प्रकटीकृत्येत्यर्थः । **अथेति** । नीरन्ध्रे तमसि गाढान्धकारे । अतिवर्तिता अतिक्रान्ताः । 'चेटी चिरण्टी दासी च' इति वैजयन्ती । पाथेयं मार्गे भक्षणसामग्री । खेटकपुरसल्प-

२० द० कु०

मूलेन महद्धनमुपार्जयत् । पौराग्रगण्यश्चासीत् । परिजनश्च भूयानर्थवशात्समाजगाम । ततस्तां प्रथमदासीम् 'न कर्म करोषि, दृष्टं मुष्णासि, अप्रियं ब्रवीषि' इति परुषमुक्त्वा बह्वताडयत् । चेटी तु प्रसादकालोपाख्यातरहस्यस्य वृत्तान्तैकदेशमात्तरोषा निर्बिभेद । तच्छ्रुत्वा लुब्धेन तु दण्डवाहिना पौरवृद्धसंनिधौ 'निधिपतिदत्तस्य कन्यां कनकवतीं मोषेणापहृत्यास्मत्पुरे निवसत्येष दुर्मतिर्बलभद्रः । तस्य सर्वस्वहरणं न भवद्भिः प्रतिबन्धनीयम्' इति नितरामभर्त्सयत[1] । भीतं च बलभद्रमभिजगाद रत्नवती— 'न भेतव्यम् । ब्रूहि, नेयं निधिपतिदत्तकन्या कनकवती । वलभ्यामेव गृहगुप्तदुहिता रत्नवती नामेयं दत्ता पितृभ्यां मया च न्यायोढा । न चेत्प्रतीथ[2] प्रणिधिं प्रहिणुतास्या बन्धुपार्श्वम्' इति । बलभद्रस्तु तथोक्त्वा श्रेणीप्रातिभाव्येन तावदेवातिष्ठद्यावत्तत्पुरलेख्यलब्धवृत्तान्तो गृहगुप्तः खेटकपुरमागत्य सहजामात्रा दुहितरमतिप्रीतः प्रत्यनैषीत् । तथा दृष्ट्वा रत्नवती कनकवतीति भावयतस्तस्यैव बलभद्रस्यातिवल्लभा जाता । तद्ब्रवीमि—'कामो नाम संकल्पः' इति ।

तदनन्तरमसौ नितम्बवतीवृत्तान्तमप्राक्षीत् । सोऽहमब्रवम्—'अस्ति शूरसेनेषु मथुरा नाम नगरी । तत्र कश्चित्कुलपुत्रः

---

पदचन्द्रिका ।

नगरम् । मूलेन मूलधनेन । उपाख्यातरहस्यस्य कथितैकान्तवृत्तस्य । दण्डवाहिना दण्डाधिकारिणा । न्यायोढा न्यायमार्गेणोढा । परिणीतेत्यर्थः । प्रणिधिः सेवकः । **अस्तीति** । शूरसेनेषु देशेषु । 'कुलपुत्रः कुलीने च शूद्रे च' इति वैजयन्ती । कलासु

भूषणा ।

पारः । 'वाणिज्यं तु वणिज्या स्यात्' इत्यमरः । दासी चेटी । दण्डवाहिना दण्डधारिणा । अतर्ज्यत तर्जितः । प्रत्ता दत्ता 'अच उपसर्गात्' (७।४।४७) इति तः ।

लघुदीपिका ।

दासी च' इति वैजयन्ती । दण्डवाहिना दण्डाधिकारिणा । प्रत्ता दत्ता । कुल-

---

पाठा०—१ 'अतर्जयत'. २ 'प्रतीतिरस्मिन्नर्थे'.

कलासु गणिकासु चातिरक्तः, मित्रार्थं स्वभुजमात्रनिर्व्यूढानेककलहः, कलहकण्टक इति कर्कशैरभिख्यापिताख्यः प्रत्यवात्सीत् । स चैकदा कस्यचिदागन्तोश्चित्रकरस्य हस्ते चित्रपटं ददर्श । तत्र काचिदालेख्यगता युवतिरालोकमात्रेणैव कलहकण्टकस्य कामातुरं चेतश्चकार । स च तमब्रवीत्—'भद्र, विरुद्धमिवैतत्प्रतिभाति । यतः कुलजादुर्लभं वपुः, आभिजात्यशंसिनी च नम्रता, पाण्डुरा च मुखच्छविः, अनतिपरिभुक्तसुभगा च तनुः, प्रौढतानुविद्धा च दृष्टिः । न चैषा प्रोषितभर्तृका, प्रवासचिह्नस्य वेण्यादे[2]रदर्शनात् । लक्ष्म चैतद्दक्षिणपार्श्ववर्ति । तदियं वृद्धस्य कस्यचिद्वणिजो नातिपुंस्त्वस्य यथार्हसंभोगालाभपीडिता गृहिणी त्वयातिकौशलाद्यथादृष्टमालिखिता भवितुमर्हति' इति । तमभिप्रशस्याशंसत्—'सत्यमिदम् । अवन्तिपुर्यामुज्जयिन्यामनन्तकीर्तिनाम्नः सार्थवाहस्य भार्या यथार्थनामा नितम्बवती नामैषा सौन्दर्यविस्मितेन मयैवमालिखिता' इति । स तदैवोन्मनायमानस्तद्दर्शनाय परिवव्राजोज्जयिनीम् । भार्गवो नाम भूत्वा भि[3]क्षानिभेन

पदचन्द्रिका ।

चतुःषष्टिकलासु । गणिकासु वेश्यासु । स्वभुजा स्वबाहुः । 'भुजा बाहा' इति स्त्रीलिङ्गावपि शब्दौ । निर्व्यूढो दृढीकृतः । स च कलहकण्टकः । तं चित्रकारम् । **भद्रेति** । अभिजातस्य भाव आभिजात्यम् । 'अभिजातः कुलीनः स्यात्' इत्यमरः । पाण्डुरा शुभ्रा । 'शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डुराः' इत्यमरः । अनतिपरिभुक्ताऽलब्धातिभोगा । प्रौढतानुविद्धा प्रौढतासद्म । वेणी कचबन्धः । 'वेणी कचस्य बन्धे स्यान्नदीनां संगमेऽपि च' इति विश्वः । संभोगस्यालाभोऽप्राप्तिस्तेन पीडिता । सौन्दर्यं सुन्दरस्य भावस्तथा । उन्मनायमान उन्मनायतेऽसौ तथा । परिवव्राज । अगच्छदित्यर्थः । भार्गवो ज्यौतिषिकः । 'भार्गवौ शुक्रदैवज्ञौ' इति

भूषणा ।

कुलपुत्रः शूद्रः । 'कुलपुत्रः कुलीने च शूद्रे' इति । **निर्व्यूढ इति** । उत्पादितानेककलहः । परिवव्राज । सर्वं परित्यज्य वव्राजेत्यर्थः । लक्ष्म नखक्षतरूपं चिह्नम् ।

लघुदीपिका ।

पुत्रः शूद्रः । 'कुलपुत्रः कुलीने च शूद्रे च' । नातिपरिभुक्तसुलभा अलब्धातिभोगा नारी असुलभा (?) । 'अलब्धा प्रौढनासमे' । लक्ष्म चैतद्दक्षिणपार्श्ववर्ति ।

पाठा०-१ 'परिवव्राज'. २ 'एकवेण्यादेः'. ३ 'भिक्षामिषेण'.

तद्गृहं प्रविश्य तां ददर्श । दृष्ट्वा चात्यारूढमन्मथो निर्गत्य पौरमुख्येभ्यः श्मशानरक्षामयाचत । अलभत च । तत्र लब्धैश्च शवावगुण्ठनपटादिभिः कामप्यर्हन्तिकां नाम श्रमणिकामुपासांचक्रे । तन्मुखेन च नितम्बवतीमुपांशु मन्त्रयामास । सा चैनां निर्भर्त्सयन्ती प्रत्याचचक्षे । श्रमणिकामुखाच्च दुष्करशीलभ्रंशां कुलस्त्रियमुपलभ्य रहसि दूतिकामशिक्षयत्—'भूयोऽप्युपतिष्ठ सार्थवाहभार्याम् । ब्रूहि चोपह्वरे, संसारदोषदर्शनात्समाधिमास्थाय मुमुक्षमाणो मादृशो जनः कुलवधूनां शीलपातने घटत इति क्व घटते । एतदपि त्वामत्युदारया समृद्ध्या रूपेणातिमानुषेण प्रथमेन वयसोपपन्नां किमितरनारीसुलभं चापलं स्पृष्टं न वेति परीक्षा कृता । तुष्टास्मि तवैवमदुष्टभावतया । त्वामिदानीमुत्पन्नापत्यां द्रष्टुमिच्छामि । भर्ता तु भवत्याः केनचिद्ग्रहेणाधिष्ठितः पाण्डुरोगदुर्बलो भोगे चासमर्थः स्थितोऽभूत् । न च शक्यं तस्य विघ्नमप्रतिकृत्यापत्यमस्माल्लब्धुम् । अतः प्रसीद । वृक्षवाटिकामेकाकिनी प्रविश्य मदुपनीतस्य कस्यचिन्मन्त्रवादिनश्छन्नमेव हस्ते चरणमर्पयित्वा तदभिमन्त्रितेन प्रणयकुपिता नाम भूत्वा भर्तारमुरसि प्रहर्तुमर्हसि । उपर्यसावुत्तमधातुपुष्टिमूर्जितापत्योत्पादन-

पदचन्द्रिका ।

वैजयन्ती । निभं मिषम् । 'निभो व्याजसदृक्षयोः' इति विश्वः । **दृष्ट्वा चेति** । अत्यारूढमन्मथोऽतिप्रवृद्धमदनः । पौरमुख्येभ्यः पौरश्रेष्ठेभ्यः । तत्र श्मशाने । लब्धैः प्राप्तैः । अवगुण्ठनपटः शववेष्टितवस्त्रम् । अर्हन्तिकां बौद्धपरिव्राजिकाम् । तन्मुखेन श्रमणिकामुखेन । उपांशु रहसि । मन्त्रयामास । भेदयामासेत्यर्थः । भ्रंशो नाशः । घटत ईहते । 'घट चेष्टायाम्' । क्व घटते क्व संगच्छते । 'घट योजने' । अतिमानुषेण मानुषमतिक्रम्य वर्तत इति तथा । अदुष्टभावः सुभावः । उत्पन्नापत्यां जातापत्याम् । भोगे विषयसङ्गे । अप्रतिकृत्य । अप्रतीकारं कृत्वेत्यर्थः । ऊर्जितापत्यं समीचीनापत्यम् । नक्तं रात्रौ । उपग्राहि-

भूषणा ।

भार्गवो ज्यौतिषिकः । 'भार्गवौ शुक्रदैवज्ञौ' । उपनिमन्त्रयामास भेदयामास । घटत

लघुदीपिका ।

'अलब्धभोगपर्याप्तिस्वैरिण्याश्चैव गोत्रयोः' इति । दक्षसंधे त्वसूर्यत्वरितं

पाठा०-१ 'उपनिमन्त्रयामास'.

क्षमामासादयिष्यति । अनुवर्तिष्यते देवीमिवात्रभवतीम् । नात्र शङ्का कार्या' इति । सा तथोक्तं व्यक्तमभ्युपेष्यति । नक्तं मां वृक्षवाटिकां प्रवेश्य तामपि प्रवेशयिष्यसि । तावतैव त्वयाहमनुगृहीतो भवेयम्' इति । सा तथैवोपग्राहितवती । सोऽतिप्रीतस्तस्यामेव क्षपायां वृक्षवाटिकायां गतो नितम्बवतीं निर्ग्रन्थिकाप्रयत्नेनोपनीतां पादे परामृशन्निव हेमनूपुरमेकमाक्षिप्य छुरिकयोरुमूले किंचिदालिख्य द्रुततरमपासरत् । सा तु सान्द्रत्रासा स्वमेव दुर्णयं गर्हमाणा जिघांसन्तीव श्रमणिकां तद्व्रणं भवनदीर्घिकायां प्रक्षाल्य दत्त्वा पटबन्धनं सामयापदेशादपरं चापनीय नूपुरं शयनपरा त्रिचतुराणि दिनान्येकान्ते निन्ये । स धूर्तः 'विक्रेष्ये' इति तेन नूपुरेण तमनन्तकीर्तिमुपाससाद । स दृष्ट्वा 'मम गृहिण्या एवैष नूपुरः, कथमयमुपलब्धस्त्वया ?' इति तमत्रुवाणं निर्बन्धेन पप्रच्छ । स तु 'वणिग्ग्रामस्याग्रे वक्ष्यामि' इति स्थितोऽभूत् । पुनरसौ गृहिण्यै 'स्वनूपुरयुगलं प्रेषय' इति संदिदेश । सा च सलज्जं ससाध्वसं चाद्य रात्रौ विश्रामप्रविष्टायां वृक्षवाटिकायां प्रभ्रष्टो ममैकः प्रशिथिलबन्धो नूपुरः । सोऽद्याप्यन्विष्टो न दृष्टः । स पुनरयं द्वितीय इत्यपरं प्राहिणोत् । अनया च वार्तयामुं पुरस्कृत्य स वणिग्वणिग्जनसमाजमाजगाम । स चानुयुक्तो धूर्तः सविनयमावेदयत्—'विदितमेव खलु वः, यथाहं युष्मदाज्ञया पितृवनमभिरक्ष्य तदुपजीवी प्रतिवसामि । लुब्धाश्च कदाचिन्मद्दर्शनभीरवो निशि दहेयुरपि शवानीति निशास्वपि श्मशानमधिशये । अपरेद्युर्दग्धादग्धं मृतकं चितायाः प्रसभमा-

पदचन्द्रिका ।

तवत्यङ्गीकृतवती । निर्ग्रन्थिका भिक्षुकी । सान्द्रत्रासा निबिडभया । पटबन्धनं वस्त्रबन्धनम् । गृहिणी योषित् । नूपुरः पादभूषणम् । 'मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः । प्रशिथिलबन्धः श्लथबन्धः । पितृवनं श्मशानम् । तदुपजीवी श्मशानजीवी । मद्दर्शनभीरवो मद्दर्शनभयशीलाः । दग्धं ज्वलितम् । मृतकं शवम् ।

भूषणा ।

ईहते । 'घट चेष्टायाम्' । क्व घटते संगच्छते । वृक्षवाटिका गृहोपवनम् । 'गेहोपवने वृक्षवाटिका' इत्यमरः । निर्ग्रन्थिका श्रमणिका । न दृष्टो न लब्धः । स नूपुरः । दहेयुरपि । अपिः संभावनायाम् । अगत्यन्तरां गत्यन्तरशून्याम् । अन-

पाठा०–१ 'अपचारेण'.

कर्षन्तीं श्यामाकारां नारीमपश्यम् । अर्थलोभात्तु निगृह्य साध्वसं सा संगृहीता। शस्त्रिकयोरुमूले यदृच्छया किंचिदुल्लिखितम्। एष च नूपुरश्चरणादाक्षिप्तः । तावत्येव द्रुतगतिः सा पलायिष्ट । सोऽयमस्यागमः । परं भवन्तः प्रमाणम्' इति । विमर्शेन च तस्याः शाकिनीत्वमैकमत्येन पौराणामभिमतमासीत् । भर्त्रा च परित्यक्ता तस्मिन्नेव श्मशाने बहु विलप्य पाशेनोद्बध्य मर्तुकामा तेन धूर्तेन नक्तमगृह्यत। अनुनीता च—'सुन्दरि, त्वदाकारोन्मादितेन मया त्वदावर्जने बहूनुपायान्भिक्षुकीमुखेनोपन्यस्य तेष्वसिद्धेषु पुनरयमुपायो यावज्जीवमसाधारणीकृत्य रन्तुमाचरितः । तत्प्रसीदानन्यशरणायास्मै दासजनाय' इति मुहुर्मुहुश्चरणयोर्निपत्य, प्रयुज्य सान्त्वशतानि, तामगत्यन्तरामात्मवश्यामकरोत् । तदिदमुक्तम्— 'दुष्करसाधनं प्रज्ञा' इति ।

इदमाकर्ण्य ब्रह्मराक्षसो मामपूपुजत् । अस्मिन्नेव क्षणे नातिप्रौढपुंनागमुकुलस्थूलानि मुक्ताफलानि सह सलिलबिन्दुभिरम्बरतलादपतन् । अहं तु 'किं न्विदम्' इत्युच्चक्षुरालोकयन्कमपि राक्षसं कांचिदङ्गनां विचेष्टमानगात्रीमाकर्षन्तमपश्यम् । कथमपहरत्यकामामपि स्त्रियमनाचारो नैर्ऋतः' इति गगनगमनमन्दशक्तिरशस्त्रश्चातप्ये । स तु मत्संबन्धी ब्रह्मराक्षसः 'तिष्ठ तिष्ठ पाप, कापहरसि' इति भर्त्सयन्नुत्थाय राक्षसेन समसृज्यत । तां तु रोषादनपेक्षापविद्धाममरवृक्षमञ्जरीमिवान्तरिक्षादापतन्तीमुन्मुखप्रसारितोभयकरः कराभ्यामग्रहीषम् । उपगृह्य च वेपमानां संमीलिताक्षीं मदङ्गस्पर्शसुखेनोद्भिन्नरोमाञ्चां तादृशीमेव तामनवतारयन्नतिष्ठम् । तावत्तावुभावपि शैलशृङ्गभृङ्गैः पादपैश्च रभसो-

पदचन्द्रिका ।

चितायाः । चितामध्यादित्यर्थः । प्रसभं बलात् । पलायिष्ट पलायनपराभूत् । शाकिनीत्वं पिशाचदैवतत्वम् । ऐकमत्येन विसंवादाभावेन । पौराणां नागरिकाणाम् । त्वदावर्जने त्वत्संमुखीकरणे । अगत्यन्तरां न विद्यते गत्यन्तरं यस्यास्ताम् । आत्मवश्यामात्माधीनाम् ।

**इदमिति** । पुंनागो बकुलः । उच्चक्षुरूर्ध्वीकृतनेत्रः । अतप्ये तापमापम् । अमरवृक्षः कल्पद्रुमः । अन्तरिक्षादाकाशात् । वेपमानां कम्पमानाम् ।

पाठा०-१ 'अनपेक्षया'. २ 'सुखेनेव'.

न्मूलितैर्मुष्टिपादप्रहारैश्च परस्परमक्षपयेताम् । पुनरहमतिमृदुनि पुलिनवति कुसुमलवलाञ्छिते सरस्तीरेऽवरोप्य सस्पृहं निर्वर्णयंस्तां मत्प्राणैकवल्लभां राजकन्यां कन्दुकावतीमलक्षयम् । सा हि मया समाश्वास्यमाना तिर्यङ्मामभिनिरूप्य जातप्रत्यभिज्ञा सकरुणमरोदीत् । अवादीच्च—'नाथ, त्वद्दर्शनादुपोढरागा तस्मिन्कन्दुकोत्सवे पुनः सख्या चन्द्रसेनया त्वत्कथाभिरेव समाश्वासितास्मि । त्वं किल समुद्रमध्ये मज्जितः पापेन मद्भ्रात्रा भीमधन्वना' इति श्रुत्वा सखीजनं परिजनं च वञ्चयित्वा जीवितं जिहासुरेकाकिनी क्रीडावनमुपागमम् । तत्र च मामचकमत कामरूप एष राक्षसाधमः । सोऽयं मया भीतयावधूतप्रार्थनः स्फुरन्तीं मां निगृह्याभ्यधावत् । अत्रैवमवसितोऽभूत् । 'अहं च दैवात्तवैव जीवितेशस्य हस्ते पतिता । भद्रं तव' । इति श्रुत्वा च तया सहावरुह्य, नावमध्यारोहम् । मुक्ता च नौः प्रतिवातप्रेरिता तामेव दामलिप्तां प्रत्युपातिष्ठत् । अवरूढाश्च वयमश्रमेण । 'तनयस्य च तनयायाश्च नाशादनन्यापत्यस्तुङ्गधन्वा सुह्मपतिर्निष्कलः स्वयं सकलत्र एव निष्कलङ्कगङ्गारोधस्यनशनेनोपरन्तुं प्रतिष्ठते । सह तेन मर्तुमिच्छत्यनन्यनाथोऽनुरक्तः पौरवृद्धलोकः' इत्यश्रुमुखीनां प्रजानामाक्रन्दमशृणुम । अथाहमस्मै राज्ञे यथावृत्तमाख्याय तदपत्यद्वयं प्रत्यर्पितवान् । प्रीतेन तेन जामाता कृतोऽस्मि दामलिप्तेश्वरेण । तत्पुत्रो मदनुजीवी जातः । मदाज्ञप्तेन चासिंहवर्मसाहाय्यार्थमत्रागत्य भर्तुस्तव दर्शनोत्सवसुखमनुभवामि' इति ।

पदचन्द्रिका ।

उद्भिन्नरोमाञ्चा उद्गतसात्त्विकभावा । तावुभौ राक्षसब्रह्मराक्षसौ । कुसुमलवलाञ्छिते पुष्पलेशचिह्निते । प्रत्यभिज्ञा पूर्वदृष्टत्वम् । अचकमत अभिलाषं बबन्ध जीवितेशः पतिः । 'जीवितेशः प्रिये यमे' इति कोशः । भद्रं कल्याणम् । निष्कलो वृद्धः । 'निष्कलः स्थविरः समौ' इति वैजयन्ती ॥

भूषणा ।

पेक्षयापेक्षाभावेन । अपविद्धां त्यक्ताम् । पुलिनवति । पुलिनं तोयो-

पाठा०–१ 'प्रणिहिता'.

श्रुत्वा 'चित्रेयं दैवगतिः । अवसरेषु पुष्कलः पुरुषकारः' इत्यभिधाय भूयः स्मिताभिषिक्तदन्तच्छदो मन्त्रगुप्ते हर्षोत्फुल्लं चक्षुः पातयामास देवो राजवाहनः । स किल करकमलेन किंचित्संवृताननो ललितवल्लभारभसदत्तदन्तक्षतव्यसनविह्वलाधरमणिर्निरोष्ठ्यवर्णमात्मचरितमाचक्षते—

इति श्रीदण्डिनः कृतौ दशकुमारचरिते मित्रगुप्तचरितं नाम षष्ठ उच्छ्वासः ।

---

## सप्तमोच्छ्वासः ।

राजाधिराजनन्दन, नगरन्ध्रगतस्य ते गतिं ज्ञास्यन्नहं च गतः कदाचित्कलिङ्गान् । कलिङ्गनगरस्य नात्यासन्नसंस्थितजनदाहस्थानसंसक्तस्य कस्यचित्कान्तारधरणिजस्यास्तीर्णसरसकिसलयसंस्तरे तले निषद्य निद्रालीढदृष्टिरशयिषि । गलति च कालरात्रिशिखण्डजालकान्धकारे, चलितरक्षसि क्षरितनीहारे निजनिलयनिलीननिःशेषजने नितान्तशीते निशीथे घनतरसालशाखान्तरालनिर्ह्रादिनि नेत्रनिंसिनीं निद्रां निगृह्णन्, कर्णदेशं गतं 'कथं

---

### पदचन्द्रिका ।

पुष्कलो महान् । पुरुषकारः पुरुषार्थः । स्मितेन हास्येन । अभिषिक्तः सिञ्चितः । दन्तच्छद ओष्ठः । निरोष्ठ्यवर्णमोष्ठोच्चार्यवर्णरहितम् ॥

**इति श्रीदशकुमारटीकायां पदचन्द्रिकाभिधायां षष्ठ उच्छ्वासः ॥**

इदानीं मन्त्रगुप्तः स्वचरितं वक्तुमुपक्रमते । अत्यासन्नमतिसमीपम् । 'कान्तारं वर्त्म दुर्गमम्' इत्यमरः । आलीढा व्याप्ता । शिखण्डजालं केशसमूहः । चलितरक्षसीत्यनेन रात्रिंचरत्वद्योतनम् । क्षरितनीहारे निःसृतहिमे । निलयं गृहम् । निलीनाः स्थिताः । साला वृक्षाः । 'वृक्षो महीरुहः सालः' इति । नेत्रनिंसिनीं नेत्र-

### भूषणा ।

स्थितो देशः । निष्कलो वृद्धः । उपरन्तुं मरणं कर्तुम् ॥ **इति श्रीदशकुमारटीकायां भूषणाभिधायां षष्ठ उच्छ्वासः ॥**

संस्थितो मृतः । 'परेतप्रेतसंस्थिताः' इत्यमरः । सरसमार्द्रम् । नेत्रनिंसिनीं नेत्रस्पर्शिनीम् । 'णिसि चुम्बने' । क्रियेत । कर्मणि संभावनायां लिङ् । यक्षि

### लघुदीपिका ।

स्वयम्' (?) इति बृहत्कथायाम् । भार्गवो ज्यौतिषिकः ॥ **इति षष्ठ उच्छ्वासः ॥**

---

खलेनानेन दग्धसिद्धेन रिरंसाकाले निदेशं दित्सता जन- एष रागेणानर्गलेनार्दित इत्थं खलीकृतः । क्रियेतास्याणकनरेन्द्रस्य केनचिदनन्तशक्तिना सिद्ध्यन्तरायः' इति किंकरस्य किंकर्याश्चाति-कातरं रटितं तदाकर्ण्य 'क एष सिद्धः, का च सिद्धिः, किं चानेन किंकरेण करिष्यते' इति दिदृक्षाक्रान्तहृदयः किंकरगतया दिशा किंचिदन्तरं गतस्तरलतरनरास्थिशकलरचितालंकाराक्रान्त-कायम्, दहनदग्धकाष्ठनिष्ठाङ्गाररजःकृताङ्गरागम्, तडिल्लताकार-जटाधरम्, हिरण्यरेतस्यरण्यचक्रान्धकारराक्षसे क्षणगृहीतना-नेन्धनग्रासचञ्चदर्चिषि दक्षिणेतरेण करेण तिलसिद्धार्थकादीन्नि-रन्तरचटचटायितानाकिरन्तं कंचिदद्राक्षम् । तस्याग्रे स कृता-ञ्जलिः किंकरः 'किं करणीयम्, दीयतां निदेशः' इत्यतिष्ठत् । आदिष्टश्चायं तेनातिनिकृष्टाशयेन—'गच्छ, कलिङ्गराजस्य कर्द-नस्य कन्यां कनकलेखां कन्यागृहादिहानय' इति । स च तथा-कार्षीत् । ततश्च तां त्रासेनालघीयसास्रजर्जरेण च कण्ठेन रण-

पदचन्द्रिका ।

स्पर्शिनीम् । 'णिसि चुम्बने' । रिरंसा रन्तुमिच्छा । अनर्गलेनाप्रतिबद्धेन । खली-कृतः प्रतिहतः । अणकः कुत्सितः । 'पापाणके कुत्सितैः' इति । तरलतरा-ण्यत्युज्ज्वलानि । 'तरलो हाररत्ने च चञ्चले चोज्ज्वलेऽपि च' इति केशवः । नरास्थि मनुष्यास्थि । शकलं खण्डम् । अलंकार आभरणम् । निष्ठाङ्गाररजः । भस्मेत्यर्थः । 'निष्ठानिष्पत्तिनाशान्ताः' इति । तडिल्लता विद्युल्लता । हिरण्यरे-तसि वह्नौ । 'हिरण्यरेता हुतभुक्' इत्यमरः । नानाविधानीन्धनानि काष्ठानि । अर्चिर्ज्वाला । दक्षिणेतरेण । वामेनेत्यर्थः । आकिरन्तं क्षिपन्तम् । अद्राक्षम् । दृष्टवानित्यर्थः । तस्येति होमकर्तुः । निदेश आज्ञा । तेन होमकर्त्रा । निकृष्टो नीच आशयो मनो यस्येति तेन । कर्दन इति कलिङ्गराजनाम । अस्रजर्जरेणा-श्रुक्लिन्नेन । 'अस्रः कोणे शिरसिजे चास्रमश्रुणि शोणिते' इति विश्वः । रणरणि-

भूषणा ।

'रिङ्शयक्–' (७।४।२८) इति रिङादेशे सीयुटि यलोपे सलोपे रूपम् । **आणक-नरेन्द्रेति** । कुत्सितमत्रास्य । 'कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः' इत्यमरः । **तरलतरनरास्थीत्यादि** । 'तरलो हाररत्ने च चञ्चले चोज्ज्वलेऽपि च' इति केशवः । 'शल्कं शकलमस्त्रियाम्' । कर्दन इति कलिङ्गराजस्य नाम । अस्रजर्जरेण 'रोदनं

पाठा०–१ 'खिलीकृतः'.

रणिकागृहीतेन च हृदयेन 'हा तात, हा जननि' इति क्रन्दन्तीं कीर्णग्लानशेखरस्रजि शीर्णनहने शिरसिजानां संचये निगृह्यासिना शिलासितेन[1] शिरश्छिकर्तिषयाचेष्टत । झटिति चाच्छिद्य तस्य हस्तात्तां शस्त्रिकां तया निकृत्य तच्छिरः सजटाजालं निकटस्थस्य कस्यचिज्जीर्णसालस्य स्कन्धरन्ध्रे न्यदधाम्[2] । तन्निध्याय हृष्टतरः स राक्षसः क्षीणाधिरकथयत्—'आर्य, कदर्यस्यास्य कदर्थनान्न कदाचिन्निद्रायाति नेत्रे । तर्जयति त्रासयति च, अकृत्ये चाज्ञां ददाति । तदत्र कल्याणराशिना साधीयः कृतं यदेष नरकाकः कारणानां नारकीणां रसज्ञानाय नीतः[3] शीतेतरदीधितिदेहजस्य नगरम्, तदत्र दयानिधेरनन्ततेजसस्तेऽयं जनः कांचिदाज्ञां चिकीर्षति । आदिश, अलं कालहरणेन'

### पदचन्द्रिका ।

कौत्सुक्यम् । 'औत्सुक्यं रणरणिका' इति महीपः । शीर्णनहने श्लथबन्धने । संचयः समूहः । असिना खड्गेन । शिलासितेन शिलावदसितः श्यामः । शिरश्छिकर्तिषया शिरःकर्तनेच्छया । झटिति शीघ्रम् । तया शस्त्रिकया । आच्छिद्यापकृष्य । 'आच्छेदनं स्यादाक्षेपः' इति वररुचिः । तच्छिरः । होमकर्तुर्मस्तकमित्यर्थः । निकटस्थस्य समीपवर्तिनः । जीर्णसालस्य जीर्णवृक्षस्य । न्यदधां निवेशितवान् । निध्यायालोक्य । स इति । किंकर इत्यर्थः । क्षीणाधिर्गतमानसव्यथः । कदर्यस्य कृपणस्य । 'कदर्ये कृपणक्षुद्रकिंपचानमितंपचाः' इत्यमरः । कदर्थनात्क्लेशनात् । 'क्लेशनं तु कदर्थनम्' इति । अकृत्येऽपकारे । कल्याणराशिना कुशलपुञ्जेन । साधीयोऽतिशयेन साध्विति तथा । नरकाको मनुष्यनिन्द्यः । कारणानां यातनानाम् । 'कारणा तीव्रयातना' इत्यमरः । नारकीणां नरकसंबन्धिनीनाम् । शीतेतरदीधितिः सूर्यस्तद्देहजस्य । यमस्येत्यर्थः । दयानिधेर्दयासिन्धोः । अयं जनो मद्रूपः । कालहरणेन कालातिपातेन । शीघ्रमित्यर्थः । अनंसीत् । 'णम प्रह्वत्वे' । **आदिश-**

### भूषणा ।

चास्मश्रु च' इत्यमरः । रणरणिकागृहीतेनोपलक्षिता नासादिजनतोदयदेशेऽभ्यन्तरे आघातो रणरणिका । नहनं बन्धनम् । आच्छिद्यापकृष्य । 'तस्य हस्तादसिलतां ताम्' इति पाठः । सालो वृक्षः । 'अनोकहः कुटः सालः' इत्यमरः । स्कन्धाः शाखाः । 'समे शाखालते स्कन्ध–' इत्यमरः । निध्याय निर्वर्ण्य । 'निर्वर्णनं तु निध्यानम्' इत्यमरः । कदर्थनात्क्लेशनात् । नगरम् । 'अकर्मकधातुभिर्योगे' ( वा० )

पाठा०–१ 'शिलाशितेन'. २ 'न्यधीषि'. ३ 'नीतः शेते नगरे'.

इत्यनंसीत् । आदिशं च तम्—'सखे, सैषा सज्जनाचरिता सरणिः, यदणीयसि कारणेऽनणीयानादरः संदृश्यते । न चेदिदं नेच्छसि सेयं संनताङ्गयष्टिरक्लेशार्हा सत्यनेनाकृत्यकारिणात्यर्थं क्लेशिता, तन्नयैनां निजनिलयं, नान्यदितः किंचिदस्ति चित्ताराधनं' इति । अथ तदाकर्ण्य कर्णशेखरनिलीननीलनीरजायितां धीर[1]तरलतारकां दृशं तिर्यक्किंचिदञ्चितां संचारयन्ती, सलिलचरकेतनशरासनानतां चिल्लिकालतां ललाटरङ्गस्थलीनर्तकीं लीलालसं ली[2]लयन्ती, कण्टकितरक्तगण्डलेखा, रागलज्जान्तरालचारिणी, चरणाग्रेण तिरश्चीननखार्चिश्चन्द्रिकेव धरणितलं साचीकृताननसरसिजं लिखन्ती, दन्तच्छदकिसलयलङ्घिना हर्षास्रसलिलधाराशीकरकणजालक्लेदितस्य स्तनतटचन्दनस्यार्द्रतां निरस्यताऽस्यान्तरालनिःसृतेन त[3]नीयसानिलेन हृदयलक्ष्यदलनदक्षिणरतिस[4]हचर-

पदचन्द्रिका ।

**मिति** । सरणिः पद्धतिः । 'सरणिः पद्धतिः पद्या वर्तन्येकपदीति च' इत्यमरः । अणीयस्यल्पे । संनता नम्रा । अकृत्यकारिणासमीचीनकारकेण । नय प्रापय । निजनिलयं स्वगृहम् । कर्णशेखरे कर्णोच्चप्रदेशे । निलीनं लग्नम् । नीलनीरजं नीलोत्पलम् । धीरा निश्चला । तरला चञ्चला । तिर्यग्वक्रम् । सलिलचरो जलचरो मत्स्यः केतनमस्येति । मदनस्येत्यर्थः । शरासनं धनुस्तद्वदानतां वक्राम् । चिल्लिकालतां भ्रूलतावल्लीं भ्रूमध्यमध्वजः (?) । ललाटमेव रङ्गस्थली तत्र नर्तकी । लीलालसं लीलासौम्यम् । 'अलसं मन्दसौम्ययोः' इत्यजयः । कण्टकिता 'तदस्य संजातं–' (५।२।३६) इतीतच् । गण्डलेखा गण्डपाली । राग इच्छा । लज्जा व्रीडा । तयोरन्तरालं मध्यस्तत्र चारिणी वर्तमाना । तिरश्चीनो वक्रो नखस्तस्यार्चिरेव चन्द्रिका यस्येति स तथा तेन । साचीकृतं वक्रीकृतम् । आननसरसिजं वक्त्रकमलम् । दन्तच्छदकिसलयमोष्ठपल्लवम् । लङ्घयतीति लङ्घी तेन । क्लेदितं विक्लीकृतम् । आस्यान्तरालं मुखमध्यम् । तनीयसा मन्देन । अनिलेन वायुना । हृदयमेव लक्ष्यं वेध्यम् । दलनं भेदनम् । दक्षिणः सरलः । 'दक्षिणे सरलोदारौ' इत्यमरः । रतिसहचरो मदनस्तस्य शरो बाणः । स्वदायितेन । 'स्यदो जवे' इति

भूषणा ।

इति कर्मता । सरणिर्मार्गः । 'न चेदिच्छसीदम्' इति पाठः । इदं मदुक्तम् । अणीयसि कारणे नणीयानादर इति नेच्छसीत्यर्थः । चिल्लिकालतां भ्रूलताम् । लीलालसं लीलामन्दम् । 'अलसं मन्दसौम्ययोः' इत्यजयः । **हृदयलक्ष्येति** । हृदये लक्ष्यत

पाठा०–१ 'धीरेतरतारकाम्'. २ 'लासयन्ती'. ३ 'अतनीयसा'. ४ 'सहचरशरस्य दयितेन'; 'सहचरसायकस्य दयितेन'.

शरस्यदायितेन तरङ्गितदशनचन्द्रिकाणि कानिचिदेतान्यक्षराणि कलकण्ठीकलान्यसृजत्—'आर्य, केन कारणेनैनं दासजनं कालहस्तादाच्छिद्यानन्तरं रागानिलचालितरणरणिकातरङ्गिण्यनङ्गसागरे किरसि ? यथा ते चरणसरसिजरजःकणिका तथाहं चिन्तनीया । यद्यस्ति दया तेऽत्रजने, अनन्यसाधारणः करणीयः स एष चरणाराधनक्रियायाम् । यदि च कन्यागाराध्यासने रहस्यक्षरणादनर्थ आशङ्क्येत, नैतदस्ति । रक्ततरा हि नस्तत्र सख्यश्चेट्यश्च । यथा न कश्चिदेतज्ज्ञास्यति तथा यतिष्यन्ते' इति । स चाहं देहजेनाकर्णाकृष्टसायकासनेन चेतस्यतिनिर्दयं ताडितस्तत्कटाक्षकालायसनिगडगाढसंयतः किंकराननिहितदृष्टिरगादिषम्—'यथेयं रथचरणजघना कथयति तथा चेन्नाचरेयं, नयेत नक्रकेतनः क्षणेनैकेनाकीर्तनीयां दशाम् । जनं चैनं सह नयानया कन्यया कन्यागृहं हरिणनयनया' इति । नीतश्चाहं निशाचरेण शारदजलधरजालकान्ति कन्यकानिकेतनम् । तत्र च कांचित्कालकलां चन्द्राननानिदेशाच्चन्द्रशालैकदेशे तद्दर्शनचलितधृतिरतिष्ठम् । सा च स्वच्छन्दं शयानाः करतलालससंघट्टना-

पदचन्द्रिका ।

निपातः तद्वदाचरति स तथा तेन । तरङ्गिता तरङ्गं प्राप्ता । एतानि वक्ष्यमाणानि । कलकण्ठी कोकिला । कलानि गम्भीराणि । **आर्येति** । एनं दासजनम् । मद्रूपमित्यर्थः । कालहस्ताद्यमहस्तात् । रागानिल इच्छावायुः । रणरणिका व्याकुलता सैव तरङ्गा यस्मिन्निति । अनङ्गसागरे मदनसमुद्रे । चरणसरसिजं पदपद्मम् । अत्र जने मत्स्वरूपे । नान्यसाधारणोऽनन्यसाधारणः । अत्युच्चैरित्यर्थः । रहस्यं गोप्यम् । क्षरणमन्यत्र प्रकटीभावः । स चाहमिति । मन्त्रगुप्त इत्यर्थः । देहजेन मदनेन । सायकासनं धनुः । कालायसं लोहम् । निगडं शृङ्खलादि । रथचरणं चक्रम् । नक्रकेतनः कामः । अकीर्तनीयामवचनीयाम् । दशामवस्थाम् । एनं जनं मद्रूपम् । अनया कन्यया । हरिणनयनया मृगलोचनया । **नीतश्चेति** । शारदजलधरः शरन्मेघः । निकेतनं गृहम् । कालकलां कालस्य समयस्य कलां लेशम् । चन्द्रशालोर्ध्वगृहम् । 'चन्द्रशाला शिरोगृहम्' इत्यमरः । स्वच्छन्दं निरवग्रहम् ।

भूषणा ।

उत्पद्यतेऽसौ स मानः (?) । स्यदायितेन । 'स्यदो जवे' इति निपातः । जवायितेन चन्द्रशालैकदेशे । 'चन्द्रशाला शिरोगृहम्' । रणरणिका तरंगिणी । वेगशैघ्र्योभयम् ।

पाठा०—१ 'कीर्तनीयाम्'.

पनीतनिद्राः काश्चिदधिगतार्थाः सखीरकार्षीत् । अथागत्य ताश्चरणनिहितशिरसः क्षरदस्रकरालितेक्षणा निजशेखरकेसराग्रसंलग्नषट्चरणगणरणितसंशयितकलगिरः शनैरकथयन्—'आर्य, यदत्यादित्यतेजसस्त एषा नयनलक्ष्यतां गता, ततः कृतान्तेन न गृहीता । दत्ता चेयं चित्तजेन गरीयसा साक्षीकृत्य रागानलम् । तदनेनाश्चर्यरत्नेन नलिनाक्षस्य ते रत्नशैलशिलातलस्थिरं रागतरलेनालंक्रियतां हृदयम् । तदस्याश्चरितार्थं स्तनतटं गाढालिङ्गनैः सदृशतरस्य सहचरस्य' इति । ततः सखीजनेनातिदक्षिणेन दृढतरीकृतस्नेहनिगलस्तया संनताङ्ग्या संगत्यारंसि ।

अथ कदाचिदायासितजायारहितचेतसि, लालसालिलङ्घनग्लानघनकेसरे, राजदरण्यस्थलीललाटलीलायिततिलके, ललितानङ्गराजाङ्गीकृतनिर्निद्रकर्णिकारकाञ्चनच्छत्रे, दक्षिणदहनसारथिरया-

पदचन्द्रिका ।

शयाना निद्रां कुर्वाणाः । करतलेनालसं यत्संघट्टनं तेनापनीता दूरीकृता निद्रा यासामिति । **अथेति** । क्षरता निःसरता अस्रेणाश्रुणा करालितानि विकृतानीक्षणानि यासां ताः । षट्चरणा भ्रमराः । रणितं शब्दितम् । अत्यादित्यतेजसोऽतिक्रान्तमादित्यस्य तेजो येनेति । नयनलक्ष्यतां नेत्रग्राह्यताम् । ततस्तस्मात्कारणात् । कृतान्तेन यमेन । चित्तजेन कामेन । रागानल इच्छाग्निः । आश्चर्यरत्नेनाश्चर्यश्रेष्ठेन । नलिनाक्षस्य कमलनेत्रस्य । चरितार्थं कृतार्थम् । दक्षिणेन सरलेन । संनताङ्ग्या अरंसि क्रीडां कृतवान् ॥

**अथेति** । कलिङ्गराजः कर्दननामा सागरतीरकानने क्रीडारसजातासक्तिरासीदित्यन्वयः । किंविधे कानने । आयासितानि जायारहितानाम् । विरहिणामित्यर्थः, चेतांसि यत्र । लालसा लुब्धाः । अलयो भ्रमराः । लङ्घनं घट्टनम् । घनकेसरे निविडपुंनागे । 'पुंनागे पुरुषस्तुङ्गः केसरो देववल्लभः' इत्यमरः । अथवा घनकेसरे निविडवकुले । 'अथ केसरे । बकुलः' इति च । लीलायिततिलके शोभायितक्षुरके । 'तिलकः क्षुरकः श्रीमान्' इत्यमरः । ललितोऽनङ्गराजो मदनराजः । निर्निद्रा विकसिताः कर्णिकाराः परिव्याधाः । 'अथ द्रुमोत्पलः । कर्णिकारः परिव्याधः' इत्यमरः । दक्षिणो दहनसारथिर्मलयानिलः । रयो वेगः । सहकारा आम्रवृक्षाः ।

भूषणा ।

**आयासितेति** । आयासितानि जायारहितानां चेतांसि यत्र । लीलायिततिलके शोभायितवृक्षविशेषे । 'तिलकः क्षुरकः श्रीमान्' इत्यमरः । दक्षिणदहनसारथिर्म

हृतसहकार[1]चञ्चरीककलिके, कालाण्डजकण्ठरागरक्तरक्ताधराराति-रणाग्रसंनाहशालिनि, शालीनकन्यकान्तःकरणसंक्रान्तरागलङ्घित-लज्जे, दर्दुरगिरितटचन्दनाश्लेषशीतलानिलाचार्यदत्तनानालतानृत्य[2]-लीले काले, कलिङ्गराजः सहाङ्गनाजनेन सह च तनयया सक-लेन च नगरजनेन दश त्रीणि च दिनानि दिनकरकिरणजालालङ्घ-नीये, रणदलिसङ्घलङ्घितनतलताग्रकिसलयालीढसैकततटे, तरल-तरङ्गशीकरासारसङ्गशीतले सागरतीरकानने क्रीडारसजातास-क्तिरासीत् । अथ संततगीतसंगीतसंगताङ्गनासहस्रशृङ्गारहेलानि-रर्गलानङ्गसंघर्षहर्षितश्च रागतृष्णैकतन्त्रस्तत्र रन्ध्रे आन्ध्रनाथेन जयसिंहेन सलिलतरणसाधनानीतेनानेकसंख्येनानीकेन द्रागाग-त्यागृह्यत सकलत्रः । सा चानीयत त्रासतरलाक्षी दयिता नः सह सखीजनेन कनकलेखा । तदाहं दाहेनानङ्गदहनजनितेनान्त-

## पदचन्द्रिका ।

चञ्चरीका भ्रमराः । कलिकाः कोरकाः । कालाण्डजः कोकिलः । 'वनप्रियः पर-भृतः पिकः कालाण्डजः स्मृतः' इति वैजयन्ती । रक्तरक्ताधराः स्निग्धाः स्त्रियः । शालीनमधृष्टम् । 'शालीनकौपीने अधृष्टाकार्ययोः' (५।२।२०) इति निपातः । दर्दुरं ग्रामजालम् । 'दर्दुरा चण्डिकायां च ग्रामजाले तु दर्दुरम्' इति विश्वः । अथवा दर्दुरवद्वाद्यभाण्डवद्यद्गिरितटम् । 'दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः' इति मेदिनी । अलङ्घनीये दुर्लङ्घ्ये । अनिलो वायुः । रणन्तः शब्दं कुर्वन्तः । अलयो भ्रमराः । लताग्रकिसलयानि वल्ल्यग्रपल्लवानि । सैकतं सिकतामयम् । रणन्तो येऽलि-सङ्घा भ्रमरसमूहास्तैर्लङ्घिता अत एव नता या लतास्तासामग्रकिसलयैः आलीढं स्पृष्टं यत्र । सागरतीरकानने समुद्रतटवने । **अथेति ।** शृङ्गारहेला क्रियानादरः । निरर्ग-लोऽप्रतिहतः । अनङ्गो मदनः । तत्र रन्ध्रे तत्रावकाशे । आन्ध्रनाथेन आन्ध्रराजेन । सलिलतरणं जलतरणं तस्य यत्साधनं नौकादि । अनीकं सैन्यम् । द्राक् शीघ्रम् ।

## भूषणा ।

लयपवनः । 'कलिका कोरकः पुमान्' इत्यमरः । कालाण्डजः । 'वनप्रियः परभृतः पिकः कालाण्डजः स्मृतः' । रक्तरक्ताधराः स्निग्धाः किंनरस्त्रियः । शालीनोऽधृष्टः । 'शालीन-कौपीने अधृष्टाकार्ययोः'(५।२।२०) इति निपातः । 'स्यादधृष्टस्तु शालीनः' इत्यमरः ।

## लघुदीपिका ।

पुमान्कालाण्डजः । 'वनप्रियः परभृतः पिकः कालाण्डजः स्मृतः' । रक्तरक्ताधराः स्निग्धाः । शालीनो मुग्धः । 'शालीनकौपीने अधृष्टाकार्ययोः' (५।३।२०) इति

पाठा०-१ 'चञ्चलकलिके'. २ 'नृत्त'.

रिताहारचिन्तश्चिन्तयन्दयितां गलितगात्रकान्तिरित्यतर्कयम्—'गता सा कलिङ्गराजतनया जनित्रा जनयित्र्या च सहारिहस्तम् । निरस्तधैर्यश्च तां स राजा नियतं संजिघृक्षेत् । तदसहा च सा सती गररसादिना सद्यः संतिष्ठेत । तस्यां च तादृशीं दशां गतायां जनस्यास्यानन्यजेन हन्येत शरीरधारणा । सा का स्याद्गतिः' इति ।

अत्रान्तर आन्ध्रनगरादागच्छन्नग्रजः कश्चिदैक्ष्यत । तेन चेयं कथा कथिता—'यथा किल जयसिंहेनानेकनिकरदत्तसंघर्षणजिघांसितः स कर्दनः कनकलेखादर्शनैधितेन रागेणारक्ष्यत । सा च दारिका यक्षेण केनचिदधिष्ठिता न तिष्ठत्यग्रे नरान्तरस्य नरेन्द्रस्य च । आयस्यति च नरेन्द्रसार्थसंग्रहणेन तन्निराकरिष्यन्नरेन्द्रो न चास्ति सिद्धिः' इति । तेन चाहं दर्शिताशः शंकरनृत्यरङ्गदेशजातस्य जरत्सालस्य स्कन्धरन्ध्रान्तर्जटाजालं निष्कृष्य तेन जटिलतां गतः कन्थाचीरसंचयान्तरितसकलगात्रः कांश्चिच्छिष्यानग्रहीषम् । तांश्च नानाश्चर्यक्रियातिसंहिताज्जनादाकृष्टान्नचेलादित्यागान्नित्यहृष्टानकार्षम् । अयासिषं च दिनैः कैश्चिदान्ध्रनगरम् । तस्य नात्यासन्ने सलिलराशिसदृशस्य कलहंसगणदलितनलिनदलसंहतिगलितकिञ्ज-

पदचन्द्रिका ।

अनङ्ग एव दहनः । अन्तरिता दूरं गता । आहारो भक्षणम् । तदसहा तदसहते सा तथा । गरं विषम् ॥

**अत्रान्तर इति** । अग्रजो ब्राह्मणः । निकारो यातना अपकारो वा । 'अपराधोऽपकारश्च निकारोऽपि समाः' इति वैजयन्ती । संघर्षणमभिभवेच्छा । एधितो वर्धितः । दारिका कन्यका । नरेन्द्रा मन्त्रवादिनः । नरान्तरस्य राज्ञोऽन्यस्येत्यर्थः । आयस्यति यतते । 'यसु प्रयत्ने' इति धातोः । नरेन्द्रसार्थो मन्त्रिकसमाजः । जरत्सालस्य जीर्णवृक्षस्य । तस्यान्ध्रनगरस्य । नात्यासन्ने किंचिद्दूरे । सलिलराशिः समुद्रः । दलितानि भञ्जितानि । संहतिर्वृन्दम् । 'स्त्रियां तु

भूषणा ।

आसारो धारासंपातः । शृङ्गारहेला । 'हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः' इत्यमरः । निकारोऽपकारः । नरेन्द्रः पिशाचमन्त्रवान् । नरान्तरस्य राज्ञ

लघुदीपिका ।

निपातः । शृङ्गारहेला शृङ्गारक्रिया । 'हेला क्रियानादरश्च' । तत्र रन्ध्रे । तत्रावकाशे । निकारोऽपकारः । 'अपराधोऽपकारश्च न्यकारश्च मिथः समाः' इति वैजयन्ती । नरान्तरस्य । राज्ञ इत्यर्थः । आयस्यति यतते । 'यसु प्रयत्ने' इति धा-

पाठा०—१ 'अतिसंहितान्'.

ल्कशकलशारस्य सारसश्रेणिशेखरस्य सरसस्तीरकानने कृतनिकेतनः स्थितः । शिष्यजनकथितचित्रचेष्टाकृष्टसकलनागरजनाभिसंधानदक्षः सन्दिशिदिशीत्यकीर्त्ये जनेन—'य एष जरदरण्यस्थलीसरस्तीरे स्थण्डिलशायी यतिस्तस्य किल सकलानि सरहस्यानि सषडङ्गानि च छन्दांसि रसनाग्रे संनिहितानि । अन्यानि च शास्त्राणि येन यानि न ज्ञायन्ते स तेषां तत्सकाशादर्थनिर्णयं करिष्यति । असत्येन नास्यास्यं संसृज्यते । सशरीरश्चैष दयाराशिः । एतत्संग्रहेणाद्य चिरं चरितार्था दीक्षा । तच्चरणरजःकणैः कैश्चन शिरसि कीर्णैरनेकस्यानेक आतङ्कश्चिरं चिकित्सकैरसंहार्यः संहृतः । तदङ्घ्रिक्षालनसलिलसेकैर्निष्कलङ्कशिरसां नश्यन्ति क्षणेनैकेनाखिलनरेन्द्रयन्त्रालङ्घिनश्चण्डताराग्रहाः । न तस्य शक्यं शक्तेरियत्ताज्ञानम् । न चास्याहंकारकणिका' इति । सा चेयं कथानेकजनास्यसंचारिणी तस्य कनकलेखाधिष्ठानधनदाज्ञाकरनिराक्रियासक्तचेतसः क्षत्रियस्याकर्षणायाशकत् । स चाहरहरागत्यादरे-

## पदचन्द्रिका ।

संहतिर्वृन्दम्' इत्यमरः । किंजल्कः केसरः । शारं चित्रम् । कृतनिकेतनः कृतगृहः । अभिसंधानं प्रतारणम् । दिशिदिशि प्रतिदिशम् । अकीर्त्ये ख्यापित इत्यर्थः । जरदरण्यं जीर्णारण्यम् । षडङ्गानि शिक्षादीनि । छन्दांसि वेदाः । रसनाग्रं जिह्वाग्रम् । आस्यं मुखम् । सशरीरः शरीरवान् । दयाराशिः कृपासमुद्रः । संग्रहेण स्वीकारेण । आतङ्को भयम् । चिकित्सकैर्मन्त्रवादिभिः । अखिलनरेन्द्रा मन्त्रवादिनः । यन्त्राणि मन्त्रविन्यासरेखाक्रमः । 'यत्न' इति वा पाठः । इयत्ता परिमाणम् । अहंकारकणिका अहंकारलेशः । **सा चेति** । सा च कथा । तस्य । जयसिंहस्येत्यर्थः । धनदः कुबेरस्तस्याज्ञाकरो यक्षः । निराक्रिया दूरीकरणम् । **स चेति** । स

## भूषणा ।

इत्यर्थः । आयस्यति यतते । 'यसु प्रयत्ने' । अतिसंहितान्वञ्चितान् । शकलशारस्य शकलें चित्रवर्णस्येति । अकीर्त्ये । इति वक्ष्यमाणप्रकारेण । स्थण्डिलशायी । 'स्थण्डिलाच्छयितरि व्रते' (४।२।१५) इति णिनिः । सरहस्यानि सोपनिषत्कानि । सषडङ्गानि । 'निरुक्तं ज्योतिषं कल्पसूत्रं व्याकरणं तथा । छन्दोविचितिशिक्षे च वेदाङ्गानि

## लघुदीपिका ।

तुः । अतिसंहितांश्चिन्तितान् । सरहस्यानि सोपनिषत्कानि । सषडङ्गानि । 'निरुक्तं ज्योतिषं कल्पसूत्रं व्याकरणं तथा । छन्दोविचितिशिक्षे च वेदाङ्गानि वदन्ति

पाठा०–१ 'अतिसंधान'. २ 'एतत्सकाशादर्थग्रहेणाद्य'. ३ 'नरेन्द्रयत्नलङ्घिनः'.

णातिगरीयसार्चयन्नर्थैश्च शिष्यान्संगृह्णन्नधिगतक्षणः कदाचित्काङ्क्षितार्थसाधनाय शनैरयाचिष्ट । ध्यानधीरः स्थानदर्शितज्ञानसंनिधिश्चैनं निरीक्ष्य निचाय्याकथयम्—'तात, स्थान एष हि यत्नः । तस्य हि कन्यारत्नस्य सकलकल्याणलक्षणैकराशेरधिगतिः क्षीरसागररशनालंकृताया गङ्गादिनदीसहस्रहारयष्टिराजिताया धराङ्गनाया एवासादनाय साधनम् । न च स यक्षस्तदधिष्ठायी केनचिन्नरेन्द्रेण तस्या लीलाञ्चितनीलनीरजदर्शनाया दर्शनं सहते । तदत्र सह्यतां त्रीण्यहानि, यैरहं यतिष्येऽर्थस्यास्य साधनाय' इति । तथादिष्टे च हृष्टे क्षितीशे गते निशि निशि निर्निशाकरार्चिषि नीरन्ध्रान्धकारकणनिकरनिगीर्णदशदिशि निद्रानिगडितनिखिलजनदृशि निर्गत्य जलतल[1]निलीनगाहनीयं नीरन्ध्रं कृच्छ्राच्छिद्रीकृतान्तरालं[2] तदेकतः सरस्तटं तीर्थसंनिकृष्टं केनचित्खननसाधनेनाकार्षम् । घनशिलेष्टिकाच्छन्नच्छिद्राननं तत्सरस्तीरदेशं जनैरशङ्कनीयं निश्चित्य, दिनादि-

पदचन्द्रिका ।

जयसिंहः । अहरहः प्रतिदिनम् । क्षण उत्सवः । निचाय्य । दृष्ट्वेत्यर्थः । अधिगतः प्राप्तः । रशना मेखला । 'स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना स्त्रियाम्' इत्यमरः । नीरजं कमलं तद्वद्दर्शनं नेत्रम् । 'दर्शनं नयनस्वप्नबुद्धिधर्मोपलब्धिषु' इति मेदिनी । निर्निशाकरार्चिषि निर्गतं निशाकरस्य चन्द्रस्यार्चिस्तेजो यस्यामिति निशीत्यस्य विशेषणम् । नीरध्रान्धकारो गाढान्धकारः । निगीर्णदशदिशि । 'निगीर्णं खादितं ग्रस्तं क्षतमन्तःकृतं च तत्' इति कोशः । निगडितं बद्धम् । सरस्तटमेकतः सरस्तटस्यान्तिके । 'एकतः क्वचिदन्तिके' इति वैजयन्ती । 'एकतः सर्वतो योगे शेषार्थे कर्म वेध्यते' इति द्वितीया । घना निबिडाः । शिलाः पाषाणाः । इष्टिकाच्छन्नमाच्छादितम् । दिनादिः प्रातःकालः । निर्णिक्तं शोधितम् । 'निर्णिक्तं

भूषणा ।

वदन्ति षट् ॥' इति । धनदाज्ञाकरो यक्षः । अधिगतः प्राप्तः क्षणमेकान्तकालो येन । स्थाने योग्ये काले दर्शितो ज्ञानस्य तदधिष्ठितपिशाचादिज्ञानस्य संनिधिः सांनिध्यं येन सः । निचाय्य दृष्ट्वा । निगीर्णदशदिशि । 'निगीर्णं खादितं ग्रस्तम्' । निशाः

लघुदीपिका ।

षट् ॥' धनदाज्ञाकरो यक्षः । निचाय्य दृष्ट्वा । निगीर्णदशदिशि । 'निगीर्णं खादितं

पाठा०–१ 'तल्लीन'. २ 'कृतान्तरम्'.

स्नाननिर्णिक्तगात्रश्च नक्षत्रसंतानहारयष्ट्यग्रग्रथितरत्नम्, क्षणदान्धकारगन्धहस्तिदारणैककेसरिणम्, कनकशैलशृङ्गरङ्गलास्यलीलातटम्, गगनसागरघनतरङ्गराजिलङ्घनैकनक्रम्, कार्याकार्यसाक्षिणम्, सहस्रार्चिषं सहस्राक्षदिगङ्गनाङ्गरागरागायितकिरणजालम्, रक्तनीरजाञ्जलिनाराध्य निजनिकेतनं न्यशिश्रियम् ।

याते च दिनत्रये, अस्तगिरिशिखरगैरिकतटसाधारणच्छायतेजसि, अचलराजकन्यकाकदर्थनयान्तरिक्षाख्येन शंकरशरीरेण संसृष्टायाः संध्याङ्गनायाः रक्तचन्दनचर्चितैकस्तनकलशदर्शनीये दिनाधिनाथे, जनाधिनाथः स आगत्य जनस्यास्य धरणिन्यस्तचरणनखकिरणच्छादितकिरीटः कृताञ्जलिरतिष्ठत् । आदिष्टश्च—'दिष्ट्या दृष्टेष्टसिद्धिः । इह जगति हि न निरीहं देहिनं श्रियः संश्रयन्ते । श्रेयांसि च सकलान्यनलसानां हस्ते नित्यसांनिध्यानि । यतस्ते साधीयसा सच्चरितेनानाकलितकलङ्केनार्चितेनात्यादरनिचितेनाकृष्टचेतसा जनेनानेन सर इदं तथा संस्कृतम्, यथेह तेऽद्य

## पदचन्द्रिका ।

शोधितं मृष्टम्' इत्यमरः । संतानं विस्तारः । क्षणदा रात्रिः । गन्धहस्त्युन्मत्तद्विपः । दारणं विदारकम् । कनकशैलः सुवर्णाचलः । शृङ्गं शिखरम् । लास्यलीला विलासक्रियाः । गगनसागरो गगनसमुद्रः । घना एव तरङ्गाः । राजिः परम्परा । लङ्घनमतिक्रम्य गमनम् । सहस्राक्ष इन्द्रस्तद्दिगङ्गना । प्राचीत्यर्थः । रागायितं रागवदाचरितम् । रक्तनीरजं रक्तोत्पलम् । निजनिकेतनं स्वगृहम् । न्यशिश्रियमाश्रितवान् ॥

'अस्तगिरिशिखरगैरिकतटसाधारणच्छायतेजसि' इत्यग्रिम'दिनाधिनाथे' इति पदस्य विशेषणम् । अचलराजकन्यका पार्वती । कदर्थनया कुत्सितप्रार्थनया । अन्तरिक्षाख्येन । अष्टमूर्तिमध्य आकाशाभिधेयेनेत्यर्थः । संसृष्टाया मिलितायाः । संध्यैवाङ्गना । चर्चितः प्रलिप्तः । 'चर्चा चर्चिक्यमालेपे' इति वैजयन्ती । दिष्ट्या अदृष्टेन । इष्टसिद्धिर्दृष्टेत्यन्वयः । निरीहं निर्गतेहा स्पृहा यस्येति तम् । निःस्पृहमित्यर्थः । सस्पृहमेव श्रिय आश्रयन्त इति भावः । श्रेयांसि सुकृतानि । 'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः' इत्यमरः । अनलसानामुद्योगिनाम् । साधीयसा [ अतिशयेन ] साध्विति साधीयस्तेन । अनाकलितं दूरीकृतम् । कलङ्को

## भूषणा ।

करप्रभायाः स्वल्पत्वं कथितम् । जलतललीनेनान्तःप्रविष्टेनैव गम्यं कृच्छ्रमज्ञेयमन्तरालमवकाशो यस्य तथा सरस्तटं तदेकत एकत्र कृतम् । तत्तटे गुप्तं स्थानं जले

## लघुदीपिका ।

ग्रस्तं प्सातमन्तःकृतं च तत्' । सरस्तटमेकतः सरस्तटस्यान्तिके । 'एकतः क

सिद्धिः स्यात् । तदेतस्यां निशि गलदर्धायां गाहनीयम् । गाहनानन्तरं च सलिलतले सततगतीनन्तःसंचारिणः संनिगृह्य यथाशक्ति शय्या कार्या । ततश्च तटस्खलितजलस्थगितजलजखण्डचलितदण्डकण्टकाग्रदलितदेहराजहंसत्रासजर्जररसितसंदत्तकर्णस्य जनस्य क्षणादाकर्णनीयं जनिष्यते जलसंघातस्य किंचिदारटितम् । शान्ते च तत्र सलिलरटिते क्लिन्नगात्रः किंचिदारक्तदृष्टिर्येनाकारेण निर्यास्यसि निचाय्य तं निखिलजननेत्रानन्दकारिणं न स यक्षः शक्ष्यत्यग्रतः स्थितये । स्थिरतरनिहितस्नेहशृङ्खलानिगडितं च कन्यकाहृदयं क्षणेनैकेनासहनीयदर्शनान्तरायं स्यात् । अस्याश्च धराङ्गनाया नात्यादृतनिराकृतारिचक्रं चक्रं करतलगतं चिन्तनीयं न तत्र संशयः । तच्चेदिच्छस्यनेकशास्त्रज्ञानधीरधिषणैरधिकृतैरितरैश्च हितैषिगणैराकलय्य जालिकशतं चा-

---

पदचन्द्रिका ।

दूषणम् । तत्सरः । गाहनीयमालोडनीयम् । संनिगृह्य । निग्रहं कृत्वेत्यर्थः । स्खलितं लग्नम् । स्थगितं मन्दीभूतम् । जलजखण्डं कमलसमूहः । दलितं धर्षितम् । जर्जरमतिश्लथम् । रसितं शब्दितम् । 'रस शब्दने' । आरटितं पीडाशब्दितम् । क्लिन्नगात्र आर्द्रशरीरः । निचाय्य निश्चित्य । अग्रतः स्थितये । पुरो वर्तितुमित्यर्थः । धिषणा बुद्धिः । 'बुद्धिर्मनीषा धिषणा' इत्यमरः । जालिका जालवर्तिनः । दण्डः प्रकाण्डः । 'दण्डोऽस्त्री लगुडे पुमान् । व्यूहभेदे प्रकाण्डे च' इति मेदिनी । षोडशहस्त इति यावत् । 'काण्डान्तात्क्षेत्रे' (४।१।२३) इति सूत्रे काण्ड-

भूषणा ।

कृतमिति यावत् । 'क्षतमन्तःकृतं च तत्' । निर्णिक्तं शोधितम् । 'निर्णिक्तं शोधितं मृष्टम्' इत्यमरः । हारयष्टिः प्रातस्तनप्रभारूपा । लास्यलीला नृत्यक्रिया । 'लीला विलासक्रिययोः' इत्यमरः । चर्चितं प्रलिप्तम् । 'चर्चा चार्चिक्यमालेपे' इति वैजयन्ती । **तटस्खलितेति** । तटात्स्खलिताः पतिताश्च ते जले स्थगिताः स्थिता ये जलजसमूहस्य चञ्चलदण्डस्तस्य कण्टकाग्राणि तैर्दलितो देहो येषां तेषां राजहंसानां त्रासजर्जरं त्रासेन कठोरं रसितं शब्दस्तत्र दत्तः कर्णो येन तस्य । क्षणेन सुखेन । नात्यादरेण विलासेनैवेत्यर्थः । धिषणा बुद्धिः । 'बुद्धिर्मनीषा धिषणा'

लघुदीपिका ।

चिदन्तके' इति वैजयन्ती । 'एकतः सर्वतो योगे शेषार्थे कर्म चेक्ष्यते' इति द्वितीया । 'निर्णिक्तं शोधितं मृष्टम्' । लास्यलीला नृत्यक्रीडा । 'लीला विलासक्रिययोः' । चर्चितं प्रलिप्तम् । 'चर्चा चार्चिक्यमालेपे' इति वैजयन्ती । रसितं शब्दः । 'रस शब्दने' । 'बुद्धिर्मनीषा धिषणा' । जनान्ते जनपदमध्ये ।

नाय्य, अन्तरङ्गनरशतैर्यथेष्टदृष्टान्तरालं सरः क्रियेत, रक्षा च तीरात्रिंशद्दण्डान्तराले सैनिकजनेन सादरं रचनीया । कस्तत्र तज्जानाति यच्छिद्रेणारयश्चिकीर्षन्ति' इति । तत्तस्य हृदयहारि जातम् । तदधिकृतैश्च तत्र कृत्ये रन्ध्रदर्शनासहैरिच्छां च राज्ञः कन्यकातिरागजनितां नितान्तनिश्चलां निश्चित्यार्थ एष न निषिद्धः । तथास्थितश्च तदासादनदृढतराशयश्च स आख्यायत—'राजन्, अत्र ते जनान्ते चिरं स्थितम्, न चैकत्र चिरस्थानं नः शस्तम् । कृतकृत्यश्चेह न द्रष्टास्मि । यस्य ते राष्ट्रे ग्रासाद्यासादितं तस्य ते किंचिदनाचर्य कार्थं गतिरार्यगर्ह्या' इति । तत्रैतच्चिरस्थानस्य कारणम् । तच्चाद्य सिद्धम् । गच्छ गृहान् । यथार्हजलेन हृद्यगन्धेन स्नातः सितस्रगङ्गरागः शक्तिसदृशेन दानेनाराधितधरणितलतैतिलगणस्तिलस्नेहसिक्तयष्ट्यग्रग्रथितवर्तिकाग्निशिखासहस्रग्रस्तनैशान्धकारराशिरागत्यार्थसिद्धये यतेथाः' इति । स किल कृतज्ञतां दर्शयन्—'असिद्धिरेषा सिद्धिः, यदसंनिधिरीहार्याणाम् । कष्टा चेयं निःसङ्गता या निरागसं दासजनं

पदचन्द्रिका ।

शब्दस्य षोडशहस्तप्रमाणमिति व्याख्यातं वृत्तिकृता । दृष्टान्तरालं ज्ञातमध्यम् । हृदयहारि चित्तहारि । तदासादनं तच्छब्देन सरस्तस्यासादनमधिष्ठापनम् । अतिशयेन दृढ आशयः यस्य । रागो रञ्जनं रागातिशयः । एकत्रैकस्मिन्स्थाने । शस्तं प्रशस्तम् । गृहान् । 'गृहाः पुंसि च भूम्न्येव' इत्यमरः । स्रङ्माला । अङ्गरागश्चर्चा । धरणितलं पृथ्वीतलं तत्र तैतिलगणः देवगणः । तिलस्नेहं तिलतैलम् । वर्तिका वस्त्रकृतनालिका । भाषया 'पलीता' इति ख्याता । तस्यामग्निशिखा अग्निज्वाला । ग्रस्तो गिलितः । नैशान्धकारराशी रात्रितिमिरसमूहः । अर्थसिद्धयेऽर्थप्राप्त्यर्थम् । यतेथाः । 'यती प्रयत्ने' अस्माल्लिङि मध्यमपुरुषैकवचनम् । असंनिधिरसंनिधानम् । आर्याणां श्रेष्ठानाम् । निरागसं निरपराधम् । गरीयसां गुरूणाम् । निरा-

भूषणा ।

इत्यमरः । रन्ध्रदर्शनासहैः । रन्ध्रदर्शननिपुणैरित्यर्थः । जनान्ते जनपदमध्ये । 'जनो जनपदे प्रोक्तः' इति हलायुधः । शस्तं प्रशस्तम् । धरणितलतैतिला भूदेवाः ।

लघुदीपिका ।

'जनो जनपदे प्रोक्तः' इति हलायुधः । शस्तं प्रशस्तम् । धरणितलतैतिला भूदेवाः ।

पाठा०-१ 'तिष्ठामि'. २ 'धरणितैतिलः'. ३ 'चेलाञ्चलखण्डकाग्निशिखासहस्रास्त'.

त्याजयति । न च निषेधनीया गरीयसां गिरः' इति स्नानाय गृहानयासीत् । अहं च निर्गत्य निर्जने निशीथे सरस्तीररन्ध्रनिलीनः सन्नीषच्छिद्रदत्तकर्णः स्थितः । स्थिते चार्धरात्रे कृतयथादिष्टक्रियः स्थानस्थानरचितरक्षः स राजा जालिकजनानानीय निराकृतान्तःशल्यं शङ्काहीनः सरःसलिलं सलीलगतिरगाहत । गतं च कीर्णकेशं संहतकर्णनासं सरसस्तलं हास्तिनं नक्रलीलया नीरातिनिलीनयायी तं तथाशयानं कंदरायां कन्थया न्यग्रहीषम् । खरतरकालदण्डघट्टनातिचण्डैश्च करचरणघातैर्निर्दयदत्तनिग्रहः क्षणेनैकेनाजहात्स चेष्टाम् । ततश्चाकृष्य तच्छरीरं छिद्रे निधाय नीरान्निरयासिषम् ।

सद्यः संगतानां च सैनिकानां तदत्यचित्रीयताकारान्तरग्रहणम् । गजस्कन्धगतः सितच्छत्रादिसकलराजचिह्नराजितश्चण्डतरदण्डिदण्डताडनत्रस्तजनदत्तान्तरालया राजवीथ्या यातस्तां निशां रसनयननिरस्तनिद्रारतिरनैषम् । नीते च जनाक्षिलक्ष्यतां लाक्षारस-

पदचन्द्रिका ।

कृतं दूरीकृतम् । सरःसलिलं सरोजलम् । अगाहत । आलोडयामासेत्यर्थः । कीर्णकेशं प्रसृतकेशम् । संहतकर्णनासम् । कर्णौ च नासा च कर्णनासम् । प्राण्यङ्गत्वादेकवद्भावः । पश्चात्संहतपदेन समासः । नासा नासिका । हास्तिनं हस्तिप्रमाणम् । 'पुरुषहस्तिभ्यामण् च' (५।२।३८) । अतिनिलीनतया यातीति निलीनयायी कन्थया प्रावरणेन । 'कन्था प्रावरणान्तरे' इति विश्वः । खरतरस्तीक्ष्णः । कालदण्डो यमदण्डः । चण्डैः कठिनैः । निग्रहो निकारः । अजहात् तत्याजेत्यर्थः । 'ओहाक् त्यागे' ॥

सैनिकानां सेनाचराणाम् । आकारान्तरग्रहणमन्याकारप्राप्तिः । गजस्कन्धगतो हस्तिमस्तकगतः । चण्डतरा अतिप्रचण्डाः । दण्डिनो दण्डधराः । अन्तरालमभ्यन्तरम् । राजवीथ्या । राजमार्गेणेत्यर्थः । निशां रात्रिम् । रसः क्रीडारसः । निरस्ता त्यक्ता । निद्रारतिर्निद्रासुखम् । जनाक्षीणि लोकनेत्राणि तेषां लक्ष्यतां

भूषणा ।

'तैतिलौ देवकालिङ्गौ' । हास्तिनं हस्तिप्रमाणम् । 'पुरुषहस्तिभ्यामण् च' (५।२।३८) इति पक्षेऽणि 'संयोगादिश्च' (६।४।१६६) इतीनोऽणि प्रकृतिभावः । हस्तिप्रमाणस्य

लघुदीपिका ।

'तैतिलौ देवकालिङ्गौ' । हास्तिनं हस्तिप्रमाणम् । 'पुरुषहस्तिभ्यामण् च' (५।२।३८) । नीरं जलम् । अत्यचित्रीयतातिचित्रमभवत् । निशान्तं निशाशेषम् । अजेय-

पाठा०–१ 'हस्तिनक्र'. २ 'कंधरायां न्यग्रहीषम्'. ३ 'निशान्तं निशाशेषम्'.

दिग्धदिग्गजशिरःसदृक्षे शक्रदिगङ्गनारत्नादर्शेऽर्कचक्रे कृतकरणीयः किरणजालकरालरत्नराजिराजितराजार्हासनाध्यासी यथासदृशाचारदर्शिनः शङ्कायन्त्रिताङ्गान्संनिधिनिषादिनः सहायानगादिषम्—'दृश्यतां शक्तिरार्षी, यत्तस्य यतेरजेयस्येन्द्रियाणां संस्कारेण नीरजसा नीरजसांनिध्यशालिनि सहर्षालिनि सरसि सरसिजदलसंनिकाशच्छायस्याधिकतरदर्शनीयस्याकारान्तरस्य सिद्धिरासीत् । अद्य सकलनास्तिकानां जायेत लज्जानतं शिरः । तदिदानीं चन्द्रशेखरनरकशासनसरसिजासनादीनां त्रिदशेशानां स्थानान्यत्यादररचितनृत्यगीताद्याराधनानि क्रियन्ताम् । ह्रियन्तां च गृहादितः क्लेशनिरसनसहान्यर्थिसार्थैर्धनानि' इति । आश्चर्यरसातिरेकहृष्टदृष्टयस्ते 'जय जगदीश, जयेन सातिशयं दश दिशः स्थगयन्निजेन यशसादिराजयशांसि' इत्यसकृदाशास्यारचयन्यथादिष्टाः क्रियाः । स चाहं दयितायाः सखीं हृदयस्थानीयां शशाङ्कसेनां कन्यकां कदाचित्कार्यान्तरागतां रहस्याचक्षिषि—'कच्चिदयं जनः कदाचिदासीदृष्टः' इति । अथ सा हर्षकाष्ठां गतेन हृदयेनेषदालक्ष्य दशनदीधितिलतां लीलालसं लासयन्ती, ललिताञ्चित-

## पदचन्द्रिका ।

ग्राहकत्वम् । दिग्धं लिप्तम् । शक्रदिगङ्गना प्राची दिक् । राजार्हं राजयोग्यम् । संनिधौ निषीदन्ति ते संनिधिनिषादिनः । आर्षी ऋषेरियं तथा । यतेर्मुनेः । अजेयस्य जेतुमशक्यस्य । **अद्येति** । नास्तिकानां मिथ्येतिवादिनाम् । अर्थिसार्थैर्याचकसमाजैः । क्लेशानां निरसनं दूरीकरणं तत्सहानि समर्थानि । आश्चर्यरसातिरेक आश्चर्यरसाधिक्यम् । त आदिष्टाः । जयेन सातिशयमतिशयेन सहवर्तमानं यथा तथा । आदिराजस्य मनोः यशांसि । असकृद्वारंवारम् । आशास्य प्रशस्य । आरचयन् । चक्रुरित्यर्थः । क्रियाः कार्याणि । हृदयस्थानीयां प्राणभूताम् । **अथेति** । हर्षकाष्ठां हर्षमर्यादाम् । ईषदल्पम् । दशनदीधितयो दन्तमयूखाः । कर एव

## भूषणा ।

या लीला तया । न तु ह्रस्वप्रमाणस्य लीलया । तथा सति प्रतीकारसंभवापत्तेः । इन्द्रियाणामजेयस्य । जितेन्द्रियस्येत्यर्थः । स्थगयन् । नीरं जलम् । अजेयस्या-

## लघुदीपिका ।

स्याविधेयस्य । 'वश्यः प्रणेयो निभृतविनीतप्रश्रिताः समाः' । नर्म परिहासः ।

पाठा०–१ 'यत्नैः'. २ 'स्वतेजसातिशय्य'.

करशाखान्तरितदन्तच्छदकिसलया हर्षजलक्लेदजर्जरनिरञ्जनेक्षणा रचिताञ्जलिः 'नितरां जाने यदि न स्यादैन्द्रजालिकस्य जालं किंचिदेतादृशम् । कथं चैतत् । कथय' इति स्नेहनिर्यत्रणं शनैरगादीत् । अहं चास्यै कार्त्स्न्येनाख्याय, तदाननसंक्रान्तेन संदेशेन संजनय्य सहचर्या निरतिशयं हृदयाह्लादम् । ततश्चैतया दयितया निरर्गलीकृतातिसत्कृतकलिङ्गनाथन्यायदत्तया संगत्यान्ध्रकलिङ्गराजराज्यशासी तस्यास्यारिणा लिलङ्घयिषितस्याङ्गराजस्य साहाय्यकाया लघीयसा साधनेनागत्यात्र ते सखिजनसंगतस्य यादृच्छिकदर्शनानन्दराशिलङ्घितचेता जातः' इति ।

तस्य तत्कौशलं स्मितज्योत्स्नाभिषिक्तदन्तच्छदः सह सुहृद्भिरभिनन्द्य 'चित्रमिदं महामुनेर्वृत्तम् । अत्रैव खलु फलितमतिकष्टं तपः । तिष्ठतु तावन्नर्म । हर्षप्रकर्षस्पृशोः प्रज्ञासत्त्वयोर्दृष्टमिह स्वरूपम्' इत्यभिधाय, पुनः 'अवतरतु भवान्' इति बहुश्रुते विश्रुते विकचराजीवसदृशं चिक्षेप देवो राजवाहनः ।

**इति श्रीदण्डिनः कृतौ दशकुमारचरिते मन्त्रगुप्तचरितं नाम सप्तम उच्छ्वासः ।**

---

पदचन्द्रिका ।

शाखा । हर्षजलमानन्दाश्रु । क्लेद आर्द्रीभावः । जर्जरं विशीर्णम् । 'इन्द्रध्वजे विशीर्णे च जर्जरं परिचक्षते' इति शाश्वतः । निरञ्जनं कज्जलरहितम् । ईक्षणं नेत्रम् । स्नेहनिर्यन्त्रणं स्नेहवद्धम् । कार्त्स्न्येन कृत्स्नस्य भावस्तेन । समग्रेणेत्यर्थः । तदाननसंक्रान्तेन तन्मुखोद्गतेन । संदेशेन वाचिकेन । संजनय्योत्पाद्य । आन्ध्रश्चासौ कलिङ्गराजश्चेति तस्य राज्यं तच्छास्तीति शासी । यादृच्छिकं प्रसङ्गजातम् । आनन्दराशिः सुखसमूहः ॥

स्मितज्योत्स्ना हास्यदीप्तिः । दन्तच्छद ओष्ठः । सुहृद्भिः सखिभिः । नर्म परीहासः । 'द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च' इत्यमरः । हर्षः संतोषः । प्रकर्ष आधिक्यम् । प्रज्ञा बुद्धिः । 'बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः' इत्यमरः । सत्त्वं बलम् । बहुश्रुते बहुनेकं श्रुतं शास्त्रादिश्रवणं यस्येति । विश्रुत एतन्नाम्नि । राजीवं कमलम् । सदृशं समानम् ॥ **इति श्रीदशकुमारटीकायां पदचन्द्रिकाभिधायां सप्तम उच्छ्वासः ॥**

भूषणा ।

विधेयस्य । 'वश्यः प्रणेयो निभृतविनीतप्रश्रिताः । समाः' इत्यमरः । नर्म परिहासः । 'द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च' इत्यमरः ॥

**इति श्रीदशकुमारटीकायां भूषणाभिधायां सप्तम उच्छ्वासः ॥**

लघुदीपिका ।

'द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च' ॥ **इति सप्तम उच्छ्वासः ॥**

---

पाठा०-१ 'कलिङ्गराज्यं कलिङ्गनाथे न्यासम्'.

## अष्टमोच्छ्वासः ।

अथ सोऽप्याचचक्षे—'देव, मयापि परिभ्रमता विन्ध्याटव्यां कोऽपि कुमारः क्षुधा तृषा च क्लिश्यन्नक्लेशार्हः कचित्कूपाभ्याशेऽष्टवर्षदेशीयो दृष्टः । स च त्रासगद्गदमगदत्—'महाभाग, क्लिष्टस्य मे क्रियतामार्य, साहाय्यकम् । अस्य मे प्राणापहारिणीं पिपासां प्रतिकर्तुमुदकमुदञ्चन्निह कूपे कोऽपि निष्कलो ममैकशरणभूतः पतितः । तमलमस्मि नाहमुद्धर्तुम्' इति । अथाहमभ्येत्य व्रतत्या कयापि वृद्धमुत्तार्य, तं च बालं वंशनालीमुखोद्धृताभिरद्भिः फलैश्च पञ्चषैः शरक्षेपोच्छ्रितस्य लकुचवृक्षस्य शिखरात्पाषाणपातितैः प्रत्यानीतप्राणवृत्तिमापाद्य, तरुतलनिषण्णस्तं जरन्तमब्रवम्—'तात, क एष बालः, को वा भवान्, कथं चेयमापदापन्ना ?' इति । सोऽश्रुगद्गदमगदत्—'श्रूयतां महाभाग,

### पदचन्द्रिका ।

इदानीं विश्रुतनामा कुमारः स्वचरितं वक्तुमुपक्रमते । अथानन्तर्यार्थे । स विश्रुतनामा । अक्लेशार्हः । क्लेशार्हो नेत्यर्थः । कूपो जलाशयः । अभ्याशे समीपे । अष्टवर्षदेशीयः । 'कल्पब्देश्यदेशीयरः' (वा०) इति शब्दान्न्यूनार्थे । साहाय्यकं सहायस्य भावस्तथा । पिपासा पातुमिच्छा । प्रतिकर्तुं दूरीकर्तुम् । उदञ्चन्निष्कासयन् । कोऽप्यविदितकुलनामा । निष्कलः स्थविरः । वृद्ध इति यावत् । 'निष्कलः स्थविरः समौ' इति वैजयन्ती । **अथेति** । व्रतत्या वल्ल्या । 'वल्ली तु व्रततिर्लता' इत्यमरः । रज्जुस्थानीकृतयेति भावः । वंशनाली वेणुः । पञ्चषैः पञ्च षड्वा । 'संख्ययाव्यय–' (२।२।२५) इत्यादिना बहुव्रीहिः । 'बहुव्रीहौ संख्येये डजबहुगणात्' (५।४।७३) इति समासान्तो डच् । शरक्षेपो बाणगमनं ततोऽप्युच्छ्रितस्य । उच्चस्येत्यर्थः । लकुचवृक्षस्य । 'लकुचो लिकुचो डहुः' इत्यमरः । भाषया 'बडहर' इति प्रसिद्धः । जरन्तं वृद्धम् । **श्रूयतामिति** । जनपदो देशः । 'नीवृज्जनपदो देशविषयौ तूपव-

### भूषणा ।

अष्टवर्षदेशीयः । 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' (वा०) । असमाप्ताष्टवर्षः । निष्कलो वृद्धः । 'निष्कलः स्थविरः समौ' इत्यमरः । वंशनाली वेणुदण्डः । पञ्चषाः पञ्च षड्वा । 'संख्ययाव्यय–' ( २।२।२५ ) इत्यादिना बहुव्रीहिः । 'बहुव्रीहौ संख्येये डजबहुगणात्' (५।४।७३) इति समासान्तो डच् । लिकुचः । 'लकुचो लिकुचो डहुः'

### लघुदीपिका ।

'निष्कलः स्थविरः समौ' इति वैजयन्ती । वंशनाली वेणुदण्डः । पञ्चषाः पञ्च षड् वा । 'संख्ययाव्यय–' (२।२।२५) इत्यादिना बहुव्रीहिः । 'बहुव्रीहौ संख्येये डजबहुगणात्' (५।४।७३) इति समासान्तो डच् । लिकुचः । 'लकुचो लिकुचो डहुः' ।

पाठा०–१ 'लिकुच'.

विदर्भो नाम जनपदः तस्मिन्भोजवंशभूषणम्, अंशावतार इव धर्मस्य, अतिसत्त्वः, सत्यवादी, वदान्यः, विनीतः, विनेता प्रजानाम्, रञ्जितभृत्यः, कीर्तिमान्, उदग्रो बुद्धिमूर्तिभ्याम्, उत्थानशीलः, शास्त्रप्रमाणः, शक्यभव्यकल्पारम्भी, संभावयिता बुधान्, प्रभावयिता सेवकान्, उद्भावयिता बन्धून्, न्यग्भावयिता शत्रून्, असंबद्धप्रलापेष्वदत्तकर्णः, कदाचिदप्यवितृष्णो गुणेषु, अति-

पदचन्द्रिका ।

तेनम्' इत्यमरः । अंशेनैकदेशेन । अत्यन्तं सत्त्वं यस्येति । अतिसत्त्वो महाबलः । सत्त्वं गुणो वा । वदान्यो बहुप्रदः । 'स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे' इत्यमरः । विनीतो नम्रः । विनेता शिक्षाकर्ता । रञ्जिता अनुरागं प्रापिता भृत्याः सेवका येनेति । उदग्र उन्नतः । बुद्धिर्मतिः । मूर्तिः कायः । उत्थानशीलः पौरुषस्वभावः । 'उत्थानं पौरुषे तन्त्रे संनिविष्टोद्गमेऽपि च' इति विश्वः । शास्त्रमेव प्रमाणं यस्येति स तथा । शक्यभव्यकल्पारम्भी । 'शक्यं तु सुकरं कर्म भव्यं तु जनलालितम् । कल्पं युक्तं न भङ्गेन सदैवैष समाचरेत् ॥' इति दिवाकरः । शक्यं स्वसाध्यम् । भव्यं कुशलम् । 'भावुकं भविकं भव्यं कुशलं क्षेमम्' इत्यमरः । कल्पो विधिः । 'कल्पो न्याय्ये विधौ शास्त्रे संवर्ते ब्रह्मवासरे । कल्पद्रुमे विकल्पे च' इति महीपः । संभावयिता संभावना मानधनादिनेति । एवं सर्वत्र । असंबद्धाः परस्पराmिलिताः प्रलापा निरर्थकवचनानि । 'प्रलापोऽनर्थकं वचः' इत्यमरः । अदत्तकर्णः । अश्रोतेत्यर्थः । अवितृष्णो न विगता तृष्णा यस्येति स तथा । नदीष्णो निपुणः । 'नदीष्णाभिज्ञनिष्ठचूतप्रवीणनिपुणा अपि' इति कोशः । नदीपूर्वात् स्नातेरातोऽनुप-

भूषणा ।

इत्यमरः । जरन्तं वृद्धम् । **अतिसत्त्व इत्यादि** । वदान्यो बहुप्रदः । विनेता नम्रताकारकः । उदग्र उन्नतः । उत्थानशीलः पौरुषस्वभावः । 'उत्थानं पौरुषम्' इत्यमरः । शक्यभव्यकल्पारम्भी । शक्यश्च भव्यश्च कल्पश्चारम्भस्तच्छीलः । 'शक्यं तु सुकरं कर्म भव्यं तु जनलालितम् । कल्पं युक्तं न भङ्गेन सदैवैष समाचरेत् ॥' इति दिवाकरः । प्रभावयिता प्रभुत्वकारयिता । अवितृष्णः । सर्वदापि गततृष्ण एवेति भावः । नदीष्णो निपुणः । 'नदीष्णाभिज्ञनिष्णातप्रवीणनिपुणा अपि' । नदीपूर्वात् स्नातेः

लघुदीपिका ।

जरन्तं वृद्धम् । 'जीर्यतेरतृन्' ( ३।२।१०४ ) इत्यतृन् । वदान्यो बहुप्रदः । स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे' । उत्थानशीलः पौरुषस्वभावः । 'उत्थानं पौरुषे तन्त्रे संनिविष्टोद्गमेऽपि च' । शक्यभव्यकल्पारम्भी । शक्यश्च भव्यश्च कल्पश्चारम्भस्तच्छीलः । 'शक्यं तु सुकरं कर्म भव्यं तु जनलालितम् । कल्पयुक्तेन भङ्गेन सदैवैष समाचरेत् ॥' इति दिवाकरः । प्रभावयिता प्रभूकुर्वन् । नदीष्णो निपुणः । 'नदीष्णाभिज्ञनिष्णातप्रवीणनिपुणा अपि' । नदीपूर्वात् स्नातेः 'आतोऽनुपसर्गे कः' ( ३।२।३ ) इति कप्रत्ययः 'निनदीभ्यां स्नातेः कौशले' ( ८।३।८९ )

नदीष्णः कलासु, नेदिष्ठो धर्मार्थसंहितासु, स्वल्पेऽपि सुकृते सुतरां प्रत्युपकर्ता, प्रत्यवेक्षिता कोशवाहनयोः, यत्नेन परीक्षिता सर्वाध्यक्षाणाम्, उत्साहयिता कृतकर्मणामनुरूपैर्दानमानैः, सद्यः प्रतिकर्ता दैवमानुषीणामापदाम्, षाड्गुण्योपयोगनिपुणः, मनुमार्गेण प्रणेता चातुर्वर्ण्यस्य, पुण्यश्लोकः, पुण्यवर्मा नामासीत् । स पुण्यैः कर्मभिः प्राप्य पुरुषायुषम्, पुनरपुण्येन प्रजानामगण्यतामरेषु । तदनन्तरमनन्तवर्मा नाम तदायतिरवनिमध्यतिष्ठत् । स सर्वगुणैः समृद्धोऽपि दैवाद्दण्डनीत्यां नात्याद्दतोऽभूत् । तमेकदा

पदचन्द्रिका ।

सर्गे कप्रत्ययः । 'निनदीभ्यां स्नातेः कौशले' (८।३।८९) इति मूर्धन्यादेशः । नेदिष्ठो निकटवर्ती । 'अन्तिकबाढयोर्नेदसाधौ' (५।४।६३) इति साधु । प्रत्यवेक्षा गवेषणम् । कोशो भाण्डागारम् । वाहनान्यश्वादीनि । प्रतिकर्ता प्रतीकारकर्ता । षाड्गुण्यं षड्गुणाः । चातुर्वर्ण्यादिपाठात्स्वार्थे ष्यञ्प्रत्ययः । 'संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः । षड्गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः' इत्यमरः । चतुर्वर्णा एव चातुर्वर्ण्यम् । पुण्यश्लोकः पवित्रकीर्तिः । 'पद्ये यशसि च श्लोकः' इत्यमरः । पुण्यवर्मेति नाम राजा । **स इति** । प्राप्य । जीविलेत्यर्थः । पुरुषायुषं पूर्णमायुः । अपुण्येन । पापेनेत्यर्थः । अगण्यत । 'गण संख्याने' । अमरेषु देवेषु । तदनन्तरम् । पुण्यवर्मोत्तरमित्यर्थः । **अनन्तवर्मेति** । तदायतिस्तस्मात्पुण्यवर्मण आयतिः प्रभावो यस्येति स तथा । 'स्यात्प्रभावेऽपि चायतिः' इत्यमरः । दैवाददृष्टात् । दण्ड-

भूषणा ।

कौशले इति मूर्धन्यादेशः नेदिष्ठः । 'नेदिष्ठमन्तिकतमम्' इत्यमरः । प्रत्यवसितोपभोक्ता । षाड्गुण्यं षड्गुणाः । चातुर्वर्ण्यादिपाठात्स्वार्थे ष्यञ् । गुणाः संध्यादयः । 'संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः । षड्गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः ॥' इत्यमरः । चतुर्वर्णा एव चातुर्वर्ण्यम् । पुण्यश्लोकः पुण्ययशाः । 'पद्ये यशसि च श्लोकः' इत्यमरः । अतिसत्त्व इत्यादिनयवर्णने कामन्दकः—'न्यायेनार्जनमर्थस्य वर्धनं रक्षणं तथा । सत्पात्रप्रतिपत्तिश्च राजवृत्तं चतुर्विधम् ॥ नयविक्रमसंपन्नः सूत्थानश्चिन्तयेच्छ्रियम् । नयस्य विनयो मूलं विनयः शास्त्रनिश्चयः ॥ शास्त्रं प्रज्ञा धृतिर्दाक्ष्यं प्रागल्भ्यं धारयिष्णुता । उत्साहो वाग्मिता दार्ढ्यमापत्क्लेश-

लघुदीपिका ।

इति मूर्धन्यः । षाड्गुण्यं षड्गुणाः । चातुर्वर्ण्यादिपाठात् स्वार्थे ष्यञ्प्रत्ययः । 'संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः । षड्गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः' । चतुर्वर्णा एव चातुर्वर्ण्यम् । पुण्यश्लोकः पुण्ययशाः । 'पद्ये

पाठा०-१ 'प्रत्यवसिता'.

रहसि वसुरक्षितो नाम मन्त्रिवृद्धः, पितुरस्य बहुमतः, प्रगल्भवागभाषत—'तात, सर्वैवात्मसंपदभिजनात्प्रभृत्यन्यूनैवात्रभवतो लक्ष्यते । बुद्धिश्च निसर्गपट्वी कलासु नृत्यगीतादिषु चित्रेषु च काव्यविस्तरेषु प्राप्तविस्तरा तवेतरेभ्यः प्रतिविशिष्यते । तथाप्यसावप्रतिपद्यात्मसंस्कारमर्थशास्त्रेषु, अनग्निसंशोधितेव हेमजातिर्नातिभाति बुद्धिः । बुद्धिशून्यो हि भूभृदत्युच्छ्रितोऽपि परैरध्यारुह्यमाणमात्मानं न चेतयते । न च शक्तः साध्यं साधनं वा विभज्य

---

पदचन्द्रिका ।

नीत्यां राजनीत्याम् । रहस्येकान्ते । प्रगल्भा प्रौढा वाग्यस्येति स तथा । तातेति संबोधनम् । अभिजनात् । 'कुलान्यभिजनान्वयौ' इत्यमरः । अतिशयेन पटुः पट्वी । विस्तरो विस्तृतत्वम् । इतरेभ्योऽन्येभ्यः । प्रतिविशिष्यते । विशिष्टा भवतीत्यर्थः । **तथापीति** । हेमजातिः सुवर्णजातिः । बुद्धिशून्यो बुद्धिहीनः । अत्युच्छ्रितोऽपि महानपि । परैः शत्रुभिः । अध्यारुह्यमाणमासाद्यमानम् । न चेतयते । विना संज्ञानेन स्मारयत इत्यर्थः । साध्यं कार्यम् । साधनं कारणम् ।

भूषणा ।

सहिष्णुता ॥ प्रभावः शुचिता मैत्री त्यागः सत्यं कृतज्ञता । कुलं शीलं दमश्चेति गुणाः संपत्तिहेतवः ॥' इति । याज्ञवल्क्योऽपि–'ब्राह्मणेषु क्षमी स्निग्धेष्वजिह्मः क्रोधनोरिषु । स्याद्राजा भृत्यवर्गे च प्रजासु च यथा पिता ॥' इति । प्राण्य जीवित्वा 'अन प्राणने' । पुरुषायुषम् । 'अचतुर–' (५।४।७७) इति सूत्रे निपातितम् । तदायतिस्तत्प्रभावः । 'स्यात्प्रभावेऽपि चायतिः' इत्यमरः । आत्मसंपत् पुरुषगुणाः । ते च समनन्तरमेव 'शास्त्रं प्रज्ञा–' इति श्लोकद्वयेन दर्शिताः । संस्कारो वासना । अर्थशास्त्रेष्वान्वीक्षिक्यादिषु । साध्यं विपक्षभूतम् । साधनं सहायभूतम् । योगक्षेमाराधनाय । अलब्धलाभो योगः । लब्धरक्षणं क्षेमः । तयोराराधनाय साधनाय । 'अप्राप्तप्रापणं योगः क्षेमः प्राप्तस्य रक्षणम् । द्वयं च साधयेद्भूपः प्रजानां विधिवत्प्रदः ॥' इति । 'आराधनं साधने स्यादवाप्तौ तोषणेऽपि च' इत्यमरः । स्थितिर्मर्यादा । संकिरेयुः संकीर्णाः कुर्युः । **आत्मानं स्वामिनमित्यादि** । तथा च याज्ञवल्क्यः—'अरक्ष्यमाणाः

लघुदीपिका ।

यशसि च श्लोकः' । प्राण्य जीवित्वा । तदायतिस्तत्प्रभावः । 'स्यात्प्रभावेऽपि चायतिः' । आत्मसंपत्पुरुषगुणाः । 'क्षेत्रज्ञ आत्मा पुरुषः' । 'संपदापानत्रिया स्यात्समृद्धिगुणयोरपि (?)' इति हलायुधः । 'संस्कारो वासना मता' । अर्थशास्त्रेष्वान्वीक्षिक्यादिषु । साध्यं विपक्षभूतम् । योगक्षेमयोराराधनाय । अलब्धलाभो योगः, लब्धपरिरक्षणं क्षेमः । यदाहुः–'अप्राप्तप्रापणं योगः क्षेमः प्राप्तस्य रक्षणम् । द्वयं च साधयेद्भूपः प्रजानां विधिवत्प्रदः ॥' इति । 'आराधनं साधने स्यादवाप्तौ तोषणेऽपि च'

वर्तितुम् । अयथावृत्तश्च कर्मसु प्रतिहन्यमानः स्वैः परैश्च परिभूयते । न चावज्ञातस्याज्ञा प्रभवति प्रजानां योग[1]क्षेमाराधनाय । अतिक्रान्तशासनाश्च प्रजा यत्किंचनवादिन्यो यथाकथंचिद्वर्तिन्यः सर्वाः स्थितीः संकिरेयुः । निर्मर्यादश्च लोको लोकादितोऽमुतश्च स्वामिनमात्मानं च भ्रंशयते । आगमदीपदृष्टेन खल्वध्वना सुखेन वर्तते लोकयात्रा । दिव्यं हि चक्षुर्भूतभवद्भविष्यत्सु व्यवहितविप्रकृष्टादिषु च विषयेषु शास्त्रं नामाप्रतिहतवृत्ति । तेन हीनः सतोरप्यायतविशालयोर्लोचनयोरन्ध एव जन्तुरर्थदर्शनेष्वसामर्थ्यात् । अतो विहाय बाह्यविद्यास्वभिषङ्गमागमय दण्डनीतिं कुलविद्याम् । तदर्थानुष्ठानेन चावर्जितशक्तिसिद्धिरस्खलितशासनः शाधि चिरमुदधिमेखलामुर्वीम्' इति ।

## पदचन्द्रिका ।

कर्मसु कार्येषु । स्वैरात्मीयैः । परिभूयते पराभवं प्राप्यते । अवज्ञातस्यावगणितस्य । योगोऽलभ्यलाभः । क्षेमं लब्धसंरक्षणम् । 'अप्राप्तप्रापणं योगः क्षेमं प्राप्तस्य रक्षणम् । द्वयं च साधयेद्भूपः प्रजानां विधिवत्प्रदः ॥' इति । इतो लोकादिहलोकात् । अमुतः परलोकात् । भ्रंशयते पातयति । आगम एव दीपस्तेन दृष्टेन । अध्वना मार्गेण । लोकयात्रा लोकस्थितिः । अप्रतिहतवृत्ति न प्रतिहता कुण्ठिता वृत्तिर्यस्येति । तेन । शास्त्रचक्षुषेत्यर्थः । हीनो रहितः । सतोर्विद्यमानयोः । विशालयोर्महतोः । बाह्यविद्यास्वितरविद्यासु । अभिषङ्गं सङ्गम् । 'अभिषङ्गस्त्वभिभवे सङ्ग आक्रोशनेऽपि च' इति वैजयन्ती । आगमय । प्रापयेत्यर्थः । तदर्थानुष्ठानेन । कुलविद्यानुष्ठानेनेत्यर्थः । आवर्जिता प्राप्ता । अस्खलितशासनोऽहताज्ञः । शाधि शिक्षय । 'शासु अनुशिष्टौ' ॥

## भूषणा ।

कुर्वन्ति यत्किंचित्किल्बिषं प्रजाः । तस्मात्तु नृपतेरर्धं यस्माद्गृह्णात्यसौ करान्' । कामन्दकोऽपि—'अहिंसा सूनृता वाणी सत्यं शौचं दया क्षमा । वर्णिनां लिङ्गिनां चैव सामान्यो धर्म उच्यते ॥ स्वर्गानन्त्याय धर्मोऽयं सर्वेषां वर्णिलिङ्गिनाम् । तस्याभावे च लोकोऽयं संकरान्नाशमाप्नुयात् ॥ सर्वस्यास्य यथान्यायं भूपतिः संप्रवर्तकः । तस्याभावे धर्मनाशस्तदभावे जगच्च्युतिः ॥' इति । चाणक्योऽपि—'राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः । लोकास्तमनुवर्तन्ते यथा राजा तथा प्रजा ॥' इति । अभिषङ्गः सङ्गः । 'अभिषङ्गस्त्वभिभवे सङ्ग आक्रोशनेऽपि च' इति वैजयन्ती ।

## लघुदीपिका ।

स्थितिर्मर्यादा । अभिषङ्गः सङ्गः । 'अभिषङ्गस्त्वभिभवे सङ्ग आक्रोशनेऽपि च' इति

---

पाठा०–१ 'क्षेमसाधनाय'.

एतदाकर्ण्य 'स्थान एव गुरुभिरनुशिष्टम्। तथा क्रियते' इत्यन्तःपुरमविशत्। तां च वार्तां पार्थिवेन प्रमदासंनिधौ प्रसङ्गेनोदीरितामुपनिशम्य समीपोपविष्टश्चित्तानुवृत्तिकुशलः प्रसादवित्तो गीतनृत्यवाद्यादिष्ववाह्यो बाह्यनारीपरायणः पटुरयन्त्रितमुखो बहुभङ्गिविशारदः परमर्मान्वेषणपरः परिहासयिता परिवादरुचिः पैशुन्यप्रक्लिन्डः सचिवमण्डलादप्युत्कोचहारी सकलदुर्नयोपाध्यायः कामतन्त्रकर्णधारः कुमारसेवको विहारभद्रो नाम स्मितपूर्वं व्यज्ञपयत्—'देव, दैवानुग्रहेण यदि कश्चिद्भाजनं भवति विभूतेः, तमकस्मादुच्चावचैरुपप्रलोभनैः कदर्थयन्तः स्वार्थं साधयन्ति धूर्ताः। तथा हि। केचित्प्रेत्य किल लभ्यैरभ्युदयातिशयैराशामुत्पाद्य, मुण्डयित्वा शिरः, बद्ध्वा दर्भरज्जुभिः, अजिनेनाच्छाद्य, नवनीतेनोपलिप्य, अनशनं

### पदचन्द्रिका ।

**एतदिति** । स्थाने युक्तमित्यर्थः । अनुशिष्टमुपदिष्टम् । चित्तानुवृत्तिर्मनोगतं तत्र कुशलः । प्रसादवित्तो राजप्रसादेन ख्यातः । गीतं गानम् । नृत्यं नर्तनम् । वाद्यं चतुर्विधम् । अबाह्योऽभिन्नः । तन्मय इति भावः । अयन्त्रितमुखोऽनियतमुखः । बहुभाषीत्यर्थः । 'भङ्गी स्याद्वक्रभाषितम्' इति वैजयन्ती । परमर्म परगोप्यम् । परिवादो निन्दा । उत्कोचो गुप्तद्रव्यादिग्रहणम् । दुर्नयानामुपाध्यायोऽध्यापकः । कामतन्त्रे कामशास्त्रे । कर्णधारो नाविकः । कुमारसेवकः कुमारावस्थायाः प्रभृति सेवकः । कदर्थयन्तो निन्दन्तः । **तथा हीति** । प्रेत्य जन्मान्तरे, 'प्रेत्यामुत्र भवान्तरे' इत्यमरः । किलेत्यलीके । अजिनेन चर्मणा । अनशनं निराहारम् । पाषण्डिनोऽसंबद्धवादिनः । सर्वतोभ्रष्टा इत्यर्थः ।

### भूषणा ।

शाधि शिक्षय । 'शासु अनुशिष्टौ' । 'शा हौ' ( ६।४।३५ ) इति शादेशः । स्थाने युक्तम् । 'युक्ते द्वे सांप्रतं स्थाने' इत्यमरः । प्रसादवित्तः प्रसादेन प्रसिद्धः । 'वित्तविज्ञातविश्रुताः' इत्यमरः । भङ्गी वक्रोक्तिः । 'भङ्गी स्याद्वक्रभाषितम्' इति वैजयन्ती । उत्कोच उपदा । कर्णधारो नाविकः । 'कर्णधारस्तु नाविकः' इत्यमरः । कुमारसेवकः कुमारावस्थायाः प्रभृति सेवकः । प्रेत्य जन्मान्तरे । 'प्रेत्यामुत्र भवान्तरे' इत्यमरः ।

### लघुदीपिका ।

वैजयन्ती । शाधि शिक्षय । 'शासु अनुशिष्टौ' । 'हुझल्भ्यो हेर्धिः' (६।४।१०१)। 'शा हौ' ( ६।४।३५ ) इति शासेः शादेशः । प्रसादवित्तो राजप्रसादप्रसिद्धः । 'भङ्गी स्यादल्पभाषितम्' इति वैजयन्ती । 'कर्णधारस्तु नाविकः' । कुमारसेवकः कुमारावस्थायाः प्रभृति सेवकः । प्रेत्यामुत्र भवान्तरे' । किलापरमार्थे ।

च शाययित्वा, सर्वस्वं स्वीकरिष्यन्ति। तेभ्योऽपि घोरतराः पाषण्डिनः पुत्रदारशरीरजीवितान्यपि मोचयन्ति। यदि कश्चित्पटुजातीयो नास्मै मृगतृष्णिकायै हस्तगतं त्यक्तुमिच्छेत्। तमन्ये परिवार्याहुः—'एकामपि काकिणीं कार्षापणलक्षमापादयेम, शस्त्राद्दते सर्वशत्रूनघातयेम, एकशरीरिणमपि मर्त्यं चक्रवर्तिनं विदधीमहि, यद्यस्मदुद्दिष्टेन मार्गेणाचर्यते' इति। स पुनरिमान्प्रत्याह—'कोऽसौ मार्गः?' इति। पुनरिमे ब्रुवते—'ननु चतस्रो राजविद्यास्त्रयी वार्तान्वीक्षिकी दण्डनीतिरिति। तासु तिस्रस्त्रयीवार्तान्वीक्षिक्यो महत्यो मन्दफलाश्च तास्तावदासताम्। अधीष्व तावद्दण्डनीतिम्। इयमिदानीमाचार्यविष्णुगुप्तेन मौर्यार्थे षड्भिः श्लोकसहस्रैः संक्षिप्ता। सैवेयमधीत्य सम्यगनुष्ठीयमाना यथोक्तकर्मक्षमा' इति। स 'तथा' इत्यधीते। शृणोति च। तत्रैव जरां गच्छति। तत्तु किल शास्त्रं शास्त्रान्तरानुबन्धि। सर्वमेव वाङ्मयमविदित्वा न तत्त्वतोऽधिगंस्यते। भवतु कालेन बहुनाल्पेन वा तदर्थाधिगतिः। अधिगतशास्त्रेण चादावेव पुत्रदारमपि न विश्वास्यम्। आत्मकुक्षेरपि कृते तण्डुलैरियद्भिरियानोदनः संपद्यते। इयत ओदनस्य पाकायैतावदिन्धनं पर्याप्तमिति मानोन्मानपूर्वकं देयम्। उत्थितेन च राज्ञा क्षालिता-

---

पदचन्द्रिका।

पटुजातीयः। 'प्रकारवचने जातीयर्' (५।३।६९) कार्षापणम्। 'कार्षापणः कार्षिके स्यात्पणषोडशकेऽपि च' इति विश्वः। एकशरीरिणम्। एकाकिनमित्यर्थः। मर्त्यं चक्रवर्तिनं मनुष्यसमूहवर्तिनम्। आचर्यते। आचरतीत्यर्थः। अधीष्व। अङ्गीकुर्वित्यर्थः। मौर्यो राजा। वाङ्मयं वाग्जालम्। समूहार्थे मयट्। 'तुलावच्छेद उन्मा-

भूषणा।

किल निश्चये। पाखण्डिनः सर्वतोऽपभ्रष्टाः सर्ववेषधराः। पटुजातीयश्चतुरसदृशः। 'प्रकारवचने जातीयर्' (५।३।६९)। आहुः कथयन्ति। 'ब्रुवः पञ्चानाम्' (३।४।८४) इति लटो झेरुसादेशे ब्रुव आहादेशः। काकिणी विंशद्वराटकाः। 'वराटकानां दशकद्वयं यत्सा काकिणी' इति भास्कराचार्यः। कार्षापणलक्षणम्। 'कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः' इति मनुः। वाङ्मयं वाग्जालम्। मानोन्मानम्।

लघुदीपिका।

पाखण्डः। सर्वतोपभ्रष्ट इत्यर्थः। पटुजातीयः। 'प्रकारवचने जातीयर्' (५।३।६९)। 'कार्षापणः कार्षिकः स्यात्'। पलम्। वाङ्मयं वाग्जातम्। समूहार्थे 'समूहवच्च बहुषु' (५।४।२२) इति मयट्। 'तुलावच्छेद उन्मानो मानः

---

पाठा०-१ 'पाखण्डिनः'.

क्षालिते मुखे मुष्टिमर्धमुष्टिं वा[1]भ्यन्तरीकृत्य कृत्स्नमायव्ययजातमह्नः प्रथमेऽष्टमे वा भागे श्रोतव्यम् । शृण्वत एवास्य द्विगुणमपहरन्ति तेऽध्यक्षधूर्ताश्चत्वारिंशतं चाणक्योपदिष्टानाहरणोपायान्सहस्रधात्मबुद्ध्यैव ते विकल्पयितारः । द्वितीयेऽन्योन्यं विवदमानानां प्रजानामाक्रोशाद्दह्यमानकर्णः कष्टं जीवति । तत्रापि प्राड्विवाकादयः स्वेच्छया जयपराजयौ विदधानाः[2], पापेनाकीर्त्या च भर्तारमात्मानं चार्थैर्योजयन्ति । तृतीये स्नातुं भोक्तुं च लभते । भुक्तस्य यावदन्धःपरिणामस्तावदस्य विषभयं न शाम्यत्येव । चतुर्थे हिरण्यप्रतिग्रहाय हस्तं प्रसारयन्नेवोत्तिष्ठति । पञ्चमे मन्त्रचिन्तया महान्तमायासमनुभवति । तत्रापि मन्त्रिणो मध्यस्था[3] इवान्योन्यं मिथः संभूय, दोषगुणौ दूतचारवाक्यानि शक्याशक्यतां देशकालकार्यावस्थाश्च स्वेच्छया विपरिवर्तयन्तः, स्वपरमित्रमण्डलान्युपजीवन्ति । बाह्याभ्यन्तरांश्च कोपान्गूढमुत्पाद्य प्रकाशं प्रशमयन्त इव स्वामिनमवशमवगृह्णन्ति । षष्ठे स्वैर-

पदचन्द्रिका ।

नो मानः प्रस्थादिभिः कृतः' इति वैजयन्ती । मुष्ट्यर्धमुष्टी परिमाणविशेषौ । आक्रोशात् । 'यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम् । तत्र लाक्षारणा यः स्यादाक्रोशो मैथुनं प्रति' इत्यमरः । ते प्राड्विवाकाः । अन्धःपरिणाम ओदनपरिपाकः । महान्तमायासं क्लेशम् । संभूय मिलित्वा । दूताः सेवकाः । चारा गूढदूताः । स्वपरमित्राणां मण्डलम् । द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं संबध्यते । स्वमण्डलं परमण्डलं मित्रमण्डलं वेति व्याख्या । प्रशमयन्तः शान्तिं प्रापयन्तः ।

भूषणा ।

'तुलावच्छेद उन्मानो मानः प्रस्थादिभिः कृतः' इति वैजयन्ती । मुष्टिमर्धमुष्टिं चेति उभौ परिमाणविशेषौ । 'शुक्तिभ्यां च पलं ज्ञेयं मुष्टिरष्टमिका तथा' । जनपदायव्ययशोधको मुष्टिः । ग्रामस्य शोधकोऽर्धमुष्टिः । शृण्वत एव । अनादरे षष्ठी । मध्यस्थायिनः भाषया 'वकील' पदवाच्याः । दूतचारवाक्यानि । अशक्यतां चेत्यर्थः । **स्वपरेति** । स्वस्य परस्य शत्रोश्च मित्रमण्डलान्यप्युपजीवन्त्याश्रयन्ते तेभ्योऽपि गृह्णन्ति

लघुदीपिका ।

प्रस्थादिभिः कृतः' इति वैजयन्ती । मुष्टिमर्धमुष्टिं चेति मुष्ट्यर्धमुष्टी परिमाणविशेषौ । अथवा कृत्स्नानामायव्ययप्रदेशोऽवशिष्टमात्रगणनायुक्तोऽर्धमुष्टिः । कृत्स्नावान्तरस्थलविषय आयादिचतुर्विधगणनायुक्तो मुष्टिः । शृण्वत एवास्य । षष्ठी-

**पाठा०**–१ 'च'. २ 'विवादधनाः'. ३ 'मध्यस्थायिनः'.

विहारो मन्त्रो वा सेव्यः । सोऽस्यैतावान्स्वैरविहारकालो यस्य तिस्रस्त्रिपादोत्तरा नाडिकाः । सप्तमे चतुरङ्गबलप्रत्यवेक्षणप्रयासः । अष्टमेऽस्य सेनापतिसखस्य विक्रमचिन्ताक्लेशः । पुनरुपास्यैव संध्याम्, प्रथमे रात्रिभागे गूढपुरुषा द्रष्टव्याः । तन्मुखेन चातिनृशंसाः शस्त्राग्निरसप्रणिधयोऽनुष्ठेयाः । द्वितीये भोजनानन्तरं श्रोत्रिय इव स्वाध्यायमारभेत । तृतीये तूर्यघोषेण संविष्टश्चतुर्थपञ्चमौ शयीत किल । कथमिवास्याजस्रचिन्तायासविह्वलमनसो वराकस्य निद्रासुखमुपनमेत । पुनः षष्ठे शास्त्रचिन्ताकार्यचिन्तारम्भः । सप्तमे तु मन्त्रग्रहो दूताभिप्रेषणानि च । दूताश्च नामोभयत्र प्रियाख्यानलब्धानर्थान्वीतशुल्कबाधवर्त्मनि वणिज्यया वर्धयन्तः, कार्यमविद्यमानमपि लेशेनोत्पाद्यानवरतं भ्रमन्ति । अष्टमे पुरोहितादयोऽभ्येत्यैनमाहुः—'अद्य दृष्टो दुःस्वप्नः । दुःस्था ग्रहाः । शकुनानि चाशुभानि । शान्तयः क्रियन्ताम् । सर्वमस्तु सौवर्णमेव होमसाधनम् । एवं सति कर्म गुणवद्भवति । ब्रह्मकल्पा इमे ब्राह्मणाः । कृतमेभिः स्वस्त्ययनं कल्याणतरं भवति ।

---

पदचन्द्रिका ।

नृशंसा घातुकाः । शस्त्रप्रणिधिः शस्त्रमारकः । अग्निप्रणिधिरग्निदायकः । रसप्रणिधिर्विषदायकः । 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इति मेदिनी । संविष्टः कृतशयनः । 'संवेशः शयने स्थाने सत्समारोहणेऽपि च' इत्यजयः । अजस्रं निरन्तरम् । 'नित्यानवरताजस्रम्' इत्यमरः । विह्वलमनसो व्याकुलचित्तस्य । शास्त्रचिन्ता कार्यचिन्ता चेति । वीता शुल्कबाधा यत्रेति क्रियाविशेषणम् । वणिज्यया वणिक्कर्मणा । अनवरतं निरन्तरम् । अभ्येत्यैकीभूत्वा । गुणवत्सार्थकम् । ब्रह्मकल्पा ब्रह्मन्यूनाः । स्वस्त्ययनं क्षेमप्रमाणम् । उपांश्वेकान्ते

भूषणा ।

सदह्यतामाक्षेपः । **तिस्र इत्यादि** । त्रिंशद्घटिकात्मकदिवसस्याष्टमो भागः । शस्त्राग्निप्रणिधयः शस्त्राग्निभ्यां हन्तारो गुप्तदूताः । **श्रोत्रिय इवेति** । श्रोत्रिय इव । उपनमेत समीपमागच्छेत् । वीता शुल्कस्य 'मासूल' पदवाच्यस्य बाधा यत्र तत्तथा । राजकीयमित्युक्त्वा बाधामपहरन्ति । शास्त्रज्ञसमाज्ञातो नीतिशास्त्रज्ञत्वेन कीर्तितः ।

लघुदीपिका ।

चानादरे । रसप्रणिधिर्विषदायकः । 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' संविष्ट आरूढशयनः । 'संवेशः शयनेऽपि स्यात्तत्समारोहणेऽपि च' इत्यजयः । स्वस्त्ययनं क्षेमप्रापणम् । 'स्वस्त्याशीःक्षेमपुण्यादौ' । अरिषड्वर्गः कामक्रोधलोभ-

---

पाठा०—१ 'शस्त्राग्निप्रणिधयः'. २ 'चिन्तायासैर्विह्वलमनसो वा कस्य'.

ते चामी कष्टदारिद्या बह्वपत्या यज्वानो वीर्यवन्तश्चाद्याप्यप्राप्तप्रतिग्रहाः । दत्तं चैभ्यः स्वर्ग्यमायुष्यमरिष्टनाशनं च भवति' इति बहु बहु दापयित्वा तन्मुखेन स्वयमुपांशु भक्षयन्ति । तदेवमहर्निशमविहितसुखलेशमायासबहुलमविरलकदर्थनं च नयतोऽनयज्ञस्यास्तां चक्रवर्तिता, स्वमण्डलमात्रमपि दुरारक्ष्यं भवेत् । शास्त्रज्ञसमाज्ञातो हि यद्ददाति, यन्मानयति, यत्प्रियं ब्रवीति, तत्सर्वमतिसंधातुमित्यविश्वासः । अविश्वास्यता हि जन्मभूमिरलक्ष्म्याः । यावता च नयेन[1] विना न लोकयात्रा स्वलोके[2] एव सिद्धः । नात्र शास्त्रेणार्थः । स्तनंधयोऽपि हि तैस्तैरुपायैः स्तनपानं जनन्या लिप्सते । तदपास्यातियन्त्रणामनुभूयन्तां यथेष्टमिन्द्रियसुखानि । येऽप्युपदिशन्ति 'एवमिन्द्रियाणि जेतव्यानि, एवमरिषड्वर्गस्त्याज्यः, सामादिरुपायवर्गः स्वेषु परेषु चाजस्रं प्रयोज्यः, संधिविग्रहचिन्तयैव नेयः कालः, स्वल्पोऽपि सुखस्यावकाशो न देयः' इति, तैरप्येभिर्मन्त्रिबकैर्युष्मत्तश्चौर्यार्जितं धनं दासीगृहेष्वेव भुज्यते । के चैते वराकाः । येऽपि मन्त्रकर्कशास्तन्त्रकर्तारः शुक्राङ्गिरसविशालाक्षबाहुदन्तिपुत्रपराशरप्रभृतयस्तैः किमरिषड्वर्गो जितः, कृतं वा तैः शास्त्रानुष्ठानम् । तैरपि हि प्रारब्धेषु कार्येषु दृष्टे सिद्ध्यसिद्धी । पठन्तश्चापठद्भिरतिसंधीयमाना

पदचन्द्रिका ।

चक्रवर्तिता राष्ट्रव्यापकता । जन्मभूमिरुत्पत्तिस्थानम् । अरिषड्वर्गः कामक्रोधलोभमोहमदमात्सर्याणि । सामादिरुपायाः ( यवर्गः ) । 'सामदाने भेददण्डावित्युपायचतुष्टयम्' इत्यमरः । मन्त्रिबकैर्मन्त्रिकुत्सितैः । 'कुत्सितानि कुत्सनैः' ( २।१।५३ ) इति समासः । 'अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः । शठो मिथ्याविनीतश्च बकवृत्तिचरो द्विजः' इति मनुः । मन्त्रकर्कशा मन्त्रकठिनाः । तन्त्रकर्तारः कर्म-

भूषणा ।

'यशः कीर्तिः समज्ञा च' इत्यमरः । **तैरपीति** । अर्जनेऽन्वयः । तैरपि प्रारब्ध इति तृतीयायाः प्रारम्भेऽन्वयः । **अतिसंधीयमाना इति** । मिलिता अनुयायिन

लघुदीपिका ।

मोहमदमात्सर्याणि । मन्त्रिबकैर्मन्त्रिकुत्सितैः । 'कुत्सितानि कुत्सनैः' इति समासः । 'अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः । शठो मिथ्याविनीतश्च बक-

पाठा०–१ 'नयेन विना न याति लोकयात्रा'; 'समयेन विना लोकयात्रा'. २ 'लोकतः'.

बहवः। नन्विदमुपपन्नं देवस्य, यदुत सर्वलोकस्य वन्द्या जातिः, अयातयामं वयः, दर्शनीयं वपुः, अपरिमाणा विभूतिः। तत्सर्वं सर्वाविश्वासहेतुना सुखोपभोगप्रतिबन्धिना बहुमार्गविकल्पनात्सर्वकार्येष्वमुक्तसंशयेन तन्त्रावापेन मा कृथा वृथा। सन्ति हि ते दन्तिनां दश सहस्राणि, हयानां लक्षत्रयम्, अनन्तं च पादातम्। अपि च पूर्णान्येव हैमरत्नैः कोशगृहाणि। सर्वश्चैष जीवलोकः समग्रमपि युगसहस्रं भुञ्जानो न ते कोष्ठागाराणि रेचयिष्यति। किमिदमपर्याप्तं यदन्यार्जितायायासः क्रियते। जीवितं हि नाम जन्मवतां चतुःपञ्चान्यहानि। तत्रापि भोगयोग्यमल्पाल्पं वयःखण्डम्। अपण्डिताः पुनरर्जयन्त एव ध्वंसन्ते। नार्जितस्य वस्तुनो लवमप्यास्वादयितुमीहन्ते। किं बहुना राज्यभारं भारक्षमेष्वन्तरङ्गेषु भक्तिमत्सु समर्प्य, अप्सरःप्रतिरूपाभिरन्तःपुरिकाभी रममाणो गीतसंगीतपानगोष्ठीश्च यथर्तु बध्नन्यथार्हं कुरु शरीरलाभम्' इति पञ्चाङ्गीमृष्टभूमिरञ्जलिचुम्बितचूडश्चिरमशेत। प्राहसीच्च प्रीतिफुल्ललोचनोऽन्तःपुरप्रमदाजनः। जननाथश्च सस्मितम्—'उत्तिष्ठ,

---

### पदचन्द्रिका।

कर्तारः। प्रारब्धेष्वारम्भितेषु। अयातयाममजीर्णम्। नवमित्यर्थः। अपरिमाणेयत्तारहिता। विभूतिरैश्वर्यम्। तन्त्रावापेन। 'तन्त्रं स्वराष्ट्रचिन्ता स्यादावापस्त्वरिचिन्तनम्' इति। सन्तीति क्रियापदम्। हीति निश्चये। त इति। तवेत्यर्थः। पादातं पत्तिसंहतिः। कोशगृहाणि भाण्डागाराणि। कोष्ठागाराणि धान्यसंचयगृहाणि। 'पुंसि कोष्ठोऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा' इति कोशः। अन्यार्जितं परकीयम्। वयःखण्डमायुष्यलेशम्। अपण्डिता नीचजनाः। अन्तःपुरिकाभिः स्त्रीभिः। यथार्हम्। वीप्सायां यथाशब्दः। पञ्चाङ्गी पञ्चानामङ्गानां समाहारस्तथा। 'द्विगोः' (४।१।२१) इति ङीप्। 'जानू बाहुद्वयं मूर्धा पञ्चाङ्गम्' इत्युत्पलिनी।

### भूषणा।

इति यावत्। तन्त्रावापो नीतिविचारः। पण्डिताः पुनश्च नीतिशास्त्रज्ञाः। **पञ्चाङ्गीमृष्टेति**। पञ्चभिरङ्गैर्मृष्टा स्पृष्टेत्यर्थः। जननाथश्चातिष्ठत। **उत्तिष्ठतेति**। यूयमिति

### लघुदीपिका।

वृत्तिचरो द्विजः॥' इति मनुः। अयातयाममजीर्णम्। तन्त्रावापेन। 'तन्त्रं स्वराष्ट्रचिन्तायामावापस्त्वरिचिन्तम्'। पादातं पत्तिसमूहः। कोष्ठागाराणि। 'पुंसि कोष्ठोऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा'। यथार्हम्। वीप्सायां यथाशब्दः। पञ्चाङ्गी पञ्चानामङ्गानां समाहारः। 'जानू बाहुद्वयं मूर्धा पञ्चाङ्गमिति कथ्यते' इत्युत्पलः।

---

**पाठा०—१ 'तन्त्रावापेनैव'. २ 'यथार्थम्'. ३ 'स्पृष्ट'. ४ 'उत्तिष्ठत उत्तिष्ठत'.**

ननु हितोपदेशाद्गुरवो भवन्तः । किमिति गुरुत्वविपरीतमनुष्ठितम्' इति तमुत्थाप्य क्रीडानिर्भरमतिष्ठत् । अथैषु दिनेषु भूयोभूयः प्रस्तुतेऽर्थे प्रेर्यमाणो मन्त्रिवृद्धेन वचसाभ्युपेत्य मनसैवाचित्तज्ञ इत्यवज्ञातवान् । अथैवं मन्त्रिणो मनस्यभूत्—'अहो मे मोहाद्बालिश्यम् । अरुचितेऽर्थे चोदयन्नर्थीवाक्षिगतोऽहमस्य हास्यो जातः । स्पष्टमस्य चेष्टानामायथापूर्व्यम् । तथा हि । न मां स्निग्धं पश्यति, न स्मितपूर्वं भाषते, न रहस्यानि विवृणोति, न हस्ते स्पृशति, न व्यसनेष्वनुकम्पते, नोत्सवेष्वनुगृह्णाति, न विलोभनवस्तूनि प्रेषयति, न मत्सुकृतानि प्रगणयति, न मे गृहवार्तां पृच्छति, न मत्पक्ष्यान्प्रत्यवेक्षते, न मामासन्नकार्येष्वभ्यन्तरीकरोति, न मामन्तःपुरं प्रवेशयति । अपि च मामनर्हेषु कर्मसु नियुङ्क्ते, मदासनमन्यैरवष्टभ्यमानमनुजानाति, मद्वैरिषु विश्रम्भं दर्शयति, मदुक्तस्योत्तरं न ददाति, मत्समानदोषान्विगर्हयति, मर्मणि मामुपहसति, स्वमतमपि मया वर्ण्यमानं प्रतिक्षिपति, महार्हाणि वस्तूनि मत्प्रहितानि नाभिनन्दति, नयज्ञानां स्खलितानि मत्समक्षं मूर्खैरुद्घोषयति । सत्यमाह चाणक्यः—'चित्तज्ञानानुवर्तिनोऽनर्था अपि प्रियाः स्युः । दक्षिणा अपि तद्भावबहिष्कृता द्वेष्या भवेयुः' इति । तथापि का गतिः । अविनीतोऽपि न परि-

पदचन्द्रिका ।

अञ्जलिना चुम्बितः स्पृष्टश्चूडो मौलिर्येनेति तथा । **अथेति** । भूयोभूयो वारंवारम् । प्रस्तुतेऽर्थे प्रकृतकार्ये । मन्त्रिणः प्रधानस्य । अक्षिगतो द्वेष्यः । 'द्वेष्योऽक्षिगत उच्यते' इति हलायुधः । विलोभनवस्तु दानवस्तु । मत्पक्ष्यान्मदीयपक्षवर्तिनः । अवष्टभ्यमानं आक्रम्यमाणम् । विश्रम्भं विश्वासम् । प्रतिक्षिपति अवगणयति । महार्हाण्यमौल्यानि । नयज्ञानां नीतिविदाम् । चाणक्यो नीतिशास्त्रकर्ता । चित्तज्ञानमनुवर्तन्ते ते तथा । दक्षिणाः सरला अपि । तस्य चित्तस्य भावस्तद्भावस्तद्बहिष्कृताः । द्वेष्या वैरिणः । **तथापीति** । अविनीतोऽप्यत्युद्धतोऽपि । अपरित्य-

भूषणा ।

शेषः । मनसा वा । मनसा त्वित्यर्थः । तथापि का गतिः । उपायो नास्तीति भावः ।

लघुदीपिका ।

'द्वेष्योऽक्षिगत उच्यते' इति हलायुधः । विलोभनीयवस्तूनि आदरणीयवस्तूनि ।

पाठा०—१ 'मनसा वा'. २ 'अनुचिते'.

त्याज्यः पितृपैतामहैरस्मादृशैरयमधिपतिः । अपरित्यजन्तोऽपि कमुपकारमश्रूयमाणवाचः कुर्मः । सर्वथा नयज्ञस्य वसन्तभानोरश्मकेन्द्रस्य हस्ते राज्यमिदं पतितम् । अपि नामापदो भाविन्यः प्रकृतिस्थमेनमापादयेयुः । अनर्थेषु सुलभव्यलीकेषु क्वचिदुत्पन्नोऽपि द्वेषः सद्वृत्तमस्मै न रोचयेत् । भवतु भविता तावदनर्थः । स्तम्भितपिशुनजिह्वो यथाकथंचिदभ्रष्टपदस्तिष्ठेयम्' इति । एवंगते मन्त्रिणि, राजनि च कामवृत्ते, चन्द्रपालितो नामाश्मकेन्द्रामात्यस्येन्द्रपालितस्य सूनुरसद्वृत्तः पितृनिर्वासितो नाम भूत्वा, बहुभिश्चारणगणैर्बह्वीभिरनल्पकौशलाभिः शिल्पकारिणीभिरनेकच्छन्नकिंकरैश्च गूढपुरुषैः परिवृतोऽभ्येत्य विविधाभिः क्रीडाभिर्विहारभद्रमात्मसादकरोत् । अमुना चैव संक्रमेण राजन्यास्पदमलभत । लब्धरन्ध्रश्च स यद्यद्व्यसनमारभते तत्तथेत्यवर्णयत्—'देव, यथा मृगया ह्यौपकारिकी न तथान्यत् । अत्र हि व्यायामोत्कर्षादापत्सूपकर्ता दीर्घाध्वलङ्घनक्षमो जङ्घाजवः कफापचयादारोग्यैकमूलमाशयाग्निदीप्तिः, मेदोपकर्षादङ्गानां स्थैर्यकार्कश्याति-

---

पदचन्द्रिका ।

जन्त आश्रयन्तः । कमुपकारं प्रयोजनादिकम् । कर्मचयमित्यध्याहारः । किंविधा अश्रूयमाणवाचः । 'व्यलीकमपराधः स्यात्' इत्यमरः । स्तम्भिता स्तम्भं प्रापिता । 'पिशुनः सूचकः खलः' इति कोशः । अभ्रष्टपदोऽगताधिकारः । चारणगणैर्गायकसमूहैः । 'चारणो गायकः समौ' इति वैजयन्ती । शिल्पकारिणीभिश्चित्रकारिणीभिः । व्यसनम् । 'यस्माद्धि व्यस्यति श्रेयस्ततो व्यसनमुच्यते ।' इति कामन्दकः । 'स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यार्थदूषणे । दण्डपारुष्यमित्येतन्महाव्यसनसप्तकम् ॥' इति वैजयन्ती । मृगया पापर्द्धिः । औपकारिण्युपकारायार्हा सा तथा । व्यायामो हिण्डनम् । कफः श्लेष्मा । मेदोपक-

भूषणा ।

पितृपितामहानुयातैः इत्येव पाठः । सुलभमलीकं दुःखं येष्वित्यर्थः । आस्पदं

लघुदीपिका ।

व्यलीकमपराधः । 'चारणो गायकः समौ' इति वैजयन्ती । स्त्र्यादि सप्तव्यसनानि । 'स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यार्थदूषणे । दण्डपारुष्यमित्येतन्महाव्यसनसप्तकम् ॥' इति वैजयन्ती । कफः श्लेष्मा । आशयाग्निः । स्थैर्यं तु कर्मसह-

---

पाठा०—१ 'पितृपितामहानुयातैः'. २ 'अस्माकमुपसेवितमिदं राजकुलमीदृशश्चायमधिपतिः'. ३ 'सुलभालीकेषु'.

लाघवादीनि, शीतोष्णवातवर्षक्षुत्पिपासासहत्वम्, सत्त्वानामवस्थान्तरेषु चित्तचेष्टितज्ञानम्, हरिणगवलगवयादिवधेन सस्यलोपप्रतिक्रिया, वृकव्याघ्रादिघातेन स्थलपथशल्यशोधनम्, शैलाटवीप्रदेशानां विविधकर्मक्षमाणामालोचनम्, आटविकवर्गविश्रम्भणम्, उत्साहशक्तिसंधुक्षणेन प्रत्यनीकवित्रासनमिति बहुतमा गुणाः । द्यूतेऽपि द्रव्यराशेस्तृणवत्त्यागादनुपमानमाशयौदार्यम्, जयपराजयानवस्थानाद्धर्षविषादयोरविधेयत्वम्, पौरुषैकनिमित्तस्यामर्षस्य वृद्धिः, अक्षहस्तभूम्यादिगोचराणामत्यन्तदुरुपलक्ष्याणां कूटकर्मणामुपलक्षणादनन्तबुद्धिनैपुण्यम्, एकविषयोपसंहाराच्चित्तस्यातिचित्रमैकाग्र्यम्, अध्यवसायसहचरेषु साहसेष्वतिरतिः, अतिकर्कशपुरुषप्रतिसंसर्गादनन्यधर्षणीयता, मानावधारणम्, अकृपणं च शरीरयापनमिति । उत्तमाङ्गनोपभोगेऽप्यर्थधर्मयोः सफलीकरणम्, पुष्कलः पुरुषाभिमानः, भावज्ञानकौशलम्, अलोभक्लिष्टमाचेष्टितम्, अखिलासु कलासु वैचक्षण्यम्, अलब्धोपलब्धि-

पदचन्द्रिका ।

र्षात् मेदो धातुः । 'मेदोवृद्ध्यभावादङ्गानि लघूनि भवन्ति' इति वैद्यकम् । वर्षो वृष्टिः । क्षुत्क्षुधा । पिपासा तृषा । सत्त्वानां प्राणिनाम् । चित्तस्य मनसः । चेष्टितस्य तत्क्रियायाश्च । गवलोऽरण्यमहिषः । 'रजस्वलो वाहरिपुर्लुलायः' इत्यारभ्य 'रक्ताक्षः कासरो हंसकालीतनयकालिकौ' इत्यन्ततः 'अरण्यजोऽस्मिन्गवयः' इत्यभिधानचिन्तामणिवचनात् । गवयो गोसदृशः पशुः । 'गवयः स्याद्वनगवो गोसदृक्षोऽश्ववारणः' इत्यभिधानचिन्तामणिः । वृक ईहामृगः । 'कोक ईहामृगो वृकः' इत्यमरः । भाषया 'विग' इति प्रसिद्धः । शैलाटवी पर्वतवनम् । अटव्यां चरन्ति ते आटविकाः । विश्रम्भणं विश्वासोत्पादनम् । **द्यूतेऽपीति** । आशयौदार्यं चित्तौदार्यम् । कूटकर्मणाम् कपटकर्मणाम् । एकविषयोपसंहारात्तदेकवृत्तित्वात् । चित्तस्य मनसः ऐकाग्र्यमेकाग्रस्य भावस्तथा । अध्यवसाय उद्योगः । साहसमद्भुतकर्म । अतिरतिः प्रीतिः । धर्षणीयताभिभवनीयत्वम् । **उत्तमाङ्गनोपभोग इति** । पुष्कलः श्रेयान् 'श्रेयान् श्रेष्ठः पुष्कलः स्यात्' इत्यमरः । भावश्चित्ताभिप्रायः । ज्ञानं ग्रन्थादिविषयम् । विचक्षणस्य भावो वैचक्षण्यम् ।

भूषणा ।

प्रतिष्ठाप्रयोजनकं स्थानममात्यत्वादिरूपम् । आटविकानां पशूनां विश्वासः । आशयौदार्यमाशयः चित्तम् । अध्यवसायो निश्चयः । मानावधारणमभिमाननिश्चयो

लघुदीपिका ।

नत्वम् । 'स्थैर्यं सत्कर्म संगतौ' इति वैजयन्ती । गवलो महिषः । धर्षणीयत्वमभि-

लब्धानुरक्षणरक्षितोपभोगभुक्तानुसंधानरुष्टानुनयादिष्वजस्रमभ्युपायरचनया बुद्धिवाचोः पाटवम्, उत्कृष्टशरीरसंस्कारात्सुभगवेषतया लोकसंभावनीयतया परं सुहृत्प्रियत्वम्, गरीयसी परिजनव्यपेक्षा, स्मितपूर्वाभिभाषित्वम्, उद्रिक्तसत्त्वता, दाक्षिण्यानुवर्तनम्, अपत्योत्पादनेनोभयलोकश्रेयस्करत्वमिति। पानेऽपि नानाविधरागभङ्गपटीयसामासवानामासेवनात्स्पृहणीयवयोव्यवस्थापनम्, अहंकारप्रकर्षादशेषदुःखतिरस्करणम्, अङ्गजरागदीपनादङ्गनोपभोगशक्तिसंधुक्षणम्, अपराधप्रमार्जनान्मनःशल्योन्मार्जनम्[1], अश्राव्यशंसिभिरनर्गलप्रलापैर्विश्वासोपबृंहणम्, मत्सराननुबन्धादानन्दैकतानता, शब्दादीनामिन्द्रियार्थानां सातत्येनानुभवः, संविभागशीलतया सुहृद्वर्गसंवर्गणम्[2], अनुपमानमङ्गलावण्यम्, अनुत्तराणि विलसितानि, भयार्तिहरणाच्च साङ्ग्रामिकत्वमिति। वाक्पारुष्यं दण्डो दारुणो दूषणानि चार्थानामेव यथावकाशमौपकारिकाणि। न हि मुनिरिव नरपतिरुपशमरतिरभिभवितुमरिकुल-

पदचन्द्रिका।

अलब्धोपलब्धिरप्राप्तप्राप्तिः। लब्धानुरक्षणं प्राप्तस्य पालनम्। भुक्तानुसंधानं भुक्तस्मृतिः। रुष्टस्यानुनयः, क्रुद्धस्य समाधानम्। बुद्धिवाचोर्मतिवचनयोः। पाटवं पटुत्वम्। उत्कृष्टो यः शरीरसंस्कारः। **पानेऽपीति**। आसवानां मद्यानाम्। अङ्गजो मदनः। राग इच्छा। दीपनं वृद्धिः। अङ्गनाः स्त्रियः। संधुक्षणमुद्द्योतनम्। अनर्गला यथेष्टा ये प्रलापा अनर्थकवचनानि तैः। मत्सरस्याननुबन्धादधारणात्। एकतानता। तत्परतेत्यर्थः। 'एकतानोऽनन्यवृत्तिः' इत्यमरः। सततस्य भावः सातत्यम्। संवर्गणं संयोजनम्। अनुपमानमसदृशम्। सङ्ग्रामे साधु साङ्ग्रामिकम्। परुषस्य भावः पारुष्यम्। औपकारिकाण्युपकार-

भूषणा।

निश्चिताभिमानः। अकृपणं दैन्यशून्यम्। **अपराधप्रमार्जनादिति**। परकृतापराधविस्मरणात्। **सातत्येनानुभव इति**। तदेकतानताविशदीकरणमेतत्। 'पानसमय आगतेभ्यो दीयन्त आसवाः' इति संप्रदायवशादत्र विभागशीलता। संवर्गणमेकीकरणम्। पाने गुणान्तरमाह—**वाक्पारुष्यमिति**। कर्मफलानि

लघुदीपिका।

भवनीयत्वम्। उत्कृष्टेषु संक्रन्दनादिनिमित्तेषु। 'एकतानोऽनन्यवृत्तिः'। संवर्गणं संयोजनम्। 'समाहर्ता जनाध्यक्षः स्वाम्युक्तो ग्रामनायकः' इति वैज-

**पाठा०**—१ 'प्रमार्जनान्मानशल्यो'. २ 'संवर्धनम्'.

